पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ।
ग्रहणीदीपनं श्रेष्ठं मारुतस्यानुलोमनम् ॥
अतीसारज्वरश्वासकामिलापाण्डुकासजित् ॥
बालस्य सर्वरोगेषु पूजितं बलवर्णदम् ।

रजन्यादिकं माक्षिकसर्पिषा लीढं ग्रहणीदीपनत्वादिगुणम् । श्रेयसी हस्तिपिप्पली ॥

बिल्वपेशीगजकणाधातकीलोध्रवालकम् ।
हन्ति लीढमतीसारं शिशोः क्षौद्रद्रुतं द्रुतम् ॥
त्रिफलाधातकीपुष्पपद्मबिल्वशलाटुभिः ।
सकृद्दृङ्गैर्घृतं सिद्धमुदरामयनाशनम् ॥
पथ्यासौवर्चलक्षारवेल्लव्योषाग्निहिङ्गुभिः ।
तिक्तया च घृतं सिद्धं समक्षीरं व्यपोहति ॥
शूलानाहगुदभ्रंशश्वासकासविळम्बिकाः ।

बिल्वपेश्यादिकं क्षौद्रेण द्रुतमालोडितं शिशोरतीसारं द्रुतं शीघ्रं हन्ति । बिल्वपेशी-बिल्वमध्यम् । गजकणा हस्तिपिप्पली । शेषं सुबोधम् । विळम्बिका मात्राशीतीयोक्ता ॥

समङ्गाधातकीलोध्रकुटन्नटबलाह्वयैः ।
महासहाक्षुद्रसहामुद्गबिल्वशलाटुभिः ॥
सकार्पासीफलैस्तोये साधितैः साधितं घृतम् ।
क्षारमस्तुयुतं हन्ति शीघ्रं दन्तोद्भवोद्भवान् ॥
विविधानामयानेतद्वृद्धकाश्यपनिर्मितम् ।

समङ्गादीनां क्वाथे यवक्षारमस्तुभ्यां युतं साधितं घृतं दन्तोद्भवोद्भवानामयान् विविधाननेकप्रकारान् शीघ्रं हन्ति । एतच्च वृद्धकाश्यपनिर्मितम् ॥

दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत् ॥
स्वयमप्युपशाम्यन्ति जातदन्तस्य यत् गदाः ।

दन्तोद्भेदोत्थेषु च रोगेषु बालं वैद्यो नातियन्त्रयेत् । कुत इत्याह । स्वयमित्यादि यस्माद्दन्तोद्भेदोत्था रोगा जातदन्तस्य स्वयमपि विनापि चिकित्सां शाम्यन्ति ॥

यावन्मासस्य यो जातस्तावद्वर्षस्य स द्विजः॥
पतति प्रायशोऽष्टानां तेषां पूर्वेषु सम्भवः ।

यावन्मासस्य बालस्य यो दन्तो जातः सदन्तस्तावद्वर्षस्यैव पतति । तेषां च वर्षाणामष्टानां पूर्ववर्षेषु प्रायः पुनः सम्भवः । अष्टवर्षादूर्ध्वं पतितदन्तानां पुनर्न सम्भवः । अस्य चार्थस्य व्यभिचारप्रदर्शनार्थं प्रायोग्रहणम् ॥

अत्यहःस्वप्नशीताम्बुश्लैष्मिकस्तन्यसेविनः ॥
शिशोः कफेन रुद्धेषु स्रोतस्सु रसवाहिषु ।
अरोचकः प्रतिश्यायो ज्वरः कासश्च जायते॥
कुमारः शुष्यति ततः स्निग्धशुक्लमुखेक्षणः ।

अत्यर्थमहःस्वप्नादिसेविनः शिशोः कफेन रुद्धेषु रसवाहिषु स्रोतस्वरोचकादयो जायन्ते । ततो रसस्यालाभेन स्निग्धशुक्लमुखनेत्रः कुमारः शुष्यति ॥

सैन्धवव्योषशार्ङ्गेष्ठापाठागिरिकदम्बकान् ॥
शुष्यतो मधुसर्पिर्भ्यां [illegible] योजयेत् ।
अशोकरोहिणीयुक्तं पञ्चकोलं च चूर्णितम् ॥
बदरीधातकीधात्रीचूर्णं वा सर्पिषा द्रुतम् ।

शुष्यतो बालस्यानन्तरोक्तेष्वरुच्यादिषु सैन्धवादिकमनेकप्रकारेण योजयेत् । गिरिकदम्बको भूकदम्बकः । अशोकरोहिण्या कटुरोहिण्या युक्तं पञ्चकोलं च चूर्णितं शुष्यतोऽरुच्यादिषु योजयेत् । बदर्यादिचूर्णं वा सर्पिषा द्रुतम् ॥

अश्वलिण्डरसक्षौद्रयुक्तां वा मधुयष्टिकाम् ।
द्विवार्ताकीफलरसं केवलं वाश्वविड्रसम् ॥
मधुना वा घनव्योषपाठामूर्वाशतावरी ।
सपयस्या पृथक्पर्णी घृतं वा माक्षिकान्वितम् ॥
स्थिरामरतरुव्योषद्विपुनर्नवसाधितम् ।

अथ वा मधुयष्टिकामश्वपुरीषरसमधुभ्यां युक्तां योजयेत् । अथ वा केवलमश्वविड्रसं द्विवार्ताकीफलरसयुतं योजयेत् । द्विवार्ताकी द्विबृहती । अथ वा पयस्यापृथक्पर्णीभ्यां युक्तं घनादिकं मधुना । पयस्या क्षीरिका । पृथक्पर्णी पृश्निपर्णी । अथ वा स्थिरादिसाधितं घृतं माक्षिकान्वितं योजयेत् ॥

स्थिरावचाद्विबृहतीकाकोळीपिप्पलीनतैः ।
निचुळोत्पलवर्षाभूभार्ङ्गीमुस्तैश्च कार्षिकैः ॥
सिद्धं प्रस्थार्धमाज्यस्य स्रोतसां शोधनं परम् ।
सिंह्यश्वगन्धासुरसकणागर्भं च तद्गुणम् ॥

स्थिरावचादिभिः कार्षिकैः प्रस्थार्धं घृतस्य सिद्धं बालस्य परं स्रोतसां शोधनम् । स्थिरा सालपर्णी । नतं तगरम् । निचुळं जलवेतसम् । वर्षाभूः पुनर्नवा । सिंह्यादिगर्भं घृतं तद्गुणं स्थिरादिघृतसमगुणम् । गर्भः पाकाय कल्कः । सिंही क्षुद्रबृहती ॥

यष्ट्याह्वपिप्पलीलोध्रपद्मकोत्पलचन्दनैः ।
तालीसशारिबाभ्यां च साधितं शोषजित् घृतम् ॥
रास्नामधूलिकाभार्ङ्गीपिप्पलीदेवदारुभिः ।
अश्वगन्धाद्विकाकोळीशृङ्ग्यर्षभकजीवकैः ॥
सूर्यपर्णीविलङ्गैश्च कल्कितैः साधितं घृतम् ।
शशोत्तमाङ्गनिर्यूहे शुष्यतः पुष्टिकृत् परम् ॥

यष्ट्याह्वादिभिः साधितं घृतं बालस्य शोषजित् । शशोत्तमाङ्गानां शशशिरसां निर्यूहे क्वाथे रास्नादिभिः कल्कितैः साधितं घृतं शुष्यतो बालस्य परं पुष्टिकृत् । मधूलिका गुडतृणः । स एव नृत्यकुण्डो मलिश्वकः । शृङ्गी कर्कटशृङ्गी ॥

वचावयस्थातगरकायस्थाचोरकैः शृतम् ।
बस्तमूत्रसुराभ्यां च तैलमभ्यञ्जने हितम् ॥

वचादिशृतं तैलं बालस्याभ्यञ्जने हितम् । प्रकरणाच्छुष्यतः । वयस्था आमलकम् । कायस्था हरीतकी । बस्तमूत्रं छागमूत्रम् ॥

द्वे बले तुम्बुरुच्छल्ली वचा गिरिकदम्बकः ।
सुरापिष्टः प्रदेहः स्यादधःकाये विशुष्यताम् ॥

शुष्यतां बालानां द्विबलादिकः सुरापिष्टोऽधःकाये विशुष्यतां प्रदेहः स्यात् । तुम्बुरुः तीक्ष्णत्वक् । गिरिकदम्बको भूकदम्बकः ॥

सिंहस्कन्दीसिंहवल्लीकरमर्दीत्रिकण्टकैः ।
भङ्गैः क्वाथः कुमाराणां शुष्यतां परिषेचनम् ॥

सिंहस्कन्द्यादिभिः क्वाथः शुष्यतां कुमाराणां परिषेचनम् । *सिंहस्कन्दी । सिंहवल्ली । करमर्दी । त्रिकण्टको गोक्षुरकः ॥

साशोकरोहिणीं कृष्णां मध्वाज्येन लिहन् जयेत् ।
शिशुः शोषं शरीरस्यससितच्छागदुग्धभुक् ॥

अशोकरोहिण्या युक्तां पिप्पलीं मधुसर्पिषा लिहन् सशर्करच्छागक्षीरभुक् शिशुः शरीरस्य शोषं जयेत् ॥

शुष्ककासे कुमारस्य धात्र्याः स्तन्यविशोधनः
माषयूषः प्रयोक्तव्यः सकृष्णो घृतभर्जितः ॥
मधुनातिविषाशृङ्गीपिप्पलीर्लेहयेच्छिशुम् ।
एकां वातिविषां कासज्वरच्छर्दिरुपद्रुतम् ॥
कासतृट्छर्द्यतीसारैरर्दितं लाजतर्पणम् ।
लाजतालीसपत्रं वा बीजानि कमलस्य वा ॥
लोध्रप्रियङ्गुकल्कं वा पाययेत्तण्डुलाम्भसा ।
शर्करामधुसंयुक्तं लाजकुस्तुम्बरीरजः ॥

शुष्ककासेत्यादिकं सुबोधम् । कासाद्युपद्रुतं शिशुमतिविषादिकं मधुना लेहयेत् । एकामेव वातिविषां मधुना लेहयेत् । अथ वा लाजतर्पणम् । अथ वा लाजतालीसपत्रमथ वा पद्मबीजम् । लोध्रादिकं तण्डुलोदकेन । लाजकुस्तुम्बर्यो रजः शर्करामधुयुक्तं लेहः ॥

बृहतीफलमूलत्वक्पिप्पलीग्रन्थिकैः कृतः ।
तवक्षीरीयुतैः क्वाथो मधुना हन्ति शीलितः ॥
छर्दिमूर्छाज्वरश्वासकासातीसारपीनसान् ।
पञ्चकोलद्विवार्ताकीमूलभार्ङ्गीतुकाद्वयाः ॥
क्षौद्राज्यलीढाः श्वसनकासपीनसरुक्छिदः ।
श्यामातिमुक्तातक्कारीकुसुमक्वाथसाधितम् ॥
यष्टीगर्भं घृतं तृष्णाहिध्माश्वासास्रपित्तनुत् ।

बृहतीफलादिभिः कृतः क्वाथो माक्षिकयुक्तः शीलितः छर्द्यादीन् हन्ति । फलादित्रयं बृहत्या विज्ञेयम् । पञ्चकोलादि क्षौद्राज्याभ्यां लीढं श्वसनादिजित् भवति । द्वयोर्वार्तक्योर्बृहतीकण्टकार्योर्मूलम् । श्यामादिक्वाथे मधुयष्टीकल्केन साधितं घृतं पानेन बालस्य तृष्णादिनुत् ॥

पीतं पीतं वमति यः स्तन्यं तं मधुसर्पिषा ।
द्विवार्ताकीफलरसं पञ्चकोलं च लेहयेत् ॥
पिप्पलीपञ्चलवणं कृमिजित् पारिभद्रकम् ।
तद्वल्लिह्यात्तथा व्योषं मषीं वा रोमचर्मणाम् ॥
लाभतः शल्यकश्वाविद्गोधर्श्यशिखिजन्मनाम्

यो बालः पीतं पीतं च स्तन्यं वमति तं बालं वैद्यो द्विवार्ताकीफलानां रसं पञ्चकोलयुक्तं मधुसर्पिषा लेहयेत् । तथा पिप्पल्यादिकं तद्वदिति मधुसर्पिषा लेहयेत् । पारिभद्रको निम्बः । तथा व्योषमपि मधुसर्पिषा लिह्यात् । अथ वा यथालाभं शल्यकादिजन्मनां रोम्णां चर्मणां च मषीं मधुसर्पिषा लिह्यात् ॥

खदिरार्जुनतालीसकुष्ठचन्दनजे रसे ।

सक्षीरं साधितं सर्पिर्वमथुं विनिच्छयति ॥
क्षीरीप्रवाळमधुकदर्भमूलबिसोत्पलैः ।
तृष्णादाहज्वरहरः कषायः ससितामधुः ॥
शर्कराडाडिमकणानागकेसरजीवकम् ।
लिहन्कुमारः क्षौद्रेण तृट्छर्दिभ्यां विमुच्यते

खदिरादीनां रसे काथे सक्षीरं सर्पिः साधितं बालस्य वमथुं छर्दिं विनियच्छति नाशयति । क्षीरीप्रवाळादीनां क्वाथः शर्करया मधुना च युक्तो बालस्य तृष्णादिहरः । क्षीरिणो वटादयः तेषां प्रवाळा अङ्कुराः । शर्करादिकं क्षौद्रेण लिहन् कुमारस्तृट्छर्दिभ्यां विमुच्यते ॥

लाजैः सचन्दनोशीरयष्टीमधुकपद्मकैः ।
लिप्तो धौतः स्तनः पीतो भ्रमतृड्दाहमोहहा

लाजैश्चन्दनादियुक्तैर्धात्र्याः स्तनो लिप्तः कालातिक्रमेण धौतः पीतो बालस्य तृट्भ्रमादिहा भवति ॥

अस्नेहलवणं पीत्वा संस्कृतं लावजं रसम् ।
सशर्करं विजयते बालो लङ्घनजान् गदान्॥

स्नेहलवणाभ्यां विना यः संस्कृतो लावमांसरसः तं सशर्करं पीत्वा बालो लङ्घनजान् गदान् कार्श्यभ्रमादीन् विजयते पराजयति ॥

विसर्पस्तु शिशोः प्राणनाशनो बस्तिशीर्षजः ।
पद्मवर्णो महापद्मनामा दोषत्रयोद्भवः ॥
शाखाभ्यां हृदयं याति हृदयाद्वा गुदं व्रजेत् ।

त्रिदोषकोपाच्छिशोर्बस्तौ वा शिरसि वा पद्मवर्णो विसर्पो भवति । तस्य च महापद्म इति नाम । स च शिशोः प्राणनाशनः । तस्य चिकित्सा न विद्यत इत्यर्थः । यश्चान्योऽपि विसर्पः शाखाभ्यो हृदयं व्रजेत् हृदयाद्वा गुदं सोऽपि प्राणनाशनः ॥

सदन्तो जायते यस्तु दन्ताः प्राग्यस्य चोत्तराः
कुर्वीत तस्मिन्नुत्पाते शान्तिं तं च द्विजातये ॥
दद्यात् सदक्षिणं बालं नैगमेषं च पूजयेत् ।

यस्तु बालः सदन्तो जातदन्त एव जायते । यस्य बालस्योत्तरा उपरिभवा दन्ताः प्राग्जायन्ते तस्मिंस्तथाविध उत्पाते वैद्यः सर्वरक्षार्थं शान्तिं होमादिना कुर्यात् । तं च बालं द्विजातये ब्राह्मणाय दक्षिणया सह दद्यात् । नैगमेषं च नाम्ना वक्ष्यमाणं ग्रहविशेषं वैद्यः पूजयेत् ॥

वत्सस्य मधुलाजानामापूर्यप्राङ्मुखो मुखम् ।
चुम्बेत्कुमारस्त्रीन् वारान् प्रायश्चित्तमिदं परम्
नावमारोहयेत् बालं स्नातं स्कन्धं गजस्य वा
भोजयेत् ब्राह्मणांश्चात्र पायसं मधुसर्पिषा ॥

प्राङ्मुखश्च कुमारो माक्षिकलाजपूर्णमुखस्य गोवत्सस्य मुखं त्रीन् वारांश्चुम्बेत् । एतद्धि परं प्रायश्चित्तमुत्पातफलदोषशमनम् । स्नातं च बालं नावं वा गजस्कन्धं वारोपयेत् । अत्र चोत्पाते ब्राह्मणान् पायसं मधुसर्पिषा भोजयेत् ॥

मातुः कुमारो गर्भिण्याः स्तन्यं प्रायोऽपिबन्नपि

कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः ।
युज्यते कोष्ठवृध्द्या च तमाहुः पारिगर्भिकम् ॥
रोगं परिभवाख्यं च युञ्ज्यात्तत्राग्निदीपनम् ।

मातुर्गर्भिण्याः कुमारः प्रायेण स्तन्यमपि-बन्नप्यपिशब्दात् पिबन्नपि कासादिभिर्युज्यते । तं चैवं रूपं रोगविशेषमाचार्याः पारिगर्भिकमित्याहुः । तत्र पारिगर्भिके सर्वं किञ्चिदग्निदीपनं युञ्ज्यात् ॥

पिप्पलीपिप्पलीमूलकटुकादेवदारुभिः ।
क्षारद्वयविडाजाजीविल्वमध्याग्निदीप्यकैः ॥
दधिसौवीरकसुरामण्डैश्च विपचेत् घृतम् ।
हन्ति प्रयुक्तं तत् काले रोगान् पारिभवाश्रयान्

पिप्पल्यादिभिर्घृतं पचेत् तत घृतं काले व्याधेः स्नेहयोग्ये प्रयुक्तं परिभवाश्रयान् कासादिरोगान् हन्ति । सौवीरकं काञ्चिकम् ॥

अन्नेनोपहितं स्तन्यं पिबतो विहितात् परम् ।
इमानेव गदान् कुर्यात् कुर्यात्तेष्वेतदेव च ॥
पीतं पीतं च यः स्तन्यं सवातमतिसार्यते ।
तस्याप्येतत् परं पथ्यं दीपनं बलवर्णकृत् ॥

विहितात् सगुणात् स्तन्यात् परं प्रतिषिद्धं स्तन्यमन्नेनोपहितं पिबतो बालस्य तत् स्तन्यं इमानेव पारिगर्भिकोक्तान गदान् कुर्यात् । तेषां च वैद्य एतदेव चिकित्सितं कुर्यात् । यश्च बालः पीतं पीतं स्तन्यमतिसार्यते तस्याप्येतत् पारिगर्भिकोक्तं परं पथ्यम् । तद्धि दीपनं बलवर्णकृच्च ॥

अत्युद्रिक्तक्षुधं बालं परिभूतं तु लेहयेत् ।
विदारीयवगोधूमकणाचूर्णं घृताप्लुतम् ॥
पाययेदनु च क्षीरं शृतं समधुशर्करम् ।
अक्षमज्जाद्रिकाकोलीयष्टीमधुकमोरटैः ॥
श्रपयेत् क्षीरमाज्यं वा बीजैरिक्षुरकस्य च ।
तत् प्रयोज्यं गुरु स्निग्धं यच्चात्यग्नौ पुरेरितम्
श्ववायसविडालानामुच्छिष्टेन जलेन च ।
स्नापयेत्तं—

परिभूतः परिभवाख्यरोगयुक्तो बालो यद्यत्युद्रिक्तक्षुधावान् भवति ततस्तं विदार्यादिचूर्णं घृताप्लुतं लेहयेत् । गुरु स्निग्धं चेति यदुक्तमत्यग्नौ तदप्यतिक्षुधायां शस्यते । तं च बालं श्वाद्युच्छिष्टेन जलेन स्नापयेत् ॥

—नचेदेवं क्षुत्तस्य प्रशमं व्रजेत् ।
क्षीरीपादपमूलस्थं विधिना स्नापितं ततः ॥
वस्त्ररत्नाद्यलङ्कारैः कुमारं भूषयेत् सितैः ।
वृक्षं चानु ततः कुर्यात् भूषणव्यत्ययं तयोः ॥
एतदायुःप्रदं धन्यं स्नपनं सर्वरोगजित् ।

एवमनन्तरोक्तेन तस्य बालस्यातिक्षुद्यदि न प्रशमं व्रजेत्ततः क्षीरीपादपस्य वटादेर्मूले स्थितं वक्ष्यमाणेन विधिना बालं स्नापयेत् । अनु च सितैः शुक्लैर्वस्त्रादिभिर्बालं भूषयेत् । ततस्तत्क्षीरिवृक्षं तद्वदेव भूषयेत् । ततोऽनन्तरं तयोर्वृक्षबालयोर्भूषणव्यत्ययं कुर्यात् । वृक्षभूषणैर्बालं भूषयेत् बालभूषणैश्च वृक्षमित्यर्थः । एतद्विधानमायुः प्रदादिगुणम् ॥

जटीभूतकचाक्ष्यादिपक्ष्माणमतिलोलुपम् ।
गोमूत्रगन्धि स्नपयेत्तीर्थे गव्यशकृद्रसैः ॥

जटीभूतकचत्वादियुक्तं बालं तीर्थे गव्यशकृद्रसैः स्नपयेत् । जटीभूता एकत्वं प्राप्ताः कचा अक्ष्यादिपक्ष्माणि च यस्य बालस्य स तथोक्तस्तम् । पक्ष्माणि लोमानि । अति लोलुप आहारादिगृध्नुः ॥

वचापुष्पीशिलाकुष्ठवयस्थाहिङ्गुकट्फलैः ।
सवस्तमूत्रमदिरैस्तैलमभ्यञ्जनं पचेत् ॥
बलाविदारीत्रिकटुकुष्ठोशीरकुचन्दनैः ।
सिद्धं पीतं हविर्हन्ति तं विकारमशेषतः ॥

वचादिभिर्बालस्याभ्यञ्जनं तैलं पचेत् । बलादिभिः सिद्धं हविः पीतं जटीभूतादिविकारमशेषतो हन्ति ॥

शिरः पृष्ठं ततो मुष्कौ ततः पादौ च यो रुजेत् ।
हस्ताभ्यामुत्थितो वायुः सपर्वानुप्लवः स्मृतः ॥

यो वायुर्बालस्य हस्ताभ्यामुत्थितः शिरःप्रभृत्युक्तक्रमेण रुजेत् स रोगः पर्वानुप्लव इति नाम्ना आचार्यैरुक्तः ॥

गौरीवचासदापुष्पीहयगन्धाकटुत्रयैः ।
सकट्फलद्विवार्ताकीवयस्थाहिङ्गुरोहिषैः ॥
वस्तमूत्रसुरायुक्तैः साधितं तस्य योजयेत् ।
तैलमभ्यञ्जने शेषं वातव्याधिवदाचरेत् ॥

तस्य पर्वानुप्लाविनः गौर्यादिभिः साधितं तैलमभ्यञ्जने योजयेत् । शेषं चिकित्सितं वातव्याधिवदाचरेत् ॥

तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् ।
तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते ॥
तालुपातः स्तनद्वेषः कृच्छ्रात् पानं शकृद्द्रवम्
तृडास्य कण्ठ्वक्षिरुजा ग्रीवादुर्धरता वमिः ॥

बालस्य तालुमूले कफः क्रुद्धः तालुकण्टकं कुरुते । तेन रोगेण बालस्य मूर्ध्नि शिरसि तालुप्रदेशस्य निम्नता जायते । तालुपातादिकमपि जायते। ग्रीवाया दुःखेन धार्यत्वं ग्रीवादुर्धरता ॥

तत्रोत्क्षिप्य यवक्षारक्षौद्राभ्यां प्रतिसारयेत् ।
तालु तद्वत् कणाशुण्ठीगोशकृद्रससैन्धवैः ॥

तत्र तालुकण्टके ताल्वङ्गुल्योत्क्षिप्य तदैव यवक्षारक्षौद्राभ्यां प्रतिसारयेत् । तद्वदित्युत्क्षिप्य कणादिभिः प्रतिसारयेत् ॥

शृङ्गिवेरनिशाकुष्ठं कल्कितं वटपल्लवैः ।
बध्वा गोशकृता लिप्तं कुकूलेस्वेदयेत्ततः ॥
रसेन लिम्पेत्ताल्वास्यं नेत्रे च परिषेचयेत् ।
हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् ॥
पीत्वा कुमारः स्तन्येन मुच्यते तालुकण्टकात्

शृङ्गिवेरादि कल्कीकृतं वटपल्लवैर्बध्वा गोमयेन लिप्तं कुकूले चूर्णाग्नौ स्वेदयेत् । तस्मात् स्विन्नाद्रसेन तालुकण्टकिनस्ताल्वास्यं लेपयेत् नेत्रे च सेचयेत् । हरीतक्यादिकल्कं माक्षिकयुक्तं स्तन्येन पीत्वा कुमारस्तालुकण्टकान्मुच्यते ॥

मस्तुलुङ्गक्षयाद्यस्य वायुस्ताल्वस्थि नामयेत् ॥

तस्य तृट्दैन्ययुक्तस्य सर्पिर्मधुरकैः शृतम् ।
पानाभ्यञ्जनयोर्योज्य मुद्वेगश्चहिमाम्बुना ॥

स्वहेतोः कुपितोवायुर्यस्य बालस्य मस्तुलुङ्गाख्यस्य मज्जाविशेषस्य क्षयाद्धेतोस्तालवःस्थि नामयेत् तस्य बालस्य तद्धेतुभ्यां तृट्दैन्याभ्यां युक्तस्य च मधुरकैः शृतं सर्पिः पानेऽभ्यञ्जने च योज्यम् । अस्य हिमांबुना व्यजनादियुक्तेनोद्वेगश्च योज्यः । तथा हि मस्तुलुङ्गो वर्धते ॥

मलोपलेपात् स्वेदाद्वा गुदे रक्तकफोद्भवः ।
ताम्रो व्रणोऽन्तः कण्डूमान् जायते भूर्युपद्रवः॥
केचित्तं मातृकादोषं वदन्त्यन्ये तु पौतनम् ।
पृष्ठारुर्गुदकुट्टं च केचिच्च तमनामकम् ॥

बाह्यमलोपलेपात् स्वेदाद्वा गुदे रक्तश्लेष्मकोपेन ताम्रत्वादियुक्तो व्रणो जायते । भूर्युपद्रवो बहूपद्रवः । केचिदाचार्यास्तं रोगं मातृकादोषं वदन्ति । अन्ये त्वाचार्याः पौतनं पूतनाख्यग्रहजनितं वदन्ति । तथान्ये पृष्ठारुरन्ये गुदकुट्टमन्ये अनामकं वदन्ति ॥

तत्र धात्र्याः पयः शोध्यं पित्तश्लेष्महरौषधैः ।
सितशीतं च शीताम्बुयुक्तमन्तरपानकम् ॥
सक्षौद्रतार्क्ष्यशैलेन व्रणं तेन च लेपयेत् ।
त्रिफलाबदरीप्लक्षत्वक्काथपरिषेचितम् ॥
कासीसरोचनातुत्थमनोह्वालरसाञ्जनैः ।
लेपयेदम्लपिष्टैर्वा चूर्णितैर्वावचूर्णयेत् ॥
सुश्लक्ष्णैरथवा यष्टीशङ्खसौवीरकाञ्जनैः ।
शारिबाशङ्खनाभिभ्यामसनस्य त्वचाथ वा ।

तत्रेति तस्मिन् रोगविशेषे धात्र्याः पयः पित्तश्लेष्महरैरौषधैः शोध्यम् । तथा बालस्य सितशीतं श्वेतचन्दनं शीताम्बुना युक्तमन्तरपानकं विधेयम् । तेन च सितशीतेन श्वेतचन्दनेन क्षौद्रतार्क्ष्यशैलाभ्यां युक्तेन गुदव्रणं लेपयेत् । किंभूतमित्याह । त्रिफलादिक्काथेन परिषेचितम् । अथ वा कासीसादिभिश्चूर्णितैः सुश्लक्ष्णैरवचूर्णयेत । अथ वा यष्ट्यादिभिः सुश्लक्ष्णैर्व्रणमवचूर्णयेत् । शारिबाशङ्खनाभिभ्यां वावचूर्णयेत् । केवलया वासनत्वचा ॥

रागकण्डूत्कटे कुर्याद्रक्तस्रावं जलौकसा ।
सर्वं च पित्तव्रणजिच्छस्यते गुदकुट्टके ॥
अनामस्थौल्यपित्तास्रकण्डूगण्डगळामये ।
उदरात्युन्नतौ चेष्टं तार्क्ष्यमन्तरपानकम् ॥

अथ वा तस्मिन् रोगे रागकण्डूभ्यामुत्कटे जळूकाभी रक्तस्रावं कुर्यात् । अथ वा गुदकुट्टके सर्वमाहारादिक पित्तव्रणजिच्छस्यते । प्रसङ्गेनोच्यते । अनामादिके तार्क्ष्यशैलमन्तरपानकमिष्टम् । अनामा गुदकुट्टकः ॥

गृह्णाति सूतिकागारे न स्तनंचेत् स्पृशेत्ततः ।
पथ्याधात्री फलकणैर्जिह्वां सघृतमाक्षिकैः ॥

यश्च बालोऽचिरजातत्वात् सूतिकागार एव स्थितः स्तनं न गृह्णाति तस्य पथ्यादिभिः सघृतमाक्षिकैर्जिह्वां स्पृशेत् ॥

पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतम् ।
रुदते न्यस्यते वापि लेहं दद्यात् सुखावहम् ॥

वैकारिके रुदते बालाय सूतिकागारेऽथ वा अस्यते पिप्पल्यादिचूर्णं घृतक्षौद्रपरिप्लुतमवलेहं दद्यात् ॥

प्रदीप्ताङ्गाररजसा प्रशान्तेनावचूर्णयेत् ।
पञ्चमेऽह्न्यपतन्नाळं लेपयेद्वा गुडाम्भसा ॥
सान्द्रेण भूमौ घृष्टेन—

यच्च नाभिनाळं छिन्नशिष्टजातं पञ्चमं यावदहनि पतितं तन्नाळं प्रदीप्तनिर्वाणाङ्गाररजसावचूर्णयेत् । अथ वा तथाविधं नाळं गुडाम्भसा भूमौ घर्षणात् सान्द्रीभूतेन लेपयेत् । सान्द्रं घनम् ॥

—नाळपातेऽपि चोन्नताम् ।
नाभिं छागेन शकृता दग्धेनान्तर्विचूर्णयेत् ॥

नाळे पतितेऽपि च या नाभिरुन्नता भवेत्ततस्तां नाभिमन्तर्निम्ने छागशकृत्क्षारेणावचूर्णयेत् ॥

अश्वगन्धाञ्जनाजाविविड्यष्टीमधुकादिभिः ।
रोपयेच्चूर्णितैर्नाभिं स्नेहयुक्तैरनुन्नताम् ॥

या पुनर्नाभिर्नता भवति तामश्वगन्धादिभिश्चूर्णितैः स्नेहयुक्तैश्च रोपयेत् । अजाव्योर्विट् तथोक्ता । आदिशब्देन रोपणानां परिग्रहः ॥

यष्टीलोध्रनिशाश्यामाकल्कपक्वेन सेचयेत् ।
नाभिं पाके तु तैलेन तच्चूर्णैश्चावचूर्णयेत् ॥

यदा तु नाभेः पाको भवति तदा नाभिं यष्ट्यादिविपक्वेन तैलेन सेचयेत् । तच्चूर्णैर्यष्ट्यादिचूर्णैरवचूर्णयेच्च ॥

वातेनाध्मापितां नाभिं सरुजां तुण्डिसंज्ञिताम् ।
मारुतघ्नैः प्रशमयेत् स्नेहस्वेदोपनाहनैः ॥

वातेनाध्मापितायाः सरुजाया नाभेस्तुण्डिरिति नाम तां तुण्डिं वातघ्नद्रव्यकृतैः स्नेहादिभिः प्रशमयेत् ॥

असम्यक्कल्पनान्नाभेः स्याद्विनामो विजृंभिका ।
वातपित्तहरं कर्म तत्रान्तर्बहिराचरेत् ॥

असम्यङ्नाभिनाळस्य कल्पनाच्छेदनात् बालस्य गात्रविनामं विजृंभिकां मुखविकारं च कुर्यात् । तत्रान्तर्बहिः पानलेपादिना वातपित्तहरं कर्माचरेत् ॥

गर्भाम्भसामवमनाच्छ्लेष्मणः कण्ठगस्य वा ।
सम्पर्काद्धृदये दुष्टो मार्गानावृणुते रसः ॥
बद्धमुष्टिस्ततो मुख्यरोगैर्बालोऽभिभूयते ।
हृद्रोगाक्षेपकश्वासकासच्छर्दिज्वरादिभिः ॥
उल्वकं सहजं व्याधिमम्बुपूर्णं च तं वदेत् ।

बालस्य गर्भोदकस्यावमनाद्रसो हृदये दुष्टो मार्गान् स्रोतांस्यावृणुते । कण्ठगतस्य वा श्लेष्मणः संपर्काद्धृदये दुष्टो रसो मार्गानावृणुते । तत आवृतमार्गत्वात् बद्धमुष्टिर्बालो नानाविधैर्हृद्रोगादिभी रोगैरभिभूयते । तमेवंविधं व्याधिविशेषं वैद्यो नाम्नोल्वकमिति सहजमित्यम्बुपूर्णमिति च वदेत् ॥

स्रोतोविशोधनं प्रातस्तस्मिन्नन्तरपानकम् ।
विदध्याच्छागलं मूत्रं स्नानाभ्यङ्गौ च वर्जयेत्

तस्मिन्नुद्बके छागमूत्रं स्रोतोविशोधनमन्तरपानकं प्रातर्दिनारम्भे विदध्यात् । तत्र च स्नानाभ्यङ्गौ वर्जयेत् ॥

विल्वादिमूलबृहतीपञ्चकोलंपलांशकम् ।
धन्वमांसपलान्यष्टौ शशमूर्ध्नः पलाष्टकम् ।
साधयेत् षोडशगुणे सलिलेऽष्टांशशेषितम् ॥
तेन क्वाथेन कर्षांशैर्घृतप्रस्थं विपाचयेत् ।
छगलीमूत्रमदिरादधिक्षीरसमांशकम् ॥
विळङ्गसैन्धवाजाजीचविकादेवदारुभिः ।
सहिंस्राहिङ्गुलशुनैः सेव्योषैः श्लक्ष्णकल्कितैः
तत् पानाद्धन्ति सहजगुल्महिध्मानिलामयान् ।
पाण्डुरोगं च वातोत्थं स्वस्थवृत्ते च पुष्टिदम् ।

विल्वादिपञ्चमूलं बृहतीपञ्चकोलं चेत्येकादश द्रव्याणि पृथक् पलांशानि अष्टौ पलानि जाङ्गलमांसस्य शशशिरसोऽष्टपलमिति सर्वं षोडशगुणे सलिलेऽष्टभागशेषं क्वाथयेत् । एष क्वाथस्तु छगलीमूत्रादिमिश्रीभूतः । विळङ्गादीनि कार्षिकाणि घृतस्य च प्रस्थमिति विपचेत् । तत् पक्वं घृतं सहजादिकान् हन्ति । सहजमुद्बकमित्युक्तम् । हिंस्रा मांसी । अनिलामयाः सर्वे वातव्याधयः । एतच्च स्वस्थवृत्तेऽपि बालस्य पुष्टिदम् ॥

परिदग्धच्छविं बालं दिह्यान्मूर्वातिलोत्पलैः ।
शमीपत्रशिरीषत्वक्शारिबामधुकाभयैः ॥

यस्य बालस्य त्वक् परिदग्धा पित्तादिवशात् भवति तं बालं दूर्वादिभिरभयान्तैः प्रदिह्यात् । अभयमुशीरम् ॥

मूर्वाधात्रीनिशाचूर्णं मूत्रेण मधुमत् पिबेत् ।
पाण्डुरोगी शृतं सर्पिर्वराभृङ्गरसेन वा ॥

पाण्डुरोगी बालो मूर्वादिचूर्णं मधुमन्मूत्रेण पिबेत् । अथ वा त्रिफलाभृङ्गरसाभ्यां शृतं सर्पिः पिबेत् ॥

पाठावेल्लद्विरजनीमुस्ताभार्ङ्गीपुनर्नवैः ।
सविल्वव्यूषणैः सर्पिर्वृश्चिकालीयुतैः शृतम् ॥
लिहानो मात्रया रोगैर्मुच्यते मृत्तिकोद्भवैः ।

पाठादिभिर्वृश्चिकाळ्यन्तैः शृतं सर्पिः स्तोकया मात्रया लिहानो बालो भक्षितमृत्तिकोद्भवै रोगैर्मुच्यते । उपसंहरन्नाह ॥

व्याधेर्यद्यस्य भैषज्यं स्तनस्तेन प्रलेपितः ।
स्थितो मुहूर्तं धौतोऽनु पीतस्तं तं जयेत् गदम् ॥

यस्य ज्वराद्यन्यतमस्य विशिष्टस्य व्याधेर्यद्विशिष्टं भैषज्यमौषधं तेन भैषज्येन प्रलेपितः स्तनो मुहूर्तं स्थितोऽनु च धौतोऽनुपीतो बालस्तं तं स्वविषयं ज्वरादिकं जयेत् ॥

ग्रहैरपि हि जायन्ते प्रच्छन्नैर्व्याधयः शिशोः ।
कर्म शस्तमतस्तेषु दैवयुक्त्याश्रयं सदा ॥

इत्युत्तरस्थाने द्वितीयोऽध्यायः ॥

न केवलं चाहारादिना शिशोर्व्याधयो जायन्ते यावत् ग्रहैरपि वक्ष्यमाणैः प्रच्छन्नैरलक्ष्यैर्जायन्ते अतो ग्रहाद्धेतोस्तेषामामयानां दैवाश्रयं कर्म मणिमन्त्रादि युक्त्याश्रयं च वमनादिकं शस्तमिति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां
उत्तरे द्वितीयोऽध्यायः ॥

---

# तृतीयोऽध्यायः ।

ग्रहैरप्यामया उक्तास्तांस्तदामयांश्च प्रदर्शयितुमध्याय आरभ्यते ॥

**अथातो बालग्रहविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति हस्माहुरात्रेयादयो महर्षयः ॥**

प्रथममेव तावत् ग्रहाणां सम्भव उच्यते ॥

**पुरा गुहस्य रक्षार्थं निर्मिताः शूलपाणिना ।**
**मनुष्यविग्रहाः पञ्च सप्त स्त्रीविग्रहा ग्रहाः ॥**
**स्कन्दो विशाखो मेषास्यः श्वग्रहः पितृसंज्ञितः**
**शकुनिः पूतना शीतपूतनाऽदृष्टिपूतना ॥**
**मुखमण्डितिका तद्वद्रेवती शुष्करेवती ।**

पुरा पूर्वमतीते कस्मिंश्चित् कालांशे गुहस्य भगवतः कुमारस्य रक्षार्थं शूलपाणिना भगवता शम्भुना पञ्च ग्रहा मनुष्यविग्रहाः पुरुषशरीराः स्कन्दादयः सप्त च स्त्रीविग्रहाः शकुन्यादयो निर्मिताः ॥

**ते कामरूपिणः स्कन्दमुपचेरुः समाहिताः ।**
**स्कन्दस्य बालधारत्वात्तेषां स्कन्दोऽग्रणीरभूत्**

ते ग्रहाः सर्वे कामरूपिणो यथेच्छाकृतयः स्कन्दं कुमारमुपचेरुरुपचरितवन्तः । समाहिता यत्नवन्तः स्कन्दस्य कुमारस्य । तेषां मध्ये स्कन्दाख्यग्रहोऽग्रणीः प्रधानोऽभूत् बालधारत्वाद्धेतोः । स हि कुमारस्य बालधारत्वे भगवता नियुक्तः ॥

**स्कन्देऽथ यौवनं प्राप्ते सेनापत्यं च तान् ग्रहान्**
**रौद्रान् रुद्रोऽनुजग्राह प्रह्वान् वृत्यभिलाषिणः**

अथ कालेन स्कन्दे यौवनं प्राप्ते सेनापत्यं च प्राप्ते तान् रौद्रान् ग्रहान् रुद्रोऽनुजग्राह । किम्भूतानाह । प्रह्वान् जानुभ्यामवनतान् । वृत्यभिलाषिणो जीविकाकामान् ॥

कथमनुजग्राहेत्याह ॥

**न तिथिष्वप्यतिथयो देवताः पितरोऽपि वा ।**
**येषु वेश्मसु पूज्यन्ते निवृत्ताचारवर्त्मसु ॥**
**उत्सन्नबलिहोमेषु भिन्नकांस्योपभोजिषु ।**
**हरध्वं तेषु बालानामारोग्यं धारिशर्म च ॥**

न तिथिष्वपीत्यादि । भो ग्रहाः एवंविधेषु वेश्मस्वाश्रयतां बालानामारोग्यं धारिजीवितं शर्म च हरध्वम् । किंभूतेष्वित्याह । येषु वेश्मसु तिथिष्वपि पर्वस्वप्यतिथ्यादयो न पूज्यन्ते । निवृत्तमाचारवर्त्म येभ्यस्तेषु । वर्त्म मार्गम् । सुबोधम् । भिन्ने भग्ने कांस्ये पात्रे येषु वेश्मसु भुज्यते ते तथोक्तास्तेषु ॥

**शूलिनेतिनियुक्तास्ते बलिपूजाभिकाङ्क्षिणः ।**
**क्रुद्धान् भीतान् विमनसः शून्यस्थानेकचारिणः**
**परोपभुक्तकुसुमवस्त्राभरणधारिणः ।**
**बालान् कश्मलधात्रीकान् सन्ध्यासुरुदतोऽशुचीन्**

ऋक्षोलूकबिडालादिरूपैरन्यैस्तथाद्भुतैः ।
सन्त्रासयन्तःशयितानकदाचिज्जाग्रतोऽपिवा॥
प्रायः पर्वसु गृह्णन्ति ग्रहाश्छिद्रप्रहारिणः ।

इत्यनेन प्रकारेण शूलिना भगवता ते ग्रहा नियुक्ताः सन्तो बलिपूजाभिकाङ्क्षिणश्च क्रुद्धादिगुणान् बालान् घ्नन्ति । विमनसो दुश्चित्तान् । शून्ये तिष्ठन्तीति शून्यस्थास्तान् । एकचारिणो ये सर्वत्रासहायाश्चरन्ति । परेणान्येनोपभुक्तान् कुसुमादीन् धारयन्तीति तथोक्तास्तान् । कश्मला दुराचारा धात्री येषां ते तथोक्तास्तान् । कथं गृह्णन्तीत्याह । अद्भुतैराश्चर्यैः । ऋक्षादिप्राणिरूपैर्बालाञ्छयितान् जाग्रतोऽपि वा सन्त्रासयन्तः । कदा गृह्णन्तीत्याह । प्रायः पर्वस्वष्टम्यादिषु । ते च ग्रहाश्छिद्रप्रहारिणश्छिद्रे रन्ध्रे प्रहरन्ति ॥

आविशन्तश्च लक्ष्यन्ते केवलं शास्त्रचक्षुषा ।
शुद्धेन देहं बालानां गन्धर्वा इव योषिताम् ॥

ते च ग्रहा अप्रत्यक्षत्वाच्छास्त्रेणैव चक्षुषा आविशन्तो बालानां देहे लक्ष्यन्ते । किम्भूतेन शास्त्रचक्षुषा आह । शुद्धेन निर्मलेन । दृष्टान्तो यथा योषितां देहं गन्धर्वा आविशन्ते । शास्त्रचक्षुषैव लक्ष्यन्ते । न तु मांसगोळकेन । गन्धर्वावेशः प्रत्यक्षफलत्वेन सिद्धत्वाद्दृष्टान्तः ॥

तेषां ग्रहिष्यतां रूपं प्रततं रोदनं ज्वरः ।

तेषां च ग्रहाणां ग्रहिष्यतां ग्रहणं करिष्यतां प्रततं रोदनं ज्वरश्च सामान्येन पूर्वरूपम् ॥

सामान्यं रूपमुत्रासजृम्भाभ्रूक्षेपदीनताः ।
फेनस्रावोर्ध्वदृष्ट्योष्ठदन्तदंशप्रजागराः ॥
रोदनं कूजनं स्तन्यविद्वेषः स्वरवैकृतम् ।
नखैरकस्मात् परितः स्वधात्र्यङ्गविलेखनम् ॥

उत्त्रासादिकं स्वधात्र्यङ्गविलेखनान्तं सर्वग्रहाणामाविष्टानां सामान्यं लक्षणम् । फेनस्रावो मुखात् । ओष्ठयोर्दन्तानां च दंशो दंशनम् । अकस्मादिति कारणं विना ॥

तत्रैकनयनस्रावी शिरो विक्षिपते मुहुः ।
हतैकपक्षः स्तब्धाङ्गः सस्वेदो नतकन्धरः ॥
दन्तखादी स्तनद्वेषी त्रस्यत्रोदिति विस्वरम् ॥
वक्रवक्त्रोवमन्लालांभृशमूर्ध्वंनिरीक्षते ।
वसासृग्गन्धिरुद्विग्नो बद्धमुष्टिशकृच्छिशुः ॥
चलितैकाक्षिगण्डभ्रूः संरक्तो भयलोचनः ।
स्कन्दार्तस्तेन वैकल्यं मरणं वा भवेद्ध्रुवम् ॥

तत्रेत्यादिना स्कन्दादिविशेषेण लक्षणम् । एकनयनस्रावीत्यादियुक्तः शिशुः स्कन्दार्तो भवति । तेन स्कन्देन बालस्य ध्रुवमवश्यं वैकल्यं मरणं वा भवेत् । बद्धशब्दो मुष्टिशकृद्भ्यां संबध्यते । चलितमेकमक्ष्यादिकं यस्य॥

संज्ञानाशो मुहुः केशलुञ्छनं कन्धरानतिः ।
विनम्य जृम्भमाणस्य शकृन्मूत्रप्रवर्तनम् ॥
फेनोद्वमनमूर्ध्वेक्षाहस्तभ्रूपादनर्तनम् ।

स्तनस्वजिह्वासन्दंशसंरम्भज्वरजागराः ॥
पूयशोणितगन्धश्च स्कन्दापस्मारलक्षणम् ।

संज्ञानाशादि शोणितगन्धान्तं स्कन्दापस्मारस्य विशाखस्य लक्षणम् । केशलुञ्छनं केशापनयनम् । कन्धरा ग्रीवा तस्या आनतिः । ऊर्ध्वमीक्षणमूर्ध्वेक्षा । हस्तादीनां नर्तनम् ॥ दंशो दशनम् ॥

आध्मानं पाणिपादस्य स्पन्दनं फेननिर्वमिः ।
तृण्मुष्टिबन्धातीसारस्वरदैन्यविवर्णताः ॥
कूजनं स्तननं छर्दिः कासहिध्माप्रजागराः ।
ओष्ठदंशांससङ्कोचस्तम्भबस्ताभगन्धताः ॥
ऊर्ध्वं निरीक्ष्य हसनं मध्ये विनमनं ज्वरः ।
मूर्छैकनेत्रशोफश्च नैगमेषग्रहाकृतिः ॥

आध्मानाद्येकनेत्रशोफान्तं नैगमेषाख्यस्य ग्रहस्याकृतिर्लक्षणम् । स्पन्दनं चलनं पाणिपादस्य ॥

कम्पो हृषितरोमत्वं स्वेदश्चक्षुर्निमीलनम् ।
बहिरायामनं जिह्वादंशोऽन्तःकण्ठकूजनम् ॥
धावनं विट्सगन्धत्वं क्रोशनं च श्ववच्छुनि ।

कम्पादिकं श्वसदृशक्रोशनान्तं शुनि श्वग्रहे लक्षणम् ॥

रोमहर्षो मुहुस्त्रासः सहसा रोदनं ज्वरः ।
कासातिसारवमथुजृम्भातृट्छवगन्धिताः ॥
अङ्गेष्वाक्षेपविक्षेपशोषस्तम्भाविवर्णताः ।
मुष्टिबन्धः स्रुतिश्चाक्ष्णोर्बालस्य स्युः पितृग्रहे ॥

रोमहर्षादिकमक्षिस्रुत्यन्तं पितृग्रहे लक्षणम् । शवगन्धिता कुणपगन्धित्वम् ॥

स्रस्ताङ्गत्वमतीसारो जिह्वातालुगले व्रणाः ।
स्फोटाःसदाहरुक्पाकाःसन्धिषुस्युःपुनःपुनः ॥
निश्यह्नि प्रविलीयन्ते पाको वक्त्रे गुदेऽपि वा
भयं शकुनिगन्धत्वं ज्वरश्च शकुनिग्रहे ॥

स्रस्ताङ्गत्वादि ज्वरान्तं शकुन्याख्यस्य ग्रहस्य लक्षणम् । स्रंसनं निरवष्टम्भनम् । जिह्वादिके व्रणाः । सन्धिषु दाहादियुक्ताः स्फोटाः पुनः पुनः स्युर्निशि रात्रौ । तेस्फोटा अह्नि प्रविलीयन्ते । शकुनिगन्धत्वं देहे पक्षिगन्धः ॥

पूतनायां वमिः कम्पस्तन्द्रा रात्रौ प्रजागरः ।
हिध्माध्मानं शकृद्भेदः पिपासा मूत्रनिग्रहः ॥
स्रस्तहृष्टाङ्गरोमत्वं काकवत् पूतिगन्धिता ।

वम्यादिकाकसमानपूतिगन्धान्तं पूतनाख्यग्रह आविष्टे लक्षणम् । स्रस्तहृष्टयोरङ्गरोम्णोश्च यथासङ्ख्येन संबन्धः ॥

शीतपूतनया कम्पो रोदनं तिर्यगीक्षणम् ।
तृष्णान्त्रकूजोऽतीसारो वसावद्विस्रगन्धिता ॥
पार्श्वस्यैकस्य शीतत्वमुष्णत्वमपरस्य च ॥

कम्पाद्येकपार्श्वोष्णत्वान्तं शीतपूतनालक्षणम् ॥

अन्धपूतनयाच्छर्दिर्ज्वरः कासोऽल्पनिद्रता ।
वर्चसो भेदवैवर्ण्यदौर्गन्ध्यान्यङ्गशोषणम् ॥

दृष्टिसादोऽक्षिरुक्कण्डूः पोत्थकीजन्मशूनता ।
हिध्मोद्वेगः स्तनद्वेषवैवर्ण्यस्वरतीक्ष्णताः ॥
वेपथुर्मत्स्यगन्धित्वमथवा साम्लगन्धिता ।

छर्द्यादिकं साम्लगन्धितान्तमन्धपूतनाया अदृष्टिपूतनाया लक्षणम् । मत्स्यगन्धसाम्लगन्धयोर्विकल्पः ॥

मुखमण्डितया पाणिपादास्यरमणीयता ।
सिराभिरसिताभाभिराचितोदरता ज्वरः ॥
अरोचकोऽङ्गग्लपनं गोमूत्रसमगन्धिता ।

पाणिरमणीयतादि गोमूत्रसमगन्धितान्तं मुखमण्डितिकालक्षणम् । असिताभाभिः कृष्णवर्णाभिः सिराभिरुदरस्याचितत्वम् ॥

रेवत्यां श्यावनीलत्वं कर्णनासाक्षिमर्दनम् ।
कासहिध्माक्षिविक्षेपवक्त्रवक्रत्वरक्तताः ॥
बस्तगन्धो ज्वरः शोषः—

श्यावनीलत्वादि शोषान्तं रेवतीलक्षणम् ॥

—पुरीषं हरितं द्रवम्
जायते शुष्करेवत्यां क्रमात् सर्वाङ्गसङ्क्षयः ॥
केशशातोऽन्नविद्वेषः स्वरदैन्यं विवर्णता ।
नानावर्णपुरीषत्वमुदरे ग्रन्थयः सिराः ॥
रोदनं गृद्ध्रगन्धित्वं दीर्घकालानुवर्तनम् ।

शुष्करेवत्यां हरितादिगुणं पुरीषं जायते । क्रमाच्च सर्वाङ्गसङ्क्षयः केशशातादिकं च जायते ॥

उदरे ग्रन्थयो वृत्ता यस्य नानाविधं शकृत् ।
जिह्वाया निम्नता मध्ये श्यावं तालु च तं त्यजेत्

उदर इत्यादि तालुश्यावतान्तमसाध्यग्रहलक्षणम् ॥

भुञ्जानोऽन्नं बहुविधं यो बालः परिहीयते ।
तृष्णागृहीतः क्षामाक्षो हन्ति तं शुष्करेवती ॥

यो बालो बहुविधमनेकप्रकारमन्नं भुञ्जानो बलादिभिः परिहीयते तमवश्यं शुष्करेवती हन्ति । एतत्तस्या विशेषेणासाध्यलक्षणम् ॥

प्रकारान्तरेणासाध्यत्वमुच्यते ॥
हिंसारत्यर्चनाकाङ्क्षाग्रहग्रहणकारणम् ।

त्रिविधो हि ग्रहाणां ग्रहणे हेतुर्हिंसाकाङ्क्षा रतिकाङ्क्षार्चनाकाङ्क्षा च ॥

तत्र हिंसात्मके बालो महान् वा स्रुतनासिकः
क्षतजिह्वः क्वणन् बाढमसुखी साश्रुलोचनः ॥
दुर्वर्णो हीनवचनः पूतिगन्धिश्च जायते ।
क्षामो मूत्रपुरीषं स्वं मृद्नाति न जुगुप्सते ॥
हस्तौ चोद्यम्य संरब्धो हन्त्यात्मानं तथापरम्
तद्वच्च शस्त्रकाष्ठाद्यैरग्निं वा दीप्तमाविशेत् ॥
अप्सु मज्जेत् पतेत् कूपे कुर्यादन्यच्च तद्विधम् ।
तृड्दाहमोहान् पूयस्य छर्दनं च प्रवर्तयेत् ॥
रक्तं च सर्वमार्गेभ्योऽरिष्टोत्पत्तिं च तं त्यजेत्

तत्रेति निर्धारणे । हिंसात्मके ग्रहे बालो वा महान् वा स्रुतनासिकादिलक्षणो भवति । क्षता जिह्वा येन । जायते भवति ।

संरब्धः ससंरम्भो हस्तावुद्यम्यात्मानमपरं च हन्ति । शस्त्रकाष्ठाद्यैश्च तद्वदिति हन्त्यात्मानं तथापरमिति च । तद्विधमित्येवंप्रकारं साहसम् । स चेद्धिंसात्मको ग्रहस्तृडादीन् सर्वमार्गेभ्यश्च रक्तं रिष्टोत्पत्तिं च प्रवर्तयेत् ततस्तं हिंसात्मकं ग्रहं त्यजेदसाध्यत्वात् ॥

रहःस्त्रीरतिसल्लापगन्धस्रग्भूषणप्रियः ।
हृष्टशान्तश्च दुःसाधो रतिकामेन पीडितः ॥

रह आदिप्रियः पुरुषो रतिकामेन ग्रहेण पीडितो भवति । स च दुःसाधः । रह एकान्तः स्त्रिया रतिः सल्लापश्च स्त्रीरतिसल्लापः । हृष्टः सहर्षः । शान्तो विषयालोलुपः ॥

दीनः परिमृशन् वक्त्रं शुष्कोष्ठगळतालुकः ।
शङ्कितं वीक्षते रौति ध्यायत्यायाति भीतताम् ।
अन्नमन्नाभिलाषेऽपि दत्तं नाति बुभुक्षते ।
गृहीतं बलिकामेन तं विद्यात् सुखसाधनम् ॥

दीनत्वादियुक्तं बलिकामेनार्चनाकाङ्क्षिणा गृहीतं विद्यात् सुखसाधनं च अन्नाभिलाषेऽपि दत्तमन्नं नातिबुभुक्षते भोक्तुं नेच्छति ॥

हन्तुकामं जयेद्धोमैः सिद्धमन्त्रप्रवर्तितैः ।
इतरौ तु यथाकामं रतिबल्यादिदानतः ॥

इत्युत्तरे तृतीयोऽध्यायः ॥

हन्तुकामं ग्रहं होमादिभिर्जयेत् । इतरौ रत्यर्चनाकामौ यथाकाममिच्छानातिक्रमेण रत्यादीनां दानत इति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे तृतीयोऽध्यायः ॥

---

# चतुर्थोऽध्यायः ।

ग्रहाणां स्वरूपमुक्त्वा तेनैव क्रमेण चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो बालग्रहप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति हस्माहुरात्रेयादयो महर्षयः ॥

ग्रहेषु साध्येषु शिशुं विविक्ते शरणे स्थितम् ।
त्रिरह्ना मृष्टसंसिक्ते सदा सन्निहितानले ॥
विकीर्णभूतिकुसुमबीजपत्रान्नसर्षपे ।
रक्षोघ्नतैलज्वलितप्रदीपहतपाप्मनि ॥
व्यवायमद्यपिशितनिवृत्तपरिचारके ।
पुराणसर्पिषाभ्यक्तं परिषिक्तं सुखाम्बुना ॥
साधितेन बलानिम्बवैजयन्तीनृपद्रुमैः ।
पारिभद्रककटवङ्गजम्बूवरणकर्तृणैः ॥
कपोतपङ्कापामार्गपाटलीमधुशिग्रुभिः ।
काकजङ्घामहाश्वेताकपित्थक्षीरिपादपैः ॥
सकदम्बकरञ्जैश्च धूपं स्नातस्य चाचरेत् ।
द्वीपिव्याघ्राहिसिंहर्क्षचर्मभिर्घृतमिश्रितैः ॥

साध्येषु ग्रहेषु न तु दुःसाध्येषु शिशुमेवं कुर्यात् । अह्ना दिनेन त्रीन् वारान् यदामृष्टं संसिक्तं च तस्मिन् । विविक्ते जनादिरहिते । शरणे गृहे स्थितं कुर्यात् । सदा सन्निहितोऽनलो यस्मिन् । तथा विकीर्णे विक्षिप्तं भूत्यादिकं यस्मिन् । भूतिर्भस्म ।

रक्षोघ्नैस्तैलैर्ये ज्वलिता प्रदीपास्तैर्हतः पाप्मा यत्र । व्यवायादितो निवृत्ताः परिचारका यत्र । व्यवायो मैथुनम् । पुराणसर्पिषाभ्यक्तं सुखाम्बुनोष्णोदकेन । परिषिक्तं स्नातम् । कुर्यादिति क्रियापदमत्र लभ्यते । अथ वा स्नातस्य चाचरेदित्यनेनैव चकारेण यथाकथञ्चिदाचरेदित्येतत क्रियापदं बोद्धव्यम् । किम्भूतेन सुखाम्बुना आह । बलादिभिः कदम्बान्तैः साधितेन । वैजयन्त्यग्निमन्थः । नृपद्रुम आरग्वधः । पारिभद्रकः कण्टककिंशुकः । कट्वङ्गः स्योनाकः । कर्तृणं भूतीकम । कपोतपङ्का सुवर्चला । काकजङ्घा लोमशपादिका । महाश्वेता नीलपुष्पी गिरिकर्णिका । क्षीरिपादपा वटादयः । स्नातस्य च द्वीप्यादिचर्मभिर्घृतमिश्रितैर्धूपमाचरेत ॥

पूतीदशाङ्गसिद्धार्थवचाभल्लातदीप्यकैः ।
सकुष्ठैः सघृतैर्धूपः सर्वग्रहविमोक्षणः ॥
सर्षपानिम्बपत्राणि मूलमश्वखुराद्वचा ।
भूर्जपत्रं घृतं धूपः सर्वग्रहनिबर्हणः ॥

पूत्यादिभिर्धूपः सर्वग्रहविमोक्षणः । सर्षपादिभिर्धूपः सर्वग्रहनिबर्हणः । अश्वखुरा गिरिकर्णी ततो मूलम् ॥

अनन्ताम्राास्थितगरं मरिचं मधुरो गणः ।
सृगालविन्ना मुस्ता च कल्कितैस्तैर्घृतं पचेत् ॥
दशमूलरसक्षीरयुक्तं तद् ग्रहजित् परम् ।

अनन्तादिभिः कल्कितैर्दशमूलक्वाथेन क्षीरेण च घृतं पाचयेत् । तत् परं ग्रहजित् । अनन्ता यवासक. । सृगालविन्ना पृश्निपर्णी ॥

रास्नाव्यंशुमतीवद्रूपञ्चमूलबलाघनात् ।
क्वाथे सर्पिः पचेत् पिष्टैः शारिबाव्योषचित्रकैः
पाठाविडङ्गमधुकपयस्याहिङ्गुदारुभिः ।
सग्रन्थिकैः सेन्द्रयवैः शिशोस्तत् सततं हितम्
सर्वरोगग्रहहरं दीपनं बलवर्णदम् ।

रास्नादिकषाये शारिबादिभिः पिष्टैः सर्पिर्विपाचयेत् । ततः सुबोधम् । वद्रूपञ्चमूलं महत्पञ्चमूलम् ॥

शारिबासुरभिब्राह्मीशङ्खिनीकुष्ठसर्षपैः ॥
वचाश्वगन्धासुरसायुक्तैः सर्पिर्विपाचयेत् ।
तन्नाशयेद् ग्रहान् सर्वान् पानेनाभ्यञ्जनेन च
योजयेद् भूतविद्यायां यान्युक्तानि घृतानि च

शारिबादिभिः सर्पिर्विपाचयेत् । तत् पानेनाभ्यञ्जनेन च सर्वान् ग्रहान् नाशयेत् । यानि च घृतानि वक्ष्यमाणायां भूतविद्यायामुक्तानि तान्यपि योजयेत् ॥

हस्तमात्रं शुचौ देशे गोमयेनोपलेपयेत् ।
तत्राक्षतानां चोक्षाणां स्थाप्यं पात्रं सदक्षिणम्
निर्धूमश्चानलस्तोयं गुल्गुलुः सर्पिराहुतिः ।
शुक्लं पुष्पं बलिर्धूपो दूर्वा श्वेताश्वसर्षपाः ॥
प्राङ्मुखोऽथ शुचिर्वैद्यस्त्रिवर्णामथवा सिताम् ।
उपविष्टः प्रतिसरां गृहीत्वा वेष्टयेत्तया ॥
भूर्जे रोचनया विद्यां लिखितामपराजिताम् ॥
विधिना साधितां भूतैः सर्वैरप्यपराजिताम् ।
लक्ष्मणादिपरीवारां नित्यानुस्मृतिसेविताम् ॥
लक्ष्मणासहदेवाख्यानागदन्तीकटम्भरा ।

मर्कटी कर्कटी लम्बा बृहती कण्टकारिका ।
खरनासा मृगोर्वारुर्महाश्वेता शतावरी ॥
उदङ्मुखस्य बालस्य बध्नीयात्तां ततो गळे ।
तदभावे दृढं क्षौमसूत्रं मन्त्रमिदं जपन् ॥

हस्तमात्रमित्यादिना प्रतिसराबन्धनोपकरणविधानं सुबोधम । चोक्षाणां निर्मलानाम । अथ प्राङ्मुखो वैद्यस्त्रिवर्णां सितरक्तपीतां सितामेव वा प्रतिसरां कार्पाससूत्रवेणिकां गृहीत्वा भूर्जलिखितामपराजिताख्यां विद्यां लक्ष्मणाद्यौषधीपरिवारां नित्यं च स्वानुस्मृत्या वैद्येन सेवितां तया प्रतिसरया वेष्टयेत् । किंभूतामपराजितां सर्वैरपि भूतैर्न पराजिताम् । कास्ता लक्ष्मणादय इत्याह । (नि) लक्ष्मणा पुत्रजननी रक्तबिन्दुच्छदा तथा । सहदेवा बला । नागदन्ती हस्तिदन्ती । कटम्भरा गिरिकर्णी । मर्कटी कपिकच्छूः । स्वनामिका च कर्कटी बिल्वादिः । लम्बा कटुकालाबुनी । खरनासाम्रम् । मृगोर्वारुर्गवाक्षी । महाश्वेता नीलपुष्पी गिरिकर्णिका । ततोऽनन्तरं तां वेष्टितां बध्नामीत्यादिमन्त्रं जपन् वैद्य उदीच्यभिमुखस्य बालस्य गळे बध्नीयात् । तस्या अपराजिताया अभावे दृढं क्षौमसूत्रं बध्नीयात् । अन्ये तु क्षौमसूत्रस्यैव मन्त्रं वदन्ति ॥

बध्नाम्यहं प्रतिसरां नमस्कृत्वा स्वयम्भुवे ।
बालानां रक्षणार्थाय शिवां पूर्वर्षिनिर्मिताम् ॥
इन्द्रोऽनुमन्यतां तुभ्यं ये च तस्यानुचारिणः ।
वज्राशनिधरा भूता मेघवृन्दानुसारिणः ॥
ऐरावणस्कन्धगतं येऽनुयान्ति पुरन्दरम् ।
यमो वैवस्वतो राजा ये च तस्यानुचारिणः ॥
मेषसूकरसिंहोष्ट्रखरवाजिसमाननाः ।
काळा काळायसैः पाशैः स्तब्धाक्षा भ्रुकुटीमुखाः
शक्तिमुद्गरहस्ताश्च खड्गपाशधराश्च ये ।
पाशभृद्वरुणो राजा तोयभूः सागरालयः ॥
शारदाभ्रघनाकारा ये च तस्यानुचारिणः ।
महोर्मिमन्तं वेगेन क्षोभयन्ति सरित्पतिम् ॥
धनाधिपो वैश्रवणः सर्वयक्षाधिपो विभुः ।
नानाकारश्च ये भूतास्तस्यैवानुचराः सदा ॥
आदित्या वसवो रुद्रा मरुतश्वाश्विनावपि ।
एते सर्वेऽनुमन्यन्तामिमां प्रतिसरक्रियाम् ॥
दीर्घमायुररोगं च तव दास्यन्ति स्वस्ति ते ।
स्वस्ति ते भगवान् ब्रह्मा स्वस्ति नारदपर्वतौ
स्वस्ति वेदाश्च यज्ञाश्च अग्नीषोमौ च स्वस्ति ते
स्वस्ति ते श्रीर्धृतिः कीर्तिर्लक्ष्मीर्मेधा क्षमा द्युतिः
स्वस्ति तुष्टिश्च पुष्टिश्च वपुर्ह्री बुद्धिरेव च ।
स्वस्ति रुद्रो विशाखश्च स्कन्दः शक्तिधरश्च ते
स्वस्ति धाता विधाता च सुपर्णश्च महाबलः ।
स्वस्ति देवाश्च यक्षाश्च मा च ते पापमागमत् ॥
दुर्व्याहृतानि दुस्वप्नं मनसाचिन्तितानि च ।
दुष्टादीनां भयकृतो वाचः प्रतिहता मया ॥
रक्षा प्रतिसरा तुभ्यं बद्धेयं पापघातिनी ।
निर्वृतस्त्वं निरुद्वेगो जीव वर्षशतं सुखी ॥

बध्नामीत्यादिभिश्चतुर्दशभिः श्लोकैर्मन्त्रो निगदव्याख्यातः किञ्चित् प्रदर्श्यते स्वयंभुवे ब्रह्मणेन नमस्कृत्वा प्रतिसरां बध्नामि बालानां रक्षणाय । किम्भूतामाह शिवां श्रेयस्करीं पूर्वर्षिनिर्मिताम् । हे बाल तुभ्यं प्रति-

सरामिन्द्रोऽनुमन्यतामङ्गीकरोतु । वज्राशनिधरत्वादिगुणाश्च तस्येन्द्रस्यानुचारिणो ये भूता ऐरावणस्कन्धगतं पुरन्दरमिन्द्रमनुयान्ति । यमोऽनुमन्यतां ये च तदनुचरा मेषाद्याननाः कृष्णादिरूपाश्च । वरुणोऽनुमन्यतां तदनुचराश्च । सागर आलयो यस्य । महोर्मीत्यादि वरुणानुचरविशेषणम् । धनाधिपश्च तदनुचराश्च । आदित्यादयश्च । इति सर्वे इमां प्रतिसराक्रियामनुमन्यन्ताम् । तव शिशोस्ते दीर्घमायुररोगं च दास्यन्ति । स्वस्तीत्याद्याशीःपदम् । ते शिशोः पापं दुर्व्याहृतादिकं च मागमत् । दुष्टादीनां वाचो भयङ्करा मया प्रतिहताः । इयं च पापघातिनी रक्षाप्रतिसरा तव बद्धा । अनया च त्वं निर्वृतो निरुद्वेगश्च सुखी वर्षशतं जीव ॥

अपूपपूपसंयावस्वस्तिकालोपिकादयः ।
पायसो मिश्रकः सिद्धो गुडपूरो हरिद्रकः ॥
कृसरो यावकः क्षौद्रं पललं लवणं हविः ।
दधिकुल्माषनिष्पावो रक्तो भूतोदनः पयः ॥
पक्वाममांसरुधिरमत्स्यसक्तु सुरासवाः ।
गन्धं माल्यं फलं हेम धूपः सपुरकुन्दुरुः ॥
सुरसार्जकनिर्गुण्डीकुसुमं च सपल्लवम् ।
बलिः सुशस्तैर्देयः स्याद् भवनस्य चतुर्दिशम् ॥
चतुष्कचैत्यालिपथदेवायतनगोपुरे ।
रेखावृक्षोदपाने च सन्ध्ययोर्दीपवान् निशि ॥

बालनिवासभवनस्य चतुर्दिशमपूपादिकश्च बलिर्देयः । अपूपा मण्डकाः । त एव सगुडाः स्नेहसिद्धाः पूपाः । संयावो यवौदनः । स्वस्तिकाः स्वस्तिकाकृतयः पिष्टविकाराः । लोपिकाः सपूराः पिष्टस्विन्नाः । मिश्रकस्तण्डुलावरान्नोदनः । सिद्धः सिद्धौदनः । गुडपूरः प्रसिद्धः । हरिद्रकः पीतभक्ष्यः । हविर्घृतम् । पललं तिलकल्कः । रक्तौदनो रक्तमिश्रो भूतौदनः । भूतौदनो मांसमिश्रः । चतुष्कादिषु च बलिर्देयः । चतुष्कं चतुःशालम् । रेखामण्डलं मन्ये । उदपानं कूपसरः । निशि दीपवान् बलिर्देयः ॥

अथापतितगोवर्चःप्रलिप्ते दर्भसंस्तृते ।
वृत्ते वा चतुरश्रे वा मण्डले कुसुमोज्ज्वले ॥
नानाग्रहपरीवारं भिषग्भूतपतिं लिखेत् ।
तं प्रतिप्राङ्मुखो विद्यां पठन्नुपहरेत् बलिम् ॥

नमोविमारकस्य । नमः कुमारङ्गाय । नमः सप्तानां मातॄणाम् । नमः स्कन्दाय । एष परिग्रहमन्त्रः । मातॄणामावाहनं च । हिलिहिलिनिमापटालिनि स्वाहा । अनेन सप्तकृत्वः परिजपितेन पानीयचुलुकेनात्माभ्युक्षयितव्यः । एवमात्मरक्षा कृता भवति ॥

अथेत्यादिना मण्डलविधानम् । अपतितगोवर्चो यत्पतदेव गोर्गृहीतम् । वृत्तं वर्तुळं मण्डलम् । चतुरश्रं चतुष्कोणम् । भूतपतिर्भगवान् महादेवः । तं मण्डले चित्रकर्मणा लिखेत् । तं प्रतिप्राङ्मुख इत्यर्थः । नम इत्यादिकां विद्यां पठन् तस्मै भगवते नानाविधं बलिमुपहरेत् । नम इत्यादिबलिपरिग्रहमन्त्रः । एवमेव मातॄणामावाहनमाह्वानम् हिल्यादिकेन सप्तवारान् यत् परिजपितं पा-

नीयचुलुकं तेनात्माभ्युक्षयितव्यः । अभ्युक्षणं समन्ताद्बिन्दुभिः सेचनम् । अनेनाभ्युक्षणेनात्मनो रक्षा कृता भवति ॥

ग्रहाणां सन्निधानाय बलेश्च प्रतिपत्तये ।
सत्यसाधनसंयुक्तमिमं मन्त्रं पठेदनु ॥
प्रजापतौ च यत् सत्यं यत् सत्यममरेश्वरे ।
धर्मराजे च यत् सत्यं यच्च सत्यं तपस्विषु ॥
धनाधिपे च यत् सत्यं यच्च सत्यं जलाधिपे ।
यत् सत्यमग्निहोत्रेषु सत्यं यच्छ्रोत्रियेषु च ॥
पतिव्रतासु यत्सत्यमीश्वरे च महात्मनि ।
एतैस्तु सत्यसमयैर्गुह्यकाः सत्यवादिनः ॥
दर्शयध्वं स्वरूपाणि सत्यं रक्षत सर्वतः ।
आमन्त्रिता मया सौम्याः सौम्यरूपाः प्रतीछत
बलिं चोपहृतं सर्वे सर्वे कौमारका ग्रहाः ।
दर्शयध्वं स्वरूपाणि बलिश्च प्रतिगृह्यताम् ॥

अनन्तरं प्रजापतावित्यादिमन्त्रं पठेत् । किमर्थमित्याह ग्रहाणां सन्निधानं कर्तुं तेषामेव च बलेः प्रतिपत्त्यर्थं च किम्भूतं मन्त्रमाह । सत्यसाधनसंयुतम् । एवं ह्यिष्टसिद्धिर्भवति । पञ्चभिः श्लोकैर्मन्त्रः । एतैः सत्यैर्गुह्यका भूतविशेषाः सत्यवादिनः स्वरूपाणि दर्शयध्वं ये मया आमन्त्रिताः । सत्यं रक्षत बालं च प्रतीछत मयोपहृतम् । कौमारकग्रहाश्च सर्वे स्वरूपाणि दर्शयध्वं बलिश्च प्रतिगृह्यताम् ॥

ततश्चानु पठेदेनां कुलविद्यां समाहितः ।
औला नीला खला काला नकुला ग्रहकारिका
सेना सुसेना माता च महासेना यशस्विनी ।
कृतमालाक्षतशिरा एतास्तु ग्रहमातरः ॥
कुमारवचनाच्छीघ्रं प्रमुञ्चन्तु शिशुन्त्विमम् ।
कालकल्पा ज्वलच्छक्तिः किङ्किणीजालभूषिता
कुमारवचनाद्दूती सम्प्राप्ता मुच्यतां शिशुः ।
पताका कुक्कुटः छत्रं घण्टाबर्हधरः शिखी ॥
शरस्तम्भश्च ते मुद्रा मुच्यतां मातरः शिशुः ।
गन्धं धूपं च माल्यं च कुमारस्ते प्रयच्छति ॥
न स्थातव्यं तदाघ्राय स्वां गतिं गच्छ मा चिरम्
धात्र्यः सर्वाः कुमारस्य सङ्गता गन्धमादने ॥
रक्तध्वजपताकस्य रक्तांशुकनिवासिनः ।
कुमारस्यालयं तत्र यात बालं विमुञ्चत ॥
षण्मुखो द्वादशाक्षो वै तस्मिन् काले वृतो वरम्
वीरः कुमाराधिपतिस्तव पुत्रोऽभिषिच्यताम्॥
ब्राह्मणो ब्राह्मणानान्तु सर्ववेदविदां वरः ।
यक्षराक्षसनागानां गन्धर्वासुरयोरपि ॥
पिशाचभूतसङ्घानां व्याधीनां च स ईश्वरः ।
आज्ञापयति वः स्कन्दो गम्यतां गन्धमादनम्
ग्रहो यः कोपयेदाज्ञां कुमारस्य यशस्विनः ।
स्थानाच्युतः स वै क्षिप्रं बाह्यः पारिषदो भवेत्

ततोऽनन्तरं समाहितो वैद्यः सार्धैर्दशभिः श्लोकैः कुलविद्यां पठेत् । अस्यार्थः औलादयस्त्रयोदश ग्रहमातरः । भगवत्कुमारवचनादिमं शिशुं शीघ्रं प्रमुञ्चन्तु । कुमारवचनात् कालकल्पादिगुणा दूती सम्प्राप्ता शिशुर्मुच्यतामिति । किङ्किणीजालं सूक्ष्मघण्टासमूहः । पताकादिका मुद्रास्ते तुभ्यम् । हे मातरः शिशुर्मुच्यतां ते इति बहूनां प्रयो-

गो मन्त्रत्वात् । ते कुमारो गन्धादिकं प्रयच्छति । तदाघ्राय स्वां गतिं गच्छ । माचिरं शीघ्रम् । कुमारधात्र्यः सर्वाः गन्धमादने सङ्गताः । रक्तध्वजादिमतः कुमारस्य तत्नालयम् । तत्र यात । बालं विमुञ्चत । शेषस्य पाठ एव शरणम् । यो ग्रहः कुमारस्य यशस्विन आज्ञां कोपयेत् सः क्षिप्रमेव स्थानाच्युतः परिषदः स्ववृन्दात् बाह्यो भवेदिति कुलविद्या ॥

बलेरनन्तरं कुर्याद्धोममभ्यर्च्य पावकम् ।
पुष्पैर्भक्ष्यैश्च विविधैश्चरुणा लोहितैस्तथा ॥
गन्धैर्गुल्गुलुधूपैश्च समिधः खादिरादथ ।
शतमष्टोत्तरं हव्यमथवा चन्दनद्रुमात् ॥

ततो बलेरनन्तरं पावकमभ्यर्च्य पुष्पादिभिर्होमं कुर्यात । ततो हव्यमन्नं गन्धैर्गन्धद्रव्यैर्लोहितैः खादिरसमिधां चन्दनसमिधां चाष्टोत्तरं शतं हव्यम् ॥

अग्निदण्डं प्रवक्ष्यामि सर्वग्रहविमोक्षणम् ।
ब्रह्मण्यन्त्व(१)नलं देवं हव्यकव्यप्रतीच्छकम् ॥
देवानां (२)प्राङ्मुखं स्वस्तिस्वाहापहरतिद्रुतम्
सहस्रविद्यो दहनः पावकः सर्वभक्षणः ॥
त्वं हि यज्ञश्च यूपश्च त्वं हि धर्मवतां गतिः ।
हिरण्यरेता देवस्त्वं त्वं हि वेदविदां गतिः ॥
दुर्वृत्तानां विनाशाय त्वं समुत्पादितः सुरैः ।
दहसङ्ग्रहदेवत्वमिदं दुष्टस्य निग्रहम् ॥

अग्नये स्वाहा । महाग्नये स्वाहा ।

त्वं हि शान्तिकरो वह्निस्त्वं मारुतहरोदनः ।
हरिप्रधानगतिरासीदिमं निगृह्य गुह्यकमुत्सादय तेजसा त्वं मम वश्यं च तं कुरु दुष्टग्रहनिवारणं सर्वोपद्रवेषु च ॥

त्वया कृतेन होमेन शीघ्रं शान्तिः प्रजायते ।
आयाहि वह्ने देवानां त्वं हि वक्त्रं पुरातनम्
तेन सत्येन देवेश इमं साधय मे ग्रहम् ।

नमोऽस्तुते हव्यवाहन दण्डं प्रदर्शय दह दह दर्श दर्श तेज तेज मोटय मोटय अपस्मारमुद्वाटय कुमार पिशाचरेवतीरोदनत्रासन वित्रासन कम्पन उत्कम्पन विजृंभणदेवयक्षगन्धर्वभूतनागराक्षससन्तर्जनदण्डनाविधूसारयभगवन्नग्निदण्ड अग्निवीर्य नमस्तेजसास्वेनत्यक्तमुत्सादय स्वाहा । (३) भूर्भुवस्स्वस्स्वाहा । दीप्ततेजसे स्वाहा । हव्यवाहनाय स्वाहा । यमाय स्वाहा ॥

नश्यन्त्यनेन होमेन समस्ता बालकग्रहाः ।

अग्निदण्डो मन्त्रो यमाय स्वाहेत्येवमन्तः । अनेनानन्तरोक्तेन मन्त्रेण होमेन समस्ता बालकग्रहा नश्यन्ति ॥

तत्राग्नावरुणे ताम्रे तप्तहेमसमार्चिषि ॥
तारावैडूर्यसदृशे शशिविद्युत्समप्रभे ।
घृतमण्डाभवर्णे वा गन्धेन च घृतोपमे ॥
केतकोत्पलदध्याभे ध्रुवमारोग्यमादिशेत् ।
अनारोग्यं तु नीलेऽग्नौ कपिले भस्मनिष्प्रभे ॥

(१) त्वमलं (२) प्रमुखं (३) भूर्भुवाय स्वाहा इति पाठभेदाः ।

कृष्णे कपोते दुर्गन्धे मत्स्यपूयास्रगन्धिके ॥
वचालशुनगन्धाभे विस्रे कर्दमगन्धिके ।

इत्युत्तरे चतुर्थोऽध्यायः ॥

तत्राग्नाविलादिसिद्धलक्षणं तप्तहेमारुणादिरूपेऽग्नौ ध्रुवमवश्यमारोग्यमादिशेत् । नीलादिरूपेऽग्नावातुरस्यानारोग्यमादिशेत् ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः ।

ग्रहप्रतीकारस्य प्रकृतत्वात् स्नपनविधेश्च तत्र प्राधान्यात्तं प्रदर्शयितुं पृथगध्याय आरभ्यते ॥

अथातः स्नपनाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥
सरित्सङ्गमगोतीर्थगजेन्द्रस्कन्धगोकुले ।
चतुष्पथे च स्नपयेद् बालं सस्तन्यमातरम् ॥
श्मशाने दीर्घरोगार्तं मृतापत्यां च योषितम् ।

सरित्सङ्गमादिके बालं स्नपयेत् । सह स्तन्यमात्रा धात्र्या यो वर्तते तम् । सरिन्नदी । गोतीर्थं प्रधानगोस्थानम् । गजेन्द्रस्कन्धो भद्रवारणसमूहः । गोकुलो यत्र गोसमूहो वर्तते । दीर्घरोगेणार्तं बालं श्मशाने स्नापयेत् । तत्रैव च मृतवत्सां योषितम् ॥

दूर्वा क्षीरिद्रुमवती प्रागुदक्प्रवणा मही ॥
स्निग्धनीरुजपुष्पाढ्यपादपा स्नपने शुभा ।

दूर्वावत्त्वादिगुणा मही भूमिर्बालस्य स्नपने शुभा । प्राग्दिशाभिमुख्येननिम्ना प्राक्प्रवणा स्निग्धादिगुणाः पादपा यस्यां सा तथोक्ता ॥

रेवतीश्रवणस्वातीप्राजापत्योत्तरैन्दवे ।
पुष्ये मूले च बालस्य स्नानं पर्वदिनेषु च ॥

रेवत्याद्यन्यतमे नक्षत्रे बालस्य स्नानं शुभम् । प्राजापत्यं रोहिणी । ऐन्दवं मृगशीर्षम् । पर्वदिनेषु चाष्टम्यादिषु बालस्य स्नानं शुभम ॥

चतुर्हस्ताष्टहस्तं वा द्वात्रिंशद्धस्तमेव वा ।
नल्वमात्रप्रमाणं वा त्रिवर्णं मण्डलं लिखेत् ॥
गोचर्मचापेषुमितस्त्रिविधो नल्व उच्यते ।
चतुरश्रं चतुर्द्वारं पताकाभिरलङ्कृतम् ॥
आकीर्णं परितो दूर्वासिद्धार्थकयवाङ्कुरैः ।

चतुर्हस्ताद्यन्यतमेन मानेन त्रिवर्णं सितरक्तपीतादिकेन विभागेन मण्डलं लिखेत् । नल्वो मानविशेषः । किंलक्षण इत्याह । त्रिविधो नल्वः एको गोचर्ममितः द्वितीयश्चापेन धनुषा मितः तृतीय इषुणा शरेण मितः । चतुरश्रमित्यादि मण्डलविशेषणम् । पताका वैजयन्त्यः । परितः समन्ताद् दूर्वादिभिराकीर्णम् ॥

क्रमात् प्राच्यादिषु लिखेद् गजारूढं पुरन्दरम्
धर्मराजं महिषगं चक्राहस्थमपां पतिम् ॥

धनदं च गदापाणिं यमस्थानमतीत्य च ।
मातृस्थानं लिखेत्तस्मिन् सवृषं नन्दिकेश्वरम्
सवध्वनुचरं चादौ मृन्मयं च विनायकम् ।

तस्मिंश्च मण्डले प्राच्यादिषु दिक्षु क्रमात् पुरन्दरादीन् लिखेत् । प्राग्दिश्यैरावणारूढं पुरन्दरं सहस्राक्षं लिखेत् । दक्षिणस्यां महिषगतं धर्मराजं यमम् । पश्चिमायां चक्रवाकारूढमपांपतिं वरुणम् । मकरासनस्थमिति दारुवाहिः । उत्तरस्यां गदापाणिं धनदं वैश्रवणम् । दारुवाहिः सिंहासनस्थमिति । यमस्थानमतीत्यातिक्रम्य दक्षिणायां मातृस्थानं लिखेत् । सह वध्वा अनुचरैश्च वर्तत इति तथोक्तम् । तत्र चादावेव मृन्मयं विनायकं लिखेत् ॥

अतीत्य वरुणावासं सहस्रारं निवेशयेत् ॥
विष्णुप्रहरणं चक्रं सर्वविघ्ननिवारणम् ।
सुरयक्षेशयोर्मध्ये पद्महस्तालयां श्रियम् ॥
नन्द्यावर्ताङ्कुशादर्शमत्स्यस्वस्तिकतोरणम् ।
शङ्खं च दक्षिणावर्तं श्रीवत्सं माल्यदाम च॥
इन्द्रादीनां परीवारमैशान्यादि विदिक्षु च ।

तत्र च मण्डले वरुणावासमतीत्य पश्चिमायां विष्णोः प्रहरणं निवेशयेत् । सुरयक्षेशयोरिन्द्रधनदयोर्मध्ये पद्महस्तां पद्मालयां च श्रियं विनिवेशयेत् । तत्र च नन्द्यावर्तादिकं लिखेत् । स्वस्तिकनन्द्यावर्तौ सन्निवेशौ मण्डलार्थं प्रसिद्धौ । श्रीवत्साख्यो मणिस्तिर्यग्दीर्घश्चतुष्कोणः । ऐशान्यादिविदिक्षु क्रमेणेन्द्रादीनां परिवारं लिखेत् । ऐशान्यामिन्द्रपरिवारम् । आग्नेय्यां यमपरिवारम् । नैरृत्यां वरुणपरिवारम् । वायव्यां धनदपरिवारमिति ॥

लम्बोदरी लम्बभुजा लम्बकर्णी च राक्षसी ।
इन्द्रद्वारे निवेश्याः स्युर्यमद्वारे प्रलम्बिनी ॥
लम्बकेश्यप्पतिद्वारे कौबेरे लम्बनासिका ।

इन्द्रद्वारे पूर्वे लम्बोदरादिरूपास्तिस्रो राक्षस्यो निवेश्याः स्युः । उद्देश एकवचनेनापि कर्तृबहुत्वाद् बहुवचनम् । प्रलम्बिनीरूपानुगमा राक्षसी यमद्वारे । तद्वदपांपतेर्वरुणस्य द्वारे लम्बकेशीनामा । कौबेरे धनदद्वारे लम्बनासिका ॥

षट्कीलानायसान्कुर्यात्सप्ततैलोहिकान्भिषक्
द्वौ चात्र खादिरौ शङ्कू चन्दनाम्बुसमुक्षितौ ।

अत्र मण्डले सर्वतोदिक्कं पञ्चदश शङ्कून् कुर्यात् । तत्र केवलायोमयाः षण्मिश्रीकृतलोहत्रयमयाः सप्त । चन्दनाम्बुसमुक्षितौ चन्दनाम्बुसिक्तौ द्वौ खादिराविति । त्रयो लोहाः सितकृष्णपीताः ॥

अष्टौ घटाः षोडश वा द्वात्रिंशद्द्विगुणा अपि ।
स्वस्तिकाङ्काः प्रवालाभा रङ्गैरश्लेषकैः कृताः॥
यथाहौषधसंयुक्तशुचितोयप्रपूरिताः ।
क्षीरिवृक्षपलाशाब्जगन्धमाल्योपशोभिताः ॥
मण्डलस्य चतुर्द्वारे कर्तव्याः सुनिवेशिताः ।

स्वस्तिकाङ्का इत्यादि घटविशेषणम् । अश्लेषका रङ्गाः पृथग्भूता वर्णाः । यथार्हैरौषधैर्युक्तं यत् शुचि तोयं तेन प्रपूरिताः ।

देवता घटवर्णविशेषपरभागलाभयोग्यो यथार्हा-श्रैः । क्षीरि वृक्षपलाशादिभिः शोभिताः । पलाशं छदनम् । इन्द्रद्वारे शुक्लरक्ताः । यम-द्वारे कृष्णाः । वरुणद्वारे पीताः । कुबेरद्वारे लोहिताः । इत्येवमादिना सुनिवेशिताः ॥

पूर्वेषु प्रक्षिपेद्धेम ततश्च मणिमौक्तिकम् ।
अपरेष्वौषधीबीजानुदक्ष्वक्षतसर्षपान् ॥

पूर्वेषु घटेषु हेम काञ्चनं प्रक्षिपेत् । तत इति दक्षिणेषु मौक्तिकम् । सुबोधम् ॥

मृदः पवित्रा रक्षोघ्नीराहरेत् सुरालयात् ।
हस्तिशालाश्वशालाभ्यां शृङ्गाटकचतुष्पथात् ॥
वल्मीकाग्रान्नदीतीराद्वेश्याकोशनृपालयात् ।
गुप्तिद्वारात् समुद्राच्च समिद्धं चाग्निमाहरेत् ॥
समिधः क्षीरिवृक्षाणां गन्धमाल्यं घृतं मधु ।
अक्षतांस्तण्डुलान्लाजानपञ्चवर्णोदनंतिलान्

तत्र च सुरालयादितो रक्षोघ्नीर्मृद आ-हरेत् । शृङ्गाटकं त्रिपथम् । वल्मीकः पि-पीलिकास्थाणुः । वेश्यालयात् कोशालयान्नृ-पालयाच्च । कोशो धननिचयः । गुप्तिद्वारात् समुद्राच्च । समिद्धं दीप्तमग्निं यागजमरणिजं वा यथालाभमाहरेत् । क्षीरिवृक्षसमिदादींश्च ॥

ततो मध्यस्थिते पद्मे सह धात्र्योपवेशयेत् ।
बालमौदुम्बरे पीठे पालाशे वाप्युदङ्मुखम् ॥
आस्तृते हरितैर्दर्भैर्न तु प्राच्यादिदिङ्मुखम् ।

ततोऽनन्तरं मण्डलमध्यस्थिते पद्मे धा-त्र्या सह बालमुदङ्मुखमुदुम्बरकाष्ठकृते पा-लाशे वा पीठे हरितैर्दर्भैरास्तृते उपवेशयेत् । प्राच्यादिदिगभिमुखन्नैवोपवेशयेत् ॥

उदाहरिष्यते मन्त्रो यः स्कन्दबलिकर्मणि ।
जुहुयात्तेन तत्राग्निमुदीच्यां स्थापितं दिशि ॥

तत्र पद्ममण्डलस्योदीच्यां दिशि स्था-पितमग्निं तेन मन्त्रेण जुहुयाद्यो मन्त्रः स्क-न्दबलिकर्मण्युदाहरिष्यते स च प्रत्येकग्रहप्रति-षेधे अग्नये कृत्तिकेत्यादिना पठितः ॥

त्रिरात्रोपोषितो वैद्यः शुक्लवासा जितेन्द्रियः ।
सर्षपाक्षतयुक्ताभिर्मृद्भिर्गात्राणि मार्जयन् ॥
यथोदिताभिःस्नपयेत्घटैःप्राच्यादिदिक्स्थितैः
क्रमात् प्रदक्षिणोत्क्षिप्तैः—

ततोऽनन्तरं त्रिरात्रोपोषितत्वादिगुणो वै-द्यो बालस्य गात्राणि सर्षपाक्षतयुक्ताभिर्मृद्भि-र्मार्जयन् तं बालं प्राचीदक्षिणादिदिग्भ्यः क्र-मेण मण्डलादुत्क्षिप्तैर्घटैः स्नपयेत् ॥

—तत्र मन्त्रं प्रयोजयेत् ॥

अमृतात् पूर्वमुत्पन्नमिमं ते कलशं शुभम् ।
ददातु भगवानिन्द्रो विजयं नामनामतः ॥
रक्तपीताम्बरधरैर्भूतैर्बहुभिरन्वितः ।
राक्षसोरगगन्धर्वपिशाचैश्चानुसेवितः ॥
वज्रघण्टाशनिधरैर्मेघैश्च विविधस्वनैः ।
देवसङ्घैः परिवृतो गजेन्द्रस्कन्धसंश्रितः ॥
एभिः सार्धं महानिन्द्रः स्नपनं तेनुमन्यताम् ।
पूर्वद्वारे स्थितं दिव्यं वज्रमिन्द्राज्ञया शुभम् ॥
तव सर्वाणि पापानि निहन्ता चापराजितः ।

इन्द्राय नमः स्वाहा । इन्द्राण्यै नमः स्वाहा । अपराजिताय स्वाहा । मेघाधिपतये स्वाहा । देवाधिपतये स्वाहा शतक्रतवे स्वाहा ॥

अमृतादित्यादिस्नपने इन्द्रकलशोत्क्षेपे च मन्त्रः । एवमुत्तरत्रापि ॥

द्वितीयं कलशं पुण्यमादित्यसदृशप्रभम् ।
यमो ददातु भगवान् वैजन्तं तु नामतः ॥
कृष्णाञ्जननिभैर्घोरैः कृष्णाम्बरधरैस्तथा ।
वृतः करालैर्विकृतै राक्षसैरुग्रविक्रमैः ॥
श्मशानारण्यनिलयैर्मृतवस्त्रान्त्रभूषणैः ।
त्वगस्थिमज्जमांसादैः प्रेतैर्बहुभिरावृतः ॥
धर्मराजो यमः श्रीमान् सत्यसन्धो महातपाः
दिव्यं महिषमारुह्य स्नपनं तेनुमन्यताम् ॥
दक्षिणद्वारसंस्थस्ते यमदण्डः प्रतापवान् ।
दुःस्वप्नं दुष्कृतं पापं सर्वमद्य हनिष्यति ॥

यमाय नमः स्वाहा । यमदण्डाय नमः स्वाहा । महिषवाहनाय स्वाहा । प्रेताधिपतये स्वाहा । धर्माधिपतये स्वाहा । वैजयन्ताय स्वाहा ॥

द्वितीयमित्यादि वैजयन्ताख्ये यमकलशे मन्त्रः ॥

जयन्तं जयवृध्यर्थं तृतीयं कलशं शुभम् ।
ददातु मधुराजस्ते भगवान् वरुणः स्वयम् ॥
श्वेतमाल्याम्बरधरैः श्वेतगन्धानुलेपनैः ।
गन्धर्वैः पन्नगेन्द्रैश्च भगवाननुशोभितः ॥
तीर्थकूपनदीवृक्षनिष्कुटोद्यानवासिभिः ।
(१)प्रबलैः कपिलैर्मुण्डैर्विकटैर्वामनैस्तथा ॥
वृतः परिषदैर्भूतैः पाशमुद्गरपाणिभिः ।
एभिः सहाद्य भगवान् वरुणस्त्वाभिषिञ्चतु ॥
वरुणस्य महापाशोऽप्यपरद्वारमाश्रितः ।
तव पापं विहन्त्वाशु सर्वविघ्ननिवारणः ॥

वरुणाय नमः स्वाहा । श्वेताम्बरधराय स्वाहा । मकरवाहनाय स्वाहा । जयन्ताय स्वाहा ॥

जयन्तमित्यादि तृतीयकलशे जयन्ताख्ये मन्त्रः । निष्कुटो गृहारामः विकटो विस्तीर्णः ॥

चतुर्थं कलशं पुण्यं प्रधानमपराजितम् ।
धनेश्वरो महाबाहुः प्रयच्छत्वलकाधिपः ॥
चित्रमाल्याम्बरधरैश्चित्रगन्धानुलेपनैः ।
चित्रमद्यमदोन्मत्तैर्यक्षैः समुपसेवितः ॥
मुदितोद्गीतगन्धर्वैः सेवितश्चाप्सरोगणैः ।
स ते वैश्रवणः श्रीमान् स्नपनन्त्वनुमन्यताम् ॥
सर्वव्याधिहरा दीप्ता द्वारमुत्तरमाश्रिता ।
गदा ते नाशयत्वद्य सर्वपापं दिशोदश ॥

धनाधिपतये स्वाहा । गदापाणये स्वाहा । अपराजिताय स्वाहा । चित्राम्बरधराय स्वाहा ॥

चतुर्थमित्यादि धनदकलशे अपराजिताख्ये मन्त्रः । अळका नाम यक्षनगरी ॥

आपः पवित्रं लोकेस्मिन्नापो वै परमं शुचिः ।

(१) प्रवलगतकपिलैरिति च पाठः ।

आपो वै देवताः सर्वा आपस्त्वा अभिषिञ्चयताम् ॥
ब्रह्मा ब्रह्मर्षिभिः सार्धं भगवांस्त्वाभिषिञ्चतु ।

स्वाहा ।

साङ्गोपाङ्गास्तथा वेदाः कीर्तिर्लक्ष्मीः सरस्वती
बाला दाक्षायणी सीता सावित्री सरमा द्युतिः ।
आकाशगङ्गा गङ्गाद्या महानद्यो महोदधिः ॥
नदीनां सङ्गमास्तीर्थां निर्झराः सागरास्तथा ।
मेरुर्महेन्द्रो हिमवान् जगच्च स्थावरत्वयम् ॥
स्कन्दादयो ग्रहाश्चैव तोषिता वलिकर्मणा ।
अद्य त्वा मभिषिञ्चन्तु नीरुजो भवदारक ॥

नमो भगवते पितामहाय । ॐ–मं ॐ–मं-लिम–लिम–लि झुक्–लिझुक्–लिपि-भवनेभ्यः स्वाहा ॥

नमो भगवते रुद्राय हिलिमिलि, मेलि, मेलि, वेलि वेलि, स्मिलिस्मिलि स्वाहा ॥
राक्षसाश्च पलायन्तु भूताश्च त्रस्तमानसाः ।
मृताशना महाजिह्वास्तथा विघ्नविनायकाः ॥

नमो भगवते कुमाराय पिलि, पिलि, खिलि, खिलि, । खिणि, खिणि, स्वाहा ॥

पुष्करं पुष्करारण्यं नैमिशं च तथागया ।
प्रभासं प्रवरं तीर्थं तथा पिण्डारकाह्वयम् ॥
तीर्थान्येतानि सर्वाणि अभिषिञ्चन्तु स्वस्ति ते

नमो भगवतीभ्यो महायोगीश्वरीभ्यो। निमिनिमि मेनुमेनु तुरुतुरु स्वाहा ॥

याश्च जातापहारिण्यो राक्षस्यो विकृताननाः
अपितानिहताःसर्वाश्चान्याःपापचिन्तकाः ।
सतीनां कपिलानां च सिद्धानां चैव तेजसा
तेजसा चर्षिविप्राणां मयाद्य स्नपितो भवान्
मभुर्मृत्युरलक्ष्मीश्च कालरात्रिश्च सारथिः (१)
लम्बा च लोहशङ्कुश्च पूतना कूटपूतना ।
अशुभं यच्च ते किञ्चित् सर्वं प्रतिहतं मया ॥
आदित्यावसवो रुद्रा अश्विनावौषधीगणाः ।
गावोन्तरिक्षं सन्ध्ये च नक्षत्रग्रहवत्सराः ॥
विश्वावसुश्च हाहा च नारदस्तुम्बुरुस्तथा ।
धन्वन्तरिरगस्त्यश्च सुस्नातं प्रदिशन्तु ते ॥

आप इत्यादिकः धन्वन्तरिरगस्त्यश्च सुस्नातं प्रदिशन्तु ते इत्येवमन्तो मन्त्रपाठो विज्ञेयः ।

स्नातो द्विजभिषग्भृत्यान्यथाविभवमर्चयेत् ।
मांसव्यवायाहःस्वप्नान् पञ्चरात्रं विवर्जयेत् ॥

एतेन च विधिना स्नातः सन् बालो यथाविभवं द्विजादीनर्चयेत् । पञ्चरात्रं च मांसादीन् वर्जयेत् ॥

स्नपनं पाप्मजित् पुण्यं नीरुजामपि पुष्टिकृत् ।
रोगिणां सर्वरोगघ्नं वन्ध्यानामपि पुत्रदम् ॥
विधिना विधिहीनन्तु सर्वेधं हन्तिबालकम् ॥
नैतदश्रद्दधानाय योज्यं नानुपसीदते ।

एतच्च स्नपनं पाप्मजित् पुण्यं निरुजानामपि बालानां पुष्टिकृद्भवति । रोगिणां पुनर्बालानां सर्वरोगघ्नम् । वन्ध्यानामपि योषितां पुत्रदं

(१) सारतिरिति च पाठः ।

मांसासिरादीनि यस्मिन् सः सन्धिः श्लेषमन्योन्यसंश्लेषं न गच्छति प्राप्नोति ॥

**वातव्याधिविनिर्दिष्टान् स्नेहान्भग्नस्य योजयेत्।**
**चतुष्प्रयोगान्बल्यांश्च वास्तिकर्म च शीलयेत् ॥**

सुबोधम् । [भग्नस्य नरस्य वातव्याधिविनिर्दिष्टान् वातव्याधिचिकित्सितोक्तगुडूगुलुतिक्तबलातैलादीन् स्नेहान् बल्यान् बलकरान् चतुष्प्रयोगान् पानान्वासननावनाभ्यङ्गान् योजयेत् । तथा वास्तिकर्म कर्मकालादिभेदेन बहुविधं वस्तिकर्म च शीलयेदभ्यसेत् ॥ ]

**शालिक्षीररसाज्याद्यैः पौष्टिकैरविदाहिभिः ।**
**मात्रयोपचरेत्भग्नं सन्धिसंश्लेषकारिभिः ॥**

सुबोधम् । [भग्नं पुरुषं सन्धिसंश्लेषकारिभिः सन्धेः संश्लेषकरणसमर्थैः पौष्टिकैर्देहपुष्टिकरैरविदाहिभिर्विदाहरहितैः शल्यादिभिर्मात्रयोपचरेत् भोजयेदित्यर्थः । आदिशब्देन मांसकंगुषष्टिकादिपरिग्रहः ॥ ]

**ग्लानिर्नशस्यतेतस्य सन्धिविश्लेषकृद्धिसा ॥**

तस्य भग्नस्य तु ग्लानिर्नशस्यते सा हि ग्लानिः सन्धिविश्लेषकृत् । [ग्लानिरिन्द्रियसादः तत्कारणं व्यायामादिकमित्यर्थः । सा ग्लानिः सन्धिविशेषकृद्यस्मात्तस्मात् ग्लानिर्नेहिता ॥ ]

**लवणंकटुकंक्षारमम्लंमैथुनमातपम् ।**
**व्यायामं च न सेवेत भग्नो रूक्षं च भेषजम् ॥**

भग्नश्च लवणादिकं न सेवेत । क्षारं यवक्षारादि । रूक्षं निस्नेहम् ॥

**सम्यग्यमितमप्यस्थिदुर्न्यासाद्दुर्निबन्धनात् ।**
**संक्षोभादपियत्गच्छे द्विक्रियांतद्विवर्जयेत् ।**
**आदितोयचदुर्जातमस्थिसन्धिरथापि वा ॥**

सम्यक्शास्त्रोक्तविधानेन नियमितमपि तत्कालम् । कालान्तरेण दुर्न्यासादिना यदस्थि विक्रियां विकारं गच्छेत् तद्विवर्जयेत् । आदितो गर्भादेव यदस्थि वा सन्धिर्वा दुर्जातं तदपि वर्जयेत् । [विक्रिया उन्नतावनतत्वाद्य यथापूर्वसंस्थितिः ॥ ]

[अस्थिविशेषकृतं भङ्गस्यव्यवहारविशेषनिमित्तमाह ॥ ]

**तरुणास्थीनिभुज्यन्ते भज्यन्ते नळकानि तु ।**
**कपालानिविभिद्यन्ते स्फुटन्त्यन्यानिभूयसा ॥**

तरुणास्थ्यादीनि शारीरउक्तान्यस्थीनि । भुज्यन्ते कुटिलीभवन्ति । भङ्गो द्विधाभवनम् । विभेदः छिद्रणम् । स्फुटनं दलनम् । [तरुणास्थीनि नासादिगतानि मृद्वस्थीनि । नळकानि कोर्परजंघादिगतानि । कपालानि शिरःकटीकपालादिगतानि । अन्यानि पृष्ठवंशपर्शुकाग्रादीनि ॥ ]

**अनुद्धणमनाविद्धं स्वस्थानेपर्यवस्थितम् ।**
**अवेदनं च चेष्टायां भग्नं विद्यात् सुसाधितम् ॥**

अनुद्धणमित्यादि सुसाधितस्य भग्नस्य लक्षणम् ॥

**कृष्णांस्तिलान्विरजसोदृढवस्त्रबद्धान्**
**सप्तक्षपावहतिवारिणिवासयेत ।**
**संशोषयेदनुदिनंप्रतिसार्यचैनान्**
**क्षीरेतथैवमधुकक्वथिते च तोये ॥**

पुनरपिपीतपयस्कां
स्तान् पूर्ववदेवशोषितान् बाढम् ।
विगततुषानरजस्कान्
संचूर्ण्यविचूर्णितैर्युञ्ज्यात् ॥
नळदवालकलोहितयष्टिका
नखमिसिप्लवकुष्ठबलात्रयैः ।
अगरुकुंकुमचन्दनशारिवा
सरलसर्जरसामरदारुभिः ॥
पत्मकादिगणोपेतैस्तिलपिष्टंततश्चतत् ।
समस्तगन्धभैषज्यसिद्धदुग्धेनपीडयेत् ॥
शैलेयरास्नांशुमतीकशेरु
काळानुसारीनतपत्रलोध्रैः ।
सक्षीरशुक्लैः सपयः सदूर्वै-
स्तैलंपचेत्तन्नळदादिभिश्च ॥
गन्धतैलमिदमुत्तममास्थि-
स्थैर्यकृज्जयतिचाशुविकारान् ।
वातपित्तजनितानतिवीर्य
व्यापिनोपिविविधैरुपयोगैः ॥

इत्युत्तरे द्वात्रिंशोऽध्यायः ॥

कृष्णांस्तिलानित्यादिना गन्धतैलमाह । तिलानां दिवाशोषणं रात्रौ वहति प्रवहति वारिणि पानीये वस्त्रबद्धानां वासनमिति सप्तरात्रम् । ततः क्षीरे प्रतिसारणं शोषणं च । ततो मधुयष्टिजले प्रतिसारणं पुनः शोषणम् । पुनरपि क्षीरे भावनम् । ततः संशोष्यावचूर्णनम् । ततो नळदादिचूर्णैः संयोजनम् । ततः सर्वगन्धद्रव्यसिद्धक्षीरेण पीडनम् । ततस्तस्य तैलस्यैतैर्नळदादिभिः शैलेयादिभिश्च सहपचनमिति गन्धतैलविधानम् । नळदं मांसी । उशीरं वा । वालकं जलम् । लोहितयष्टिका मञ्जिष्ठा । मिसिः शतपुष्पा । प्लवङ्कैवर्ती मुस्तकम् । बलात्रयं बला अतिबला श्वेतबला च । पत्मकादिगणः शोधनादिगणोक्तः । सर्जो देवधूपः । रसो निर्यासः । अमरदारु देवकाष्ठम् । क्षीरशुक्ला क्षीरविदारी । शैलेयं शिलाजतु । कशेरु प्लवम् । काळानुसारी तुम्बुरु । नतं तगरम् । पत्रं गन्धपत्रम् । इदं नाम्ना गन्धतैलम् । उत्तमं श्रेष्ठमस्थां स्थैर्यकृत् । एतच्चातिवीर्यं व्यापिनोपि वातपित्तजनितान् विकारान् विविधैः पानादिभिरुपयोगैर्जयतीति । [विरजसो रजोरहितान् दृढवस्त्रबद्धान् दृढेन वस्त्रखण्डेन बद्धान् कृष्णतिलान् वहति प्रवाहयुक्ते जले सप्तक्षपाः सप्तरात्रं वासयेत । अत्र क्षपाशब्देन रात्रिरेव गृह्यते । एतान् तिलान् पुनः क्षीरे मधुककाथिते तोये च प्रतिसार्य भावयित्वा निक्षिप्येत्यर्थः । च शब्दः समुच्चये । तथैव तद्वदेव सप्तसप्तक्षपा इत्यर्थः अनुदिनमहन्यहनि परिशोषयेच्च । निशितोयादिनिक्षिप्तेष्वेकविंशतिदिनेष्वप्यातपे निक्षिप्य दिवा परिशोषयेदित्यर्थः । उक्तं च सौश्रुते । रात्रौ रात्रौ तिलान् कृष्णान् वासयेद स्थिरे जले । दिवा दिवा शोषयित्वा गवां क्षीरे च भावयेत् । तृतीयं सप्तरात्रन्तु भावयेन्मधुकाम्बुना । ततः क्षीरं पुनः पीतान् विशुष्कांश्चूर्णयेत् भिषगिति । पुनरपिपीतपयस्कान् क्षीराक्षितानित्यर्थः । पूर्ववदेव बाढमतिशयेन शोषितान् । विगततुषान् वीतत्वचः । अरजस्कानपगतरजसस्तान् कृष्णतिलान् संचूर्ण्य चूर्णयित्वा विचूर्णितैः सूक्ष्मरजीकृतैर्नळदादिभि-

योजयेत् । नळदादिचूर्णतिलपिष्टयोर्मिश्रीकरणे नळदादिचूर्णं तिलचूर्णाद्दशांशं योज्यम् । तिलाद्दशांशं तिलपीडनेषु चूर्णं तु भैषज्यभवं प्रयुञ्ज्यात् । चूर्णेतिरिक्तेन तु तैलभावोन्यूनेन भेषज्यफलं भवेच्च इत्युक्तत्वात् । ततोऽनन्तरं तं तिलपिष्टं समस्तगन्धभैषज्यसिद्धदुग्धेन समस्तैर्गन्धभैषज्यैश्चोरकवाळकोशीरकुष्ठचन्दनादिगन्धद्रव्यैः सिद्धेन पयसा सह चक्रयन्त्रे पीडयेच्च । पीडनस्यतो यस्थाने पयो योज्यमित्यर्थः । पीडनोत्भूतं तं तैलं पुनः सक्षीरशुक्तैः क्षीरशुक्तासहितैः सदूर्वैर्दूर्वयोपेतैः शैलेयादिभिः पूर्वोक्तैर्नळदादिभिश्च सह सपयः पयोयुक्तं तैलाच्चतुर्गुणेन पयसा युक्तमित्यर्थः । उक्तं च सौश्रुते । चतुर्गुणेन पयसा तत्तैलं विपचेत् भिषगिति । उत्तमं श्रेष्ठं इदं गन्धतैलाख्यं तैलमस्थिस्थैर्यकृत् पानाभ्यङ्गादिना अस्थ्नः स्थैर्यं करोति । विविधैरुपयोगैः पानान्वासननस्याभ्यङ्गादिभेदैःप्रयोगविशेषैः वातपित्तजनितान् वातपित्तोत्थान् अतिवीर्यं अतिशयितमुत्कृष्टं वीर्यं यस्य तत् अतिक्रान्तमर्यादमित्यर्थः यथा भवति तथा व्यापिनः सकलशरीरव्यापिनः विकारान् व्याधीनप्याशु न चिराज्जयति । गन्धतैलाख्येस्मिन्योगे वसन्ततिलकायौपच्छन्दसि केन्द्रवज्रास्वागताख्यानि क्रमात् पञ्चवृत्तानि च ॥ ]

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे द्वात्रिंशोऽध्यायः ॥

# त्रयस्त्रिंशोऽध्यायः ।

## भगन्दरप्रतिषेधम् ॥

व्रणतन्त्रप्रकरणे भगन्दराणां निर्णयं कर्तुमध्याय आरभ्यते ॥

अथातो भगन्दरप्रतिषेधं नामाध्यायं व्याख्यास्यामः इति ह ॥

हस्त्यश्वपृष्ठगमनकठिनोत्कटकासनैः ।
अर्शोनिदानाभिहितैरपरैश्चनिषेवितैः ॥
अनिष्टदिष्टपाकेन सद्यो वा साधुगर्हणैः ।
प्रायेणपिटकापूर्वो योंगुलेद्व्यंगुलेपि वा ॥
पायोर्व्रणोन्तर्बाह्यो वा दुष्टासृङ्मांसगोभवेत् ।
वस्तिमूत्राशयाभ्याशगतत्वात्स्यन्दनात्मकः ॥
भगन्दरः ससर्वांश्च दारयत्य क्रियावतः ।
भगवस्तिगुदांस्तेषु दीर्यमाणेषुभूरिभिः ।
वातं मूत्रं शकृच्छुक्रं खैः सूक्ष्मैर्वहति क्रमात् ॥

हस्त्यश्वपृष्ठगमनादिभिः पायोरंगुले व्यंगुले वा निकटे यो व्रणो भवेत् स भगन्दरः । अर्शसां च निदाने ये हेतवोभिहितास्तैरप्यपरैर्निषेवितैरिति सम्बन्धः । यच्च किञ्चिद्दिनचर्यादावनिष्टमिति दिष्टमुक्तं तस्य पाकेन फलपरिणामेन । सद्यः साधुगर्हणैरचिरकृतसज्जननिन्दाभिः । प्रायेण पिटका पूर्वमारम्भो यस्य स तथोक्तः । स च व्रणः पायोरन्तर्मुखो वा भवेत् बहिर्मुखो वा । स च व्रणो वस्त्यादीनामभ्याशगतत्वान्निकटवर्तित्वात् स्यन्दनात्मकःस्रा-

व्रणात्मको भवति । स भगन्दरोऽक्रियावतोऽपथ्यशीलिनः सर्वान् सकलान् भगादीन् दारयति च । तेषु भगादिषु दीर्यमाणेषु खैः स्रोतोभिर्बहुभिः सूक्ष्मैर्वातादिचतुष्टयं क्रमाद्वहति । [ निषेवितैर्नितरां सेवितैर्हस्त्यश्वपृष्ठगमनादिभिः हस्तिपृष्ठगमनमश्वपृष्ठगमनं कठिनासनमुत्कटकासनं च ; अर्शोनिदानेभिहितान्युक्तानि यान्यपराण्यतिव्यवायादीनितैः अर्शोनिदानाभिहितत्वेनैव हस्त्यश्वपृष्ठगमनादिके सिद्धे पुनरप्यत्र कथनादे तेषां भगन्दरस्य विशेषकारणत्वं सूचितम् । अथवा एवं विधैरपानमरुत्कोपकारणैरन्यैः च शब्दः समुच्चये । अनिष्टदिष्टपाकेन पुराकृताशुभकर्मफलपरिपाकेन । अथवाऽनिष्टदिष्टस्य दिनचर्यानिर्दिष्टस्य पापकर्मणः पाकेन फलपरिणामेन सद्यः साधुगर्हणैरचिरकृताभिः सज्जननिन्दाभिः पायोर्गुदस्यैकांगुलप्रमाणे वा निकटे वाशब्दादर्द्धांगुलत्र्यंगुलयोरपि ग्रहणम् । उक्तं च शास्त्रान्तरे । पिटकां जनयेज्जन्तोर्गुदनाड्यां सुदारुणाम् । गुदस्यार्द्धांगुलेवापिद्व्यंगुलेत्र्यंगुलेपि वा इति । अन्तरन्तर्भागे बाह्यः बहिर्भागे वा । दुष्टासृङ्मांसगो दुष्टरक्तमांसाश्रितः । वस्तिमूत्राशयाभ्याशगतत्वाद्वस्तेर्मूत्राशयस्य च समीपगतत्वात् । वस्तिमूत्राशययोरवयवाशयविशेषत्वमङ्गविभागाच्छारीरादवगन्तव्यम् । स्यन्दनात्मकः सदास्रावयुक्तः । प्रायेण बाहुल्येन पिटकापूर्वः पिटकापूर्वमारम्भो यस्य स तथोक्तः । पूर्वं पिटका जायते ततः पाकाद्व्रणःस्यादित्यर्थः । प्रायः शब्देन क्षतजस्य भगन्दरस्य पिटकया विना सम्भवः सूचितः । य एवं विधो व्रणः स भगन्दराख्यो रोग अक्रियावतः प्रमादाच्चिकित्सामकुर्वतो नरस्य सर्वान् भगवस्ति गुदान् दारयति । अत्र सर्वशब्देन साकल्यग्रहणं भगादीन् साकल्येन दारयतीत्यर्थः । भगादिदेशदरणात् भगन्दराख्यास्य । गुदप्रदेशदरणात् गुदन्तराख्या वस्तिप्रदेशदरणाद्वस्तिन्दराख्या कथं न युज्यत इति चेदत्र ब्रूमः । विशेषेण भगस्य दरणादन्यत्रापि भगवद्दरणाच्चभगन्दरइत्येवाख्या न गुदन्दरो न वस्तिन्दर इति । उक्तं च भोजे । भगं परिसमन्ताच्च गुदं वस्तिं तथैव च । भगवद्दारयेद्यस्मात्तस्मात् ज्ञेयो भगन्दर इति । चशब्दः समुच्चये । तेष्विति तेषु भगादिषु दीर्यमाणेषु दारितेषु भूरिभिर्बहुभिः सूक्ष्मैः स्रोतोमुखैर्वातादीन् क्रमेण वहति । वातमथो वातम् । मारुतस्य सूक्ष्मस्रोतोगामित्वात् पूर्वं वातं वहति । द्रवरूपत्वात् पुनर्मूत्रं वहति । गुदावयवस्य निकटवर्तित्वात्ततः पुरीषं वहति शुक्राशयस्य किञ्चिद्दूरतया अन्ते शुक्रं चेतिक्रमार्थः । ]

(एवं विधस्य भगन्दरस्य वाताद्यागन्तुकारणभेदादष्टविधत्वमाह ।)

**दोषैः पृथग्युतैः सर्वैरागन्तुः सोष्टमःस्मृतः ॥**

स च भगन्दरः पृथग्दोषैस्त्रिविधो भवति । युतैरिति मिश्रैः तेन संसर्गेण त्रयः सन्निपातेनैक इति दोषजाः । सप्तभगन्दराः अष्टमआगन्तुः ॥

**अपक्वं पिटकामाहुः पाकप्राप्तं भगन्दरम् ॥**

तं च रोगविशेषमपक्वभूमिकास्थमाचार्याः पिटकामाहुः । स एव च पाकभूमिकामारूढो भगन्दर उच्यते ॥

गूढमूलांससंरम्भांरुगाढ्यां रूढकोपिनीम्।
भगन्दरकरींविद्यात् पिटकांनत्वथोन्यथा॥

या च पिटकागूढमूलत्वादियुक्ता सा भगन्दरत्वमारुरुक्षुर्विज्ञेया । अत उक्तादन्यथा वैपरीत्येन या पिटका सा भगन्दरकरीति न विज्ञेया । [दृढमूलामिति च पाठः । दृढमूलां दृढमचञ्चलं मूलं यस्याः तां पुनः पुनरेकत्र पूर्ववदेवोत्पत्तिर्दृढमूलत्वम् । ससंरम्भां संरम्भयुक्तां संरम्भो वेदनाविशेषः । रुगाढ्यामतिशयितपीडायुक्ताम् । रूढकोपिनीं तत्तत्प्रतिक्रियया व्रणे रूढेऽपि पुनः कोपउद्भवो यस्यास्तां पिटकां भगन्दरकरीं भगन्दराख्यव्रणजननीं विद्यात् । अत उक्तप्रकारादन्यथा वैपरीत्ये तु न भगन्दरकरीं पिटकामात्रामेवविद्यादित्यर्थः ॥]

तत्रश्यावारुणातोदभेदस्फुरणरुक्करी ।
पिटकामारुतात्

तत्रेत्यादिना वातादिविशेषेण भगन्दरपिटकानां लक्षणम् । सुबोधम् । श्यावादिगुणा वातात् पिटका । [तत्र तासु मध्ये मारुतोद्भवा पिटकाश्यावाद्यन्यतरवर्णातोदादिकरी च॥]

पित्तादुष्ट्रग्रीवावदुच्छ्रिता ॥
रागिणी तनुरूष्माढ्या ज्वरधूमायनान्विता ॥

उष्ट्रग्रीवावदुच्छ्रितेत्यादिगुणा पित्तात् । [पित्तात् पिटका उष्ट्रग्रीवावत् उष्ट्रस्य ग्रीवेवोच्छ्रिता उन्नता । उष्ट्रग्रीवा साम्येनौन्नत्याधिक्यमधोगुरुत्वं च ध्वनितम् । रागिणी रागयुक्ता । तनुरल्पा । ऊष्माढ्योष्मबहुला । ज्वरधूमायनाभ्यां युक्ता धूमायनं धूमोद्गमनप्रतीति ॥ ]

स्थिरास्निग्धामहामूलापाण्डुःकण्डूमतीकफात्॥

स्थिरादिगुणा कफात् । [कफात् पिटका स्थिरा अचला स्निग्धा महामूला पृथुमूला पाण्डुः पाण्डरवर्णा कण्डूमती कण्डूयुक्तास्यादिति शेषः ॥ ]

श्यावाऽताम्रासदाहोषा घोररुग्वातपित्तजा ॥

वातपित्तजा पिटका श्यावादिगुणा । [वातपित्ताभ्यां जाता पिटका श्यावाश्यावर्णा आताम्रा ईषत्ताम्रवर्णा । द्विदोषजत्वादस्या द्विदोषवर्णयोः समबलयोरेकत्रासम्भवादा ताम्रेत्युक्तम् । सदाहोषा दाहोषासहिता दाहः सर्वाङ्गीणस्तीव्रसन्तापः । ऊषा प्रादेशिकदाहः । घोररुक् घोरा उग्रारुक्पीडाविशेषो यस्मिन् ॥ ]

पाण्डराकिञ्चिदाश्यावाकृच्छ्रपाकाकफानिलात्

कफानिलाज्जाता पिटका पाण्डरादिगुणा । पित्तकफजा पिटका अर्शो भगन्दर एव वक्ष्यते । [कफानिलाज्जाता पिटका किञ्चित् पाण्डराधूसरवर्णा आश्यावा ईषच्छ्यावा च अत्यन्तविपरीतयोः श्यावपाण्डरयोः सङ्करादुभयोरपिवर्णयो रस्पष्टता भवतीत्यर्थः । कृच्छ्रपाका चिरपाका कृच्छ्रशब्देन पाचनौषधप्रलेपादिभिरपि पाकस्य दुष्करत्वं सूचितम् ॥ ]

पादांगुष्ठसमासर्वैर्दोषैर्नानाविधव्यथा ।
शूलारोचकतृड्दाहज्वरच्छर्दिरुपद्रुता ॥

सर्वैर्दोषैर्जाता पिटका पादांगुष्ठसमत्वादिगुणा । [सन्निपातोत्था पिटका मानसं स्थानादिभिः पादांगुष्ठसदृशी । नानाविधा नाना-

प्रकारा व्यथा पीडाविशेषो यस्यां सा तथा । शूलाद्युपद्रुतिः पाकोन्मुखानां सर्वासां लिङ्गमिति केचित् । क्षतजस्य भगन्दरस्य पिटकाभावात्तत्पिटका नाभिहिता ॥ ]

(पिटकावस्थालक्षणमुक्त्वानन्तरं भगन्दरावस्थालक्षणानुसारेण नामविशेषश्चोच्यते ॥ )

**व्रणतांयान्तिताः पक्काः प्रमादात्**

ताः सर्वाः पिटकाः प्रमादात् पक्काः व्रणतां यान्ति । ता भगन्दरकारिण्यः पिटकाः प्रमादादचिकित्सयेत्यर्थः । अत्र प्रमादशब्दकथनेन सावधानश्चेत् पाकादने कोपद्रवकारिणीमेवंविधां पिटकां कदाचिदपिनोपेक्षेत इति च सूचितम् । पक्काः व्रणतां यान्ति व्रणत्वं प्राप्नुवन्ति ॥ ]

**तत्रवातजा ॥**

**चीयतेऽणुमुखैश्छिद्रैःशतपोनकवत्क्रमात् ।**
**अच्छंस्रवद्भिरास्रावमजस्रंफेनसंयुतम् ॥**
**शतपोनकसंज्ञोयं-**

तत्र वातजा पिटका पक्कासत्यणुमुखैश्छिद्रैः शतपोनकवत् चालनीवक्रमाच्चीयते । किम्भूतैश्छिद्रैरित्याह । अजस्रमविच्छेदेनाच्छं फेनसंयुतं चास्रावं स्रवद्भिः । अयं भगन्दरो नाम्ना शतपोनकः । आस्रावं पूयस्रवणम् ॥

**उष्ट्रग्रीवस्तुपित्तजः ॥**

पित्तपिटकया पक्वयोष्ट्रग्रीवाख्यो भगन्दर उच्यते [पित्तजो भगन्दरस्तु उष्ट्रस्य ग्रीवावदुच्छ्रितमुखत्वा दुष्ट्रग्रीवाख्यः । ]

**बहुपिच्छापरिस्रावी परिस्रावीकफोद्भवः ॥**

कफपिटकया पक्वया भगन्दरो बहुपिच्छापरिस्रावी नाम्ना परिस्रावी । [कफजो भगन्दरः अनल्पपिच्छास्रावयुक्तस्तस्मात् परिस्रावीसंज्ञः ॥ ]

**वातपित्तात्परिक्षेपीपरिक्षिप्यगुदंगतिः ।**
**जायतेपरितस्तत्रप्राकारं परिखेव च ॥**

वातपित्तात् भगन्दरोनाम्ना परिक्षेपी । तत्र च गुदं परिक्षिप्य मण्डलाकृत्यागतिर्नाडी जायते प्राग्भारपरिखासदृशा । प्राकारस्यपरितः परिखाबहिर्निकटे खाता । [वातपित्तजो भगन्दरः परिक्षेपीसंज्ञः । तत्र परिक्षेपिणिप्राकारस्यपरितः परिखेव गुदं परिक्षिप्य गुदस्य परितो मण्डलाकृत्या नाडी जायते ॥ ]

**ऋजुर्वातकफादृज्व्यागुदोगत्यावदीर्यते ॥**

वातकफाद्यो भगन्दरः स ऋजुर्नाम्ना । तत्र ऋज्व्यागत्या गुद अवदीर्यते । वातकफजो भगन्दरऋज्याख्यः । तत्रेति पूर्वस्माद्वानुवर्तते । तत्र ऋज्वाख्ये भगन्दरे ऋज्व्या अवक्रयागत्या गुदोवदीर्यते ॥ ]

**कफपित्ते तु पूर्वोत्थं दुर्नामाश्रित्य कुप्यतः ।**
**अर्शोमूलेततःशोफःकण्डूदाहादिमान् भवेत् ॥**
**सशीघ्रंपक्वभिन्नोस्य क्लेदयन् मूलमर्शसः ।**
**स्रवत्यजस्रंगतिभिरयमर्शो भगन्दरः ॥**

पूर्वोत्थं स्वकारणैः प्रथममुत्पन्नं दुर्नामार्श आश्रित्य कफपित्ते द्वे कुप्यतः कोपं गच्छतः । ततो हेतोरर्शोमूले कण्ड्वादिमान् शोफः स्यात्

सशीघ्रं पक्वाभिन्नोऽस्यार्शसोमूलं क्लेदयन् गातिभिर्नाडीभिरजस्रमविच्छेदनपूयं स्रवत्ययंनाम्नार्शोभगन्दरः ॥

सर्वजःशम्बुकावर्तःशम्बुकावर्तसन्निभः ।
गतयोदारयन्त्यस्मिन्रुग्वेगैर्दारुणैर्गुदम् ॥

यः सन्निपातजो भगन्दरः सशम्बुकावर्ताख्यः शम्बुकावर्तसन्निभः शम्बुकस्यावर्तेन सदृशः शम्बुकोनामावर्तयुक्तो मत्स्यविशेषः तस्यावर्ता देहे भवन्ति । अस्मिन् शम्बुकावर्ताख्ये भगन्दरे गतयो नाड्यः दारुणैः रुग्वेगै गुदं दारयन्ति ॥

अस्थिलेशोऽभ्यवहृतो मांसगृध्यायदा गुदम् ।
क्षिणोतितिर्यङ्निर्गच्छन्नुन्मार्गं च ततो गतिः ॥
स्यात्तदा पूयदीर्णायां मांसकोथेन तत्र च ।
जायन्ते क्रिमयस्तेऽस्य खादन्तःपरितो गुदम् ।
विदारयन्तिनचिरा दुन्मार्गी क्षतजश्चसः ॥

यदातु मांसगृध्या मांसलोभेनास्थिलेशोऽभ्यवहृतो भक्षितः सन् गुदं क्षिणोतिहिनस्ति तिर्यङ्निर्गच्छन्नुन्मार्गं च ततः क्षतान् गतिर्नाडीस्यात् तदा तत्र तस्यां नाड्यां पूयेन दीर्णायां मांसकोथेन हेतुना क्रिमयो जायन्ते । परितः समन्तात् गुदं खादन्तस्ते च क्रिमयोऽस्य पुरुषस्य गुदमचिराद्वि दारयन्ति । स भगन्दरो नाम्ना उन्मार्गी क्षतजश्च भवति ॥

तेषुरुग्दाहकण्ड्वादीन्विद्याद्व्रणविभक्तितः ॥

तेषु च भगन्दरेषु व्रणविभक्तितो व्रणविभक्तिप्रकारेण रुगादीन् विद्याज्जानीयात् । [रुग्दाहकण्ड्वादीन् रुगादीन् दाहादीन् कण्ड्वादींश्च वाताद्यधिष्ठितदुष्टव्रणोक्तविशेषलिङ्गान् ]

षट्कृच्छ्रसाधनास्तेषां निचयक्षतजौत्यजेत् ।
प्रवाहिणीं वलीं प्राप्तं सेवनीं वासमाश्रितम् ॥

षडिति पृथक्संसर्गजाः कृच्छ्रसाधनाः । निचयः सन्निपातः । क्षतमास्थिकृतम् । सर्वं च भगन्दरं प्रवाहिण्याख्यामन्तर्वलीं प्राप्तं त्यजेत् तथा सेवन्याश्रितं च इत्युक्तं भगन्दराणां हेतुलिङ्गम् । [तेषां भगन्दराणां मध्ये पृथग्दोषसंसर्गजाः शतपोनकोष्ट्रग्रीवपरिस्रावी परिक्षेप्युज्वर्शो भगन्दराः षट्कृच्छ्रसाध्याः । निचयक्षतजौ शम्बुकावर्तोन्मार्गिणौत्यजेन्न चिकित्सेत् ॥]

अथ भगन्दरिणमपक्वपिटकं पाकपरिहारार्थमपतर्पणेन व्रणप्रतिषेधविहितेन शीघ्रमुपाचरेत् ॥

अथेत्यादिना तेषामेव सामान्यं साधनमुच्यते । भगन्दरिणः पुरुषस्य पिटकावस्थायां पाकरक्षार्थं व्रणप्रतिषेधोक्तेनापतर्पणेन शोधनादिना शीघ्रमुपाचरेत् ॥

पक्वपिटकं पुनरुपस्निग्धमर्कादिक्वाथशुद्धं स्वभ्यक्तमवगाह स्विन्नं भुक्तवन्तं शयनस्थमर्शसमिव यन्त्रयित्वा पराचीनमर्वाचीनं बहिर्मुखमन्तर्मुखं वा भगन्दरं सम्यगीक्षेत ॥

पक्वपिटकं तु भगन्दरिणं प्रथममेव स्निग्धं ततोऽर्कादिगणक्वाथेन शुद्धं ततोपि स्वभ्यक्तं ततः स्वेदयोग्यावगाहेन स्विन्नं भुक्तवन्तं कृतभोजनं शयनस्थमर्शः कर्मविधानप्रकारेण यन्त्रयित्वा प-

राचीनादिविशेषेण भगन्दरं सम्यगीक्षेत । पराचीनमन्तर्भवम् । बहिर्मुखं बहिर्द्वारमन्तर्मुखं गुदनाड्यन्तर्गतमुखम् ॥

ततोऽन्तर्मुखे यन्त्रं प्रणिधाय प्रवाहणप्रविष्टं भगन्दरमभिसमीक्ष्यसम्यगेषित्वा शस्त्रेण पाटयेत् । बहिर्मुखेत्वेषणीं प्रणिधाय साशयमुद्धरेच्छस्त्रेणानन्तरं चोऽभयमप्यग्निना क्षारेण चोपक्रमेत उष्ट्रग्रीवं तु क्षारेणैव ॥

तत इति । ततोनन्तरं यदन्तर्मुखं तत् प्रवाहणेन यन्त्रच्छिद्रं प्रविष्टमवेक्ष्य सम्यगेषित्वा शस्त्रेण पाटयेत् । बहिर्मुखमेषणीं प्रणिधाय विन्यस्य साशयमुद्धरेच्छस्त्रेण । अनन्तरमुभयमप्यन्तर्मुखं बहिर्मुखमपि । शस्त्रकर्म सर्वत्र समानम् । तस्मिन् कृते अग्निक्षारयोर्विषयनियमः । ऊष्ट्रग्रीवाख्यं भगन्दरं तु क्षारेणैव न कदाचिदग्निना ॥

ततो निर्वापणशोधनरोपणैर्यथाकालं साधयेदिति सामान्यो विधिः ॥

तत इति क्षारेऽग्नौ वा प्रयुक्ते यथाकालं निर्वापणादिभिः साधयेत् । इति सामान्यः सर्वभगन्दरहितो विधिः ॥

अथ शतपोनके नाडीरेकान्तरिताः पाटयित्वा रोपयेत् । रूढासुचेतराश्चिकित्सेत् । अन्यथा तु विवृतं व्रणं गुदस्रोतो विदारणाद्वातविण्मूत्राण्यनुप्रपद्यन्ते । ततश्चोन्मार्गगो वायुराध्मानाटोपपायुशूलादीनुपजनयति । तत्र स्नेहाभ्यक्तगुदस्य स्निग्धान् पिण्डनाडी कुम्भीस्वेदान् प्रयुञ्जीतावगाहं वा । स्विन्नं च वचाहिंगुकुष्ठव्योषलवणपञ्चकाजमोदान् सर्पिर्मद्यकाञ्जिककुलत्थयूषान्यतमेन पाययेत् । व्रणं चास्यमधुकतैलेनोष्णेन सिञ्चेत् । गुदं च बलातैलादिभिर्वातघ्नैः । अनेन विधिना वाय्वादयः स्वमार्गमापतन्ति । तत्कृताश्च विकारा निवर्तन्ते ॥

अथेत्यादिना शतपोनकादीनां विशेषचिकित्सा सुबोधा । [नाडीव्रणमार्गान् । एकान्तरिताः एकैकां नाडीमन्तरीकृताः । पाटयित्वा भित्वा रोपयेत् । तासु रूढास्वितरा अवशिष्टा नाडीश्च चशब्दात्तद्वत् पाटयित्वा चिकित्सेत् । अन्यथा उक्तादन्यप्रकारेण गुदस्रोतो विदारणाद्वातादीनि विवृतं व्रणमनुप्रपद्यन्ते । मधुकेन सिद्धं तैलं मधुकतैलम् ॥ ]

एवमेव च परिक्षेपिण्यामपि क्रमात् गतिं नाडीविहितेन क्षारसूत्रेण द्विशस्त्रिशोवाऽवदारयेत् । सकृदेवबहुवदरणादसाध्यतायाप्यता वा स्यात् ॥

एवमेव चेति शतपोनकवदेव नाडीविहितेनेतिग्रन्थ्याद्यध्यायोक्तेन ॥

अर्शो भगन्दरे पूर्वमर्शांसि छिद्यात् ततो गत्यनुसारेण भगन्दरम् ॥

अर्शो भगन्दर इत्यादि सुबोधम् । गत्यनुसारेणेति नाड्यनुसारेण अर्शो नाडीकार्यक्रमेणेत्यर्थः । [तत्तद्दोषाविहितेन शस्त्रक्षाराद्यन्यतमेनार्शश्छित्वानन्तरं भगन्दरमपि शतपोनकादिवच्छित्वा चिकित्सेदित्यर्थः ॥ ]

उन्मार्गिणं तु प्रत्याख्यायोपाचरेत् । अनिस्सृतं च शल्यमाहरेत् । तथा क्रिमिघ्नं क्रममालेपाभ्यवहारयोः कुर्वीत । वेदनायां तु पूर्वोक्ताः स्वेदाः । वचादिपाचनं च । साल्वलप्रदिग्धं वा व्रणं कदलीमृगलोपाकाजिनकौशेयाविकैरुपनाहयेदिति । भवति चात्र ॥

उन्मार्गिणं क्षतजं भगन्दरं तु प्रत्याख्यायनसिद्ध्यतीत्युक्त्वा उपचरेत् । अनिस्सृतं च दृश्यमानं शल्यमाहरेत् । पूर्वोक्ताः शतपोनकोक्ताः स्वेदाः पिण्डनाड्यादयः । साल्वलाख्याः । स्वेदविधावुक्ताः पद्मकादयः । लोपाकोनाम शरभः । गतानुगतिका ॥

भगन्दरेबहुच्छिद्रे छेदानालोच्ययोजयेत् ।
गोतीर्थसर्वतोभद्र मर्द्धलाङ्गललाङ्गलौ ॥

बहुच्छिद्रे सर्वस्मिन् भगन्दरे च गोतीर्थादिभेदेन छेदानालोच्य निरूप्य गोतीर्थादीन् योजयेत् । [बहुच्छिद्रे अनेकसुषिरे सर्वस्मिन् भगन्दरे गोतीर्थादीन् छेदनविशेषान् आलोच्य अवलोकनैषणीप्रणयनादिभिरवार्यं योज्य इति यथावदवगस्य गोतीर्थाद्यन्यतमं योजयेत् ॥ ]

(गोतीर्थादीनां चतुर्णां क्रमेण लक्षणं दर्शयति ॥ )

पार्श्वागतेनशस्त्रेण छेदोगोतीर्थकोमतः ।
सर्वतः सर्वतोभद्रः पार्श्वच्छेदोर्द्धलाङ्गलः ॥
पार्श्वद्वयेलाङ्गलकः

पार्श्वागतेनेत्यादिना गोतीर्थादीनां चतुर्णां क्रमेण लक्षणम । पार्श्वेन यत्रागच्छति शस्त्रं स गोतीर्थकोनाम छेदः । यत्र तु सर्वदिशमागच्छति शस्त्रं सः सर्वतोभद्रः । एकस्य पार्श्वस्य यः छेदः सोर्द्धलाङ्गलः । पार्श्वद्वये तु छेदो लाङ्गको भवति । [पार्श्वागतेन नाडीपार्श्वप्राप्तेन शस्त्रेण छेदो गोतीर्थाख्यः । गोतीर्थोनाम गवां जलपानात् तत्खुराङ्किता भूमिः तद्वच्छस्त्रनिपतो गोतीर्थं इतीर्यते कैश्चित् । यत्र शस्त्रं सर्वदिशमागच्छति स सर्वतो भद्राख्यः । एकस्य पार्श्वस्य छेदोर्द्धलाङ्गलाख्यः । पार्श्वद्वये उभयोः पार्श्वयोर्यश्छेदः स लाङ्गलकाख्यः ॥ ]

समस्तांश्चाग्निनादहेत् ।
आस्रावमार्गान् निश्शेषं नैवं विकुरुते पुनः ॥

भगन्दरे सर्वानास्रावमार्गान् निश्शेषमग्निना दहेत् एवं हि कृते भगन्दरः पुनर्नविकुरुते । [अग्निना अग्नितप्तया शलाकया समस्तान् सर्वानास्रावमार्गान् निश्शेषान् कृत्वा दहेत् साकल्येनेत्यर्थः । निश्शेषसमस्तशब्दयोरेकत्रकथनेन भगन्दरव्रणसुषिरस्य दूरगतिस्तस्यामूलदाहश्च सूचितः । एवं कृते सति स भगन्दरः पुनर्नविकुरुते विकारकरणसमर्थो न भवति पुनर्नोत्पद्यत इत्यर्थः ॥ ]

यतेतकोष्ठशुद्ध्यैच भिषक् तस्यान्तरान्तरा ॥

तस्य च भगन्दरिणः कोष्ठशुद्ध्यर्थं भिषगन्तरान्तरायतेत । [वैद्यस्तस्यातुरस्य कोष्ठशुद्ध्यर्थं कोष्ठशुद्धेर्वमनविरेचनाद्युक्तत्वेप्यत्र भगन्दरव्रणस्य पक्वाशयनिकटवर्तित्वाद्यथासन्नं विशोधनमिति व्रणप्रतिषेधोक्त्या व्रणस्यविरेकसाध्यत्वाच्च विरेचनमेव गृह्यते । अन्तरान्तरा व्रण-

रोपणक्रियाकरणस्य मध्येमध्य इत्यर्थः । यतेत प्रयत्नवान् भवेत् न प्रमादादुपेक्षेतेत्यर्थः । ]

आर्द्रकस्यरसेसिद्धं कल्के वा पाययेत् घृतम् ।
भगन्दरे मारुतजे पक्वापक्वे विरेचयेत् ॥

आर्द्रकस्यरसे वा कल्के वा सिद्धं घृतं पाययेत् कस्मिन्नित्याह मारुतजे भगन्दरे । पक्वे चाप्यपक्वे च विरेचयेत् ॥

ज्योतिष्मतीलाङ्गलिकाश्यामादन्तीत्रिवृत्तिलाः
कुष्ठंशताह्वागोलोमी तिल्वकोगिरिकर्णिका ।
हेमक्षीरी च वर्गोयं लेपाद्यैर्व्रणशोधनः ॥

ज्योतिष्मत्यादियोगो लेपाद्यैर्लेपाभ्यङ्गप्रक्षाळनादिभिर्भगन्दरव्रणशोधनः । ज्योतिष्मती कङ्गुणिका । लाङ्गलिका विशल्या । गोलोमी दूर्वा । हेमक्षीरी काञ्चनी ॥

तिलकुम्भवरादन्ती तुत्थसिन्धूत्थमाक्षिकम् ।
सकृष्णरोचनाकुष्ठं शोधनं

कृष्णादिसहितं तिलादिकं लेपाद्यैर्व्रणस्य शोधनम् । कुम्भो द्रवन्ती ॥

मांसकृत् पुनः ॥
माञ्जिष्ठासैन्धवक्षौद्र नागदन्ती त्रिवृत्तिलाः ।
रसाञ्जनद्विरजनी तेजोह्वा निम्बपल्लवाः ॥

मञ्जिष्ठादिकं लेपाद्यैर्व्रणेमांसकृत् । तेजोह्वा जोतिष्मती ॥

निकुम्भकुम्भरक्ताह्व कल्कोनाडीव्रणापहः ॥

निकुम्भादीनां कल्को नाडीव्रणापहः रक्ताह्वो मञ्जिष्ठा ॥

सुधाशेलुत्रिवृत्पाठामलयूहयमारकैः ।
ज्योतिष्मतीलाङ्गलिका स्वर्जिकार्कवचाग्निकैः ।
विष्यन्दनाख्यं विपचेत्तैलं शोधनरोपणम् ॥

सुधादिभिर्विष्यन्दननामकं तैलं पचेत् तद्व्रणानां शोधनं रोपणं च । शेलुः श्लेष्मातकः । मलयू सोमराजी । हयमारोऽश्वमारः । ज्योतिष्मती कङ्गुणिका । लाङ्गलिका विशल्या । अग्निक श्चित्रकः ॥

त्रिवृद्दन्तीहरिद्रार्कमूललोहाश्वमारकैः ।
विळङ्गसारत्रिफलास्नुगर्कक्षीरमाक्षिकैः ।
तैलंसमदनैःसिद्धं भगन्दरनिबर्हणम् ॥

समदनैस्त्रिवृदादिभिः सिद्धं तैलं भगन्दरनिबर्हणम् । लोहोगरु । अश्वमारः करवीरः । स्नुगर्कयोः क्षिरम् । माक्षिकं धातुमाक्षिकम् । मदनो राठः ॥

सैन्धवार्कत्रिवृत्पाठा समङ्गा पूतिकाग्निकैः ।
समातुलुङ्गच्छदनैस्तैलंशोधनरोपणम् ॥

समातुलुङ्गच्छदनैः सैन्धवादिभिः सिद्धं तैलं शोधनं रोपणं च । समङ्गा मञ्जिष्ठा । अग्निक श्चित्रकः । मातुलुङ्गस्यच्छदनं पत्रम् ॥

मधुतैलयुताविळङ्गसार-
त्रिफलामागधिकोषणाश्चलीढाः ।
कृमिकुष्ठभन्दरप्रमेह-
क्षतनाडीव्रणरोपणाभवन्ति ॥

विळङ्गसारादयो मधुतैलयुता लीढाः कृम्यादिक्षतानां नाडीव्रणानां च रोपणा भवन्ति ।

(कृम्यादिहराः स्युः । कृमि उदरकृमि । क्षत-मुरःक्षतम् । )

अमृतात्रुटिवेल्लवत्सकं
कलिपथ्यामलकानिगुल्गुलु ।
क्रमवृद्धमिदंमधुप्लुतं
पिटकास्थौल्यभगन्दरान्जयेत् ॥

अमृतादिकं क्रमवृद्धं मधुद्रवमिदं पिटकादीन् जयेत् अमृताया एको भागः । त्रुट्या द्वौ भागौ । वेल्लानां त्रयः । वत्सकस्य चत्वारः । एवं भागवृद्धिर्यावत् गुल्गुलोरष्टाविति क्रमवृद्धार्थः ॥

गुल्गुलुपञ्चपलंपलिकांशा
मागधिकात्रिफला च पृथक्स्यात् ।
त्वक्त्रुटिकर्षयुतंमधुलीढं
कुष्ठभगन्दरगुल्मगतिघ्नम् ॥

गुल्गुल्यादि सुबोधम् । त्वचोर्द्धकर्षः । सूक्ष्मैलानां चाऽर्द्धकर्षः ॥

शृङ्गिवेररजोयुक्तं तदेवच सुभावितम् ।
क्वाथेनदशमूलस्य विशेषाद्वातरोगजित् ॥

तदेवानन्तरोक्तं गुल्गुलुपञ्चपलादिकं शृङ्गिवेरचूर्णेन संयोज्य दशमूलस्य क्वाथेन भावितं कुष्ठादीनन्यांश्च वातप्रधानान् रोगान् विशेषाज्जयति । [शृङ्गिवेरस्य रजसा चूर्णेनयुक्तम् । शृङ्गिवेरं नागरम् । नि । नागरमूषणमार्यं कटुकं कटुकायनं महीच्छत्रम् । शुण्ठीकोलं विश्वं विश्वौषधमौषधं महास्कन्धम् । महौषधं महावीर्यं सिंहलं विश्वभेषजम् । तीक्ष्णं कटु च कासघ्नं शृङ्गिवेरमिति स्मृतम् । इति मञ्जरी । दशमूलक्वाथेन सुभावितं पुनः पुनः पेषणशोषणादिना समारोपित तद्वीर्यम् । तत् पूर्वोक्तं गुल्गुलुपञ्चपलाख्यचूर्णमेव विशेषाद्वातरोगान् जयति । अत्र विशेषशब्दकथनेन शुण्ठीचूर्णादिरहितस्याऽपि वातहरत्वं सूचितम् । वातप्रधानकुष्ठादिहरमित्यर्थः ॥ ]

उत्तमाखदिरसारजरजः-
शीलयन्नसनवारिभावितम् ।
हन्तितुल्यमहिषाक्षमाक्षिकं
कुष्ठमेहपिटकाभगन्दरान् ॥

त्रिफला खदिरसारयोश्चूर्णमसनक्वाथेन भावयित्वा समेन गुल्गुलुना माक्षिकेण च युक्तं शीलयन् कुष्ठादीन् हन्ति । [अत्र महिषाक्षस्यप्रमाणेन तुल्यत्वम् । मधुनस्तुचूर्णपिण्डीभावमात्रयैव तुल्यत्वम् ।: ]

॥ उपसंहारश्चाह ॥

भगन्दरेष्वेषविशेषउक्तः
शेषाणितुव्यञ्जनसाधनानि ।
व्रणाधिकाराद्यपरिशीलनाच्च
सम्यग्विदित्वौपयिकंविदध्यात् ॥

एष योऽत्राऽध्याय उक्तः सभगन्दरेषु विशेषः । शेषाणि व्यञ्जनसाधनानि तु व्यञ्जनानि लिङ्गानि दोषाणां विशेषतः साधनानि च व्रणाधिकारात् व्रणप्रतिषेधात् परिशीलनात् क्रियाभ्यासाच्च सम्यक्सूक्ष्मैरपिप्रकारैर्विदित्वायदौपयिकं तद्विदध्यात् । [भगन्दरेष्वयं विशेषोपक्रमोभिहितः शेषाण्यत्रानुक्तानि व्यञ्जनानि दो-

षलिङ्गानि साधनान्युपक्रमविशेषाणि तुशब्दो विशेषद्योतकः अत्र पिटका भगन्दरभेदेनाऽवस्थाद्वितयदोषोद्रेकव्रणगत्यादिकमवगम्योपक्रम्यत्वादुपक्रमस्यदुर्ज्ञेयत्वं विशेषः। व्रणाधिकारात् व्रणप्रतिषेधात् परिशीलनात् चिरपरिचयात् चशब्दाद्दूष्यदेशादिसमीक्षणमपि सूचितम्। सम्यग्विदित्वा यथावदवगम्य औपयिकं यथायोग्यं विदध्यात कुर्यादित्यर्थः॥]

रूढस्या पुनर्भावाय परिहार्याण्याह॥

**अश्वपृष्ठगमनं चलरोधं**
**मद्यमैथुनमजीर्णमसात्म्यम्।**
**साहसानिविविधानि च रूढे**
**वत्सरं परिहरेदधिकं वा॥**
**इत्युत्तरे त्रयस्त्रिंशोऽध्यायः॥**

रूढेऽपि भगन्दरव्रणे अश्वपृष्ठगमनादिकं संवत्सरं ततोऽप्यधिकं वा परिहरेत्। चलरोधं चलानां वेगानां रोधम्। विविधानि साहसान्यनालोचिताद्यबलान्युत्पतनादीनि॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्याया-मुत्तरे त्रयस्त्रिंशोऽध्यायः॥

## चतुस्त्रिंशोऽध्यायः।

### ग्रन्थ्यादिविज्ञानीयम्॥

व्रणविचारप्रसङ्गेन ग्रन्थ्यादीनां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते॥

**अथातो ग्रन्थ्यर्बुदश्लीपदापची नाडीविज्ञानीयं नामाध्यायं व्याख्यास्यामः। इति ह स्माहुरात्रेयादयो महर्षयः॥**

**कफप्रधानाः कुर्वन्ति मेदो मांसास्रगामलाः।**
**वृत्तोन्नतं यं श्वयथुं सग्रन्थिर्ग्रथनात् स्मृतः॥**

ग्रन्थिरिति किमुच्यत इत्याह कफप्रधाना इत्यादि। श्लेष्मप्रधाना मलास्त्रयो दोषा मेदः। प्रभृतीर्गत्वा परिवर्तुलमुन्नतं च यं श्वयथुं कुर्वन्ति स श्वयथुर्ग्रथनात्मकत्वात् ग्रन्थिरिति स्मृतः॥

**दोषास्रमांसमेदोस्थि सिरात्रणभवानव।**
**ते—**

त्रिभिर्दोषैरस्रादिभिश्च षड्भिस्ते ग्रन्थयो नव भवन्ति॥

**तत्रवातादायामतोदभेदान्वितोसितः॥**
**स्थानात्स्थानान्तरगतिरकस्माद्धानिवृद्धि-**
**[मान्।**
**मृदुर्वस्तिरिवानद्धो विभिन्नोच्छं स्रवत्यसृक्॥**

स्थितेऽपि सम्प्राप्तौ कफप्राधान्ये आयामादिकं विभेदे चाऽच्छासृक् स्रावान्तं वातग्रन्थिलिङ्गम्। अकस्मादकरणाद्धानिमान् वृद्धिमांश्च॥

**पित्तात्सदाहपीताभोरक्तो वा पच्यते द्रुतम्।**
**भिन्नोस्रमुष्णं स्रवति—**

सदाहादिभेद उष्णास्रस्रावान्तं पित्तग्रन्थौ। वा शब्दः पीतरक्तयोर्विकल्पार्थः॥

**—श्लेष्मणानीरुजोघनः॥**
**शीतःसवर्णःकण्डूमान् पक्वःपूयं स्रवेत् घनम्॥**

नीरुजत्वादिर्घनपूयस्रावान्तं कफग्रन्थौ सवर्णो देहसमानवर्णः।

दोषैर्दुष्टेऽसृजि ग्रन्थिर्भवेन्मूर्च्छत्सु जन्तुषु ।
सिरामांसं च संश्रित्य सस्वापः पैत्तलक्षणः ॥

दोषैर्वातादिभिरसृजि रक्ते दुष्टे जन्तुषु कृमिषु मूर्च्छत्सु मूर्च्छायमाप्नुवत्सु सिरामांसं च तयोरन्यतरमुभयं वा संश्रित्य स्वापयुक्तो ग्रन्थिर्भवेत् । तस्य पित्तग्रन्थिवल्लिङ्गम् । दोषैर्दुष्ट इति विशेषणं रक्तस्य दोषता शङ्कानिरासाय ॥

मांसलैर्दूषितं मांसमाहारैर्ग्रन्थिमावहेत् ।
स्निग्धं महान्तं कठिनं सिरानद्धं कफाकृतिम् ॥

मांसलैराहारैर्मांसं दूषितं स्निग्धत्वादिगुणं कफग्रन्थिलिङ्गं ग्रन्थिमावहेत् । [मांसलैर्मांसवर्धनैराहारैः क्रव्यादप्रसहमांसानुपेतैरन्नैर्दूषितं कृतदूषणं मांसं स्निग्धं स्नेहदिग्धप्रतिमं महान्तं पीवरं कठिनं कठिनस्पर्शं सिरानद्धं सिराभिराचितं कफाकृतिं कफग्रन्थिलिङ्गं ग्रन्थिं कुर्यात् । मांसकफयोराधाराधेयत्वेनाकृतिसाम्ये सिद्धे पुनरपि तत्साम्यकथनमनुक्तानां नीरुजत्वादीनां ग्रहणार्थम् । उभयत्रोक्तानां निबिडत्वादीनामतिशयग्रहणार्थं च ॥]

प्रवृद्धं मेदुरैर्मेदो नीतं मांसेऽथवा त्वचि ।
वायुना कुरुते ग्रन्थिं भृशं स्निग्धं मृदुं चलम् ॥
श्लेष्मतुल्याकृतिं देहक्षयवृद्धिक्षयोदयम् ।
स विभिन्नो घनं मेदस्ताम्रासितसितं स्रवेत् ॥

मेदुरैराहारविहारैः प्रवृद्धं मेदो वायुना मांसे त्वचि वा नीतं भृशस्निग्धत्वादिगुणं श्लेष्मग्रन्थितुल्यलिङ्गं ग्रन्थिं कुरुते । पुनः किम्भूतं ग्रन्थिमाह । देहक्षयवृद्धिक्षयोदयं यदा देहस्य केन चित् कारणेनापचयो भवति तदा तस्याप्यपचयः यदा तु देहस्य वृद्धिस्तदा तस्याप्युपचयः । स च मेदोग्रन्थिर्विभिन्नः सन् घनत्वादिगुणं मेदः स्रवेत् । [मेदुरैर्मेदोवृद्धिकरैराहारविहारैः प्रवृद्धमतिशयेन वृद्धिं गतं देनरुद्धावकाशतया कुपितेन न वायुना मांसत्वचोरन्यतरं नीतं मेदः भृशमतिशयेन स्निग्धमरूक्षं मृदुं मार्दवयुक्तं चलमस्थिरं भृशशब्दश्चलान्तैः संयुज्यते । स विभिन्नः पक्वभिन्नः घनं निबिडं ताम्रादन्यतमवर्णं मेदः स्रवेत् मेदः शब्देन पूयस्यान्यादृशत्वं सूचितम् । उक्तं च धन्वन्तरिणा । मेदः कृते प्रस्रवति प्रभिन्ने पिण्याककल्कप्रतिमं तु पूयमिति ॥]

अस्थिभङ्गाभिघाताभ्यामुन्नतावनतं तु यत् ।
सोऽस्थिग्रन्थिः—

भङ्गेन वाभिघातेन वायदस्थ्युन्नतं वावनतं वा सोऽस्थिग्रन्थिर्नाम्ना भवति । [यदस्थि तु भङ्गादभिघाताद्वाहेतोरुन्नतमवनतं वा भवति तु शब्देन भङ्गाभिघाताभ्यां विना सहजयोरप्युन्नतावनतयोरस्थ्नोर्ग्रन्थिकरत्वं सूचितम् । भङ्गादुन्नतमभिघातादवनतमिति यथाक्रमं वेति केचित् । स एवंविधः सोऽस्थिग्रन्थिर्नाम्ना भवति । अवनतस्यापि ग्रन्थिसंज्ञाकथनादुन्नतावनतयोरस्थ्नोः पुनर्ग्रन्थिरूपेण वृद्धिर्भवतीति सूचितम् ॥]

—पदातेस्तु सहसाम्भोऽवगाहनात् ।
व्यायामाद्वा प्रतान्तस्य सिराजालं सशोणितम् ॥
वायुः सम्पीड्य सङ्कोच्य वक्रीकृत्य विशोष्य च ।
निस्फुरं नीरुजं ग्रन्थिं कुरुते स सिराह्वयः ॥

पदाते स्त्वित्यादिना सिराग्रन्थिः । सुबोधम् । [ पदातेर्वाहनेन विना मार्गगमनं कुर्वतो व्यायामात् कायक्लेशजननकर्मणा प्रतान्तस्य प्रकर्षेण तान्तस्यावसन्नस्य वा शब्दस्तयोर्विकल्पार्थः । सहसा आशुवाम्भोवगाहनात् जले निमज्जनात् तुर्विशेषे स्नानाद्गतापहानिरपि तु समीरण कोप इति विशेषः । कुपित इत्यर्थात् गम्यते । कुपितो वायुः सशोणितं शोणितोपेतं सिराजालं सिरासमूहं जालाकाराः सिरा वा रक्तवाहिन्य इत्यर्थः । निष्पीड्य सङ्कोच्य संकुञ्चनात् सुषिरसंवृतिमापाद्य वक्रीकृत्यानुजुत्वमुत्पाद्य विशोष्य संवृतमार्गतया रक्तस्य वहनाभावाच्छोषयित्वा निस्फुरं स्फुरणरहितं नीरुजं रुजारहितं च ग्रन्थिं कुर्यात् स सिराह्वयः सिराग्रन्थिसंज्ञः । शास्त्रान्तरोक्तयोः सस्फुरसरुजयोर्ग्रहणार्थश्च शब्दः । धन्वन्तरिणाप्युक्तम् । ग्रन्थिः सिराजः स तु कृच्छ्रसाध्यो भवेद्यदिस्यात् सरुजश्चलश्च । तत्रारुजश्चाप्य च लोमहांश्च मर्मोत्थितश्चापि विवर्जनीय इति ॥ ]

अरूढे रूढमात्रे वा व्रणे सर्वरसाशिनः ।
सार्द्रेवा बन्धरहिते गात्रेश्माभिहतेथ वा ॥
वातो स्रमस्रुतं दुष्टं संशोष्यग्रथितं व्रणम् ।
कुर्यात् सदाहः कण्डूमान् व्रणग्रन्थिरयं स्मृतः॥

अरूढे व्रणे मधुरादिसर्वरसाशिनः पुंसो रूढमात्रे वा अचिरप्ररूढ एवंविधस्याथवा सार्द्रे नवे व्रणे बन्धरहिते अश्मनावाभिहते गात्रे वायुरस्रुतं दुष्टमस्रं संशोष्य ग्रथितं व्रणं कुर्यात् । दाहादियुक्तोयं व्रणग्रन्थिरिति स्मृतः । [ व्रणे अरूढे ईषद्रूढे रोहणसमय इत्यर्थः । रूढमात्रे रूढप्राये रूढानन्तरमेवेत्यर्थः । वा शब्दो विकल्पार्थः । सर्वरसाशिनः व्रणविरुद्धाम्लादिरससनिषेविणः अपथ्य सेविन इत्यर्थः । सार्द्रे नवे व्रणे बन्धरहिते अबद्धे वा अथवा गात्रे शरीरे अश्मादिहते आदिशब्देन काष्ठलोष्टादिपरिग्रहः । वातः विकारकरणादेवास्य विकृति सञ्ज्ञा । कुपितो वायुरित्यर्थः । अस्रुतमनिर्गतं अत एव दुष्टं स्वस्थानाच्चलितस्या स्रुतिरेव दुष्टिहेतुः । अस्रं रक्तं संशोष्य शोषयित्वा ग्रथितं कठिनं व्रणं कुर्यात् ॥ ]

साध्या दोषा स्रमे दोजा न तु स्थूलखराश्चलाः ।
मर्मकण्ठोदरस्थाश्च —

एभ्यो दोषास्रमेदोजाः पञ्चसाध्याः एत एव स्थूलत्वादिगुणा मर्मादिस्थाश्च न साध्या इति सम्बन्धः । इत्युक्ता नवग्रन्थयः । [ स्थूलाः खराश्च स्थूलखराः स्थूलामहान्तः खराः खरस्पर्शाः चलानि पीडनात् स्थानान्तरयायिनः । तुर्विशेषे अत्र साध्येष्वप्येवंविधानामसाध्यत्वं विशेषः । मर्मादिजाश्च न साध्याः तेषामभेद्यत्वात् । च शब्दः समुच्चये । अनुक्तानामन्येषां चिकित्सा कथनाद्याप्यत्वं सूचितम् । अनुक्तसाधनत्वादस्थिग्रन्थेरसाध्यत्वं च ॥ ]

[ ग्रन्थेः स्वरूपमुक्त्वानन्तरं ग्रथनसाधर्म्यादर्बुदस्य स्वरूपं दर्शयति । ]

— महत्तुग्रन्थितोर्बुदम् ॥

यस्तु ग्रन्थिर्महान् ग्रन्थितश्च सोर्बुदं भवेत् । [अर्बुदाख्यो रोगः तुशब्देन कारणसाम्येपि ग्रन्थ्यर्बुदयोरर्बुदस्य दोषास्रमांसमेदो ग्रन्थितेपि रुगादीनामत्यल्पत्वं सूचितम् ॥ ]

**तल्लक्षणं च मेदोन्तैः षोढादोषादिभिस्तुतत् ।**
**प्रायो मेदः कफाढ्यत्वात् स्थिरत्वाच्चन पच्यते॥**

तस्यार्बुदस्य लक्षणं ग्रन्थि पठितैर्मेदोन्तैर्दोषादिभिः षोढा । अनेनास्थि सिरा व्रणजानां प्रतिषेधः । एतच्चार्बुदं मेदः कफाढ्यत्वात् स्थिरत्वाच्च हेतोः प्रायो न पच्यते ॥

शोणितार्बुदस्य विशेष लक्षणत्वात्तल्लक्षणमाह ॥

**सिरास्थं शोणितं दोषः सङ्कोच्यानुप्रपीड्यच।**
**पाचयेच्च तदानद्धं सा स्रावं मांसपिण्डितम् ॥**
**मांसांकुरैश्चितं यातिवृद्धिं चाशुस्रवेत्ततः ।**
**अजस्रं दुष्टरुधिरं भूरितच्छोणितार्बुदम् ॥**

सिरास्थमित्यादि । दोषो वातादिः कुपितः सिरास्थं शोणितं सङ्कोच्यानुप्रपीड्य च तच्छोणितं पाचयेत् तच्चानद्धत्वादियुक्तमाशुवृद्धिं याति । ततो वृद्धं सदजस्रमविच्छेदेन भूरिप्रभूतं दुष्टरुधिरं स्रवेत् । एतच्छोणितार्बुदमुच्यते । [ दोषो वाताद्यन्यतमः सिरा स्थितं रक्तं सङ्कोच्यैकत्र पुञ्जीकृत्यान्वनन्तरं प्रपीड्य पीडयित्वा च शब्दः समुच्चये तत्स्थेनाग्निना मांसत्वापादनाय पाचयेच्च आनद्धमन्तः पूरितशोणितत्वा दानाहयुक्तं सास्रावमास्रावयुक्तं मांसपिण्डितं मांसपिण्डाकारेण सञ्जातं तच्छोणितार्बुदं मांसांकुरैरंकुराकारैर्मांसैर्बहुशिखरैरित्यर्थः । चितं व्याप्तमाशु शीघ्रं वृद्धिं याति । ततोनन्तरं दुष्टरुधिरं दुष्टरक्तं अजस्रमनवरतं भूरिप्रभूतं स्रवेत् । तच्छोणितार्बुदसंज्ञं भवति ॥ ]

**तेष्वसृङ्मांसजेवर्ज्ये चत्वार्यन्यानिसाधयेत् ॥**

तेषु षट्स्वर्बुदेष्वसृङ्मांसजे द्वे वर्ज्ये । अन्यानि चत्वारिदोषमेदो भवानि साधयेत । इत्यर्बुदानि ॥

[ अर्बुदलक्षणमुक्त्वानन्तरं कफाधिक्यसाम्याच्छ्लीपदालिङ्गमाह ॥ ]

**प्रस्थितावङ्क्षणोर्वादिमधःकायंकफोद्बणाः ।**
**दोषमांसास्रगाःपादौ कालेनाश्रित्यकुर्वते ।**
**शनैः शनैर्घनंशोफं श्लीपदं तं प्रचक्षते ॥**

कफोद्बणा दोषा वातादयोवङ्क्षणादिकमधःकायं प्रस्थितामांसमस्रंचाश्रिताःकालेन पादावाश्रित्य शनैः शनैर्घनं शोफं कुर्वते तं नाम्नाश्लीपदं प्रचक्षते । [दोषा वातादयः कफोद्बणा उद्रिक्तकफाः कफोद्बणत्वं शास्त्रान्तरेष्वप्युक्तं । त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात् । गुरुत्वं च महत्वं च यस्मान्नास्ति कफं विना इति । मांसास्रगा मांसं रक्तं च प्राप्ताः वङ्क्षणोर्वादौ अत्रादिशब्देन जंघागुल्फादिपरिग्रहः अधः कायं कायाधोभागं प्रस्थिताः प्राप्ता इत्यर्थ । प्रस्थिता इत्युक्तत्वाद्दोषाणां कफोद्बणतयोर्ध्वाङ्गादधः कायंप्रति पुनः पुनः प्रस्थानत्याऽनिवृत्तिः सूचिता । कालेन कालान्तरेण पादौ प्रपदे आश्रित्य प्राप्य शनैः शनैर्मन्दं मन्दं घनं निबिडं शोफं कुर्वते । तं शोफं श्लीपदमिति वदन्त्याचार्या इति शेषः ॥ ]

(तस्य श्लीपदस्य वातादिभेदेन विशेषलक्षणं दर्शयति ॥)

**परिपोटयुतंकृष्णमनिमित्तरुजंखरम् ॥**
**रूक्षं च वातात्—**

परिपोटयुतत्वादिकं वाताच्छ्लीपदे लक्षणम । [वाताज्जातं श्लीपदं परिपोटेनयुतं कृष्णं कृष्णवर्णं अनिमित्तरुजं निमित्तमन्तरेण जातया रुजयायुक्तं खरं खरस्पर्शं रूक्षमस्निग्धं चः समुच्चये । ]

**—पित्तात्तुपीतं दाहज्वरान्वितम् ॥**

पीतत्वादिकं पित्तात । [पित्ताज्जातं श्लीपदं तुशब्दो विशेषद्योतकः । पीतं पीतवर्णं दाहज्वरान्वितं दाहज्वराभ्यां युक्तं दाहादिज्वरयुक्तं वा । ]

**कफात्गुरुस्निग्धमरुक्चितंमांसांकुरैर्बृहत् ॥**

गुरुत्वादिकं कफात । [कफाज्जातं श्लीपदं गुरुत्वादियुक्तं मांसांकुरैरंगुराकारैर्मांसशकलैश्चितं व्याप्तं बृहत्पीवरम ॥ ]

**तत्त्यजेद्वत्सरातीतं सुमहत्सपरिस्रुति ॥**

तच्च श्लीपदं वत्सरातीतत्वादिगुणं त्यजेत् । [वत्सरातीतमतिक्रान्तसंवत्सरं सुमहदतिशयेन पीनं सपरिस्रुतिपरिस्रुत्युपेतं परिस्रुतिः पिच्छिल जलस्रवणं तत्श्लीपदं त्यजेदसाध्यत्वान्नाचिकित्सेत् । ]

मतान्तरं दर्शयति ॥

**पाणिनासौष्ठकर्णेषु वदन्त्यन्येतुपादवत् ।**
**श्लीपदं—**

एके आचार्याः पादवत् पाण्यादिष्वपि श्लीपदं जायत इति वदन्ति । [अन्ये आचार्याः तुशब्दो विशेषे पादवत् पादे यथा श्लीपदं जायते तथा पाणिनासौष्ठकर्णेषु पाण्योर्नासायामोष्ठयोः कर्णयोश्च श्लीपदं जायत इति वदन्ति । उक्तं च तन्त्रान्तरे । पादवद्धस्तयोश्चापि श्लीपदं जायते नृणाम् । कर्णोष्ठनासास्वपि च केचिदिच्छन्ति तद्विद इति । अन्ये इति पाक्षिकत्वोक्त्या पाण्यादिजानां विरळत्वं सूचितम् ॥ ]

श्लीपदोत्पत्तेर्हेतुमाह ॥

**—जायतेतच्चदेशेनूपेभृशंभ्रमात् ॥**

तच्च श्लीपदं भृशमानूपदेशे भ्रमात् सञ्चरणात् जायते । इति श्लीपदम् । [तच्छ्लीपदं आनूपे जलप्राये देशे भृशं भ्रमात् अनवरतं चंक्रमणात् चशब्दात्तत्तुल्ये ष्वन्येष्वपि उक्तं च शास्त्रान्तरे पुराणोदकभूयिष्ठाः सर्वर्तुषु च शीतळाः । ये देशास्तेषु जायन्ते श्लीपदानि विशेषत इति ॥

अपाकिश्लीपदमुक्त्वानन्तरमनाशुपाकित्वेन किञ्चित् साम्यादपचीं ब्रूते ॥ ]

**मेदस्थाः कण्ठमन्याक्षकक्षवङ्क्षणगामलाः ॥**
**सवर्णान् कठिनान् स्निग्धान् वार्ताकामलकाकृतीन् ।**
**अवगाढान् बहून गण्डांश्चिरपाकांश्च कुर्वते ॥**
**पच्यन्तेल्परुजस्तेन्ये स्रवन्त्यन्येतिकण्डुराः ।**
**नश्यन्त्यन्येभवन्त्यन्येदीर्घकालानुबन्धिनः ॥**
**गण्डमालापचीचेयं दूर्वेव क्षयवृद्धिभाक् ।**
**तां त्यजेत् सज्वरच्छर्दिं पार्श्वरुक्कासपीनसाम् ॥**

मेदस्था इत्यादि । मेद आश्रित्य कण्ठादिषुगतामला वातादयः सवर्णत्वादिगुणान् वार्ताकैरामलकैश्चसदृशा नवगाढानन्तर्मूलांश्चिरपाकांश्च बहून् गण्डान् कुर्वते । त इति गण्डाः अन्ये केचिदल्परुजः पच्यन्ते । अन्ये अतिकण्डुराः स्रवन्ति । अन्ये नश्यन्ति अन्ये भवन्ति दीर्घकालानुबन्धिनः । अयं रोगो नाम्ना गण्डमालेत्यपचीतिचोच्यते । इयं च गण्डमाला दूर्वा प्रतानवत् क्वचित् क्षयभाग्भवति क्वचिद्वृद्धिभाक् । तां च सज्वरादिकां त्यजेत् । इत्युक्तापची । (मला वातादयो मेदस्था मेदसि स्थिताः कण्ठमन्याक्षकक्षवङ्क्षणगाः कण्ठादिकं प्राप्ताः सवर्णान् कायसमानवर्णान् कठिनान् काठिन्ययुक्तान् स्निग्धान् वार्ताकामलकाकृतीन् वार्ताकामलकप्रमाणान् अवगाढानन्तर्मूलान् चिरपाकान् चिरकालेन पाको येषां तान् चशब्दः समुच्चये बहून् बहुसंख्याकान् गण्डान् पिटकाविशेषान् कुर्वते । ते गण्डाः अन्ये केचित् अल्परुज ईषद्रुजायुक्ताः पच्यन्ते पाकं यान्ति । कर्मकर्तरिरूपम् । अन्ये पक्का अतिकण्डुरा अत्यर्थं कण्डूयुक्ताः स्रवन्ति पूयमुद्गिरन्ति । अन्ये नश्यन्ति रोहन्ति । अन्ये भवन्त्युत्पद्यन्ते । एवं सति दीर्घकालानुबन्धिनः दीर्घं कालमनुबध्नन्ति न शमं यान्ति । दूर्वावत् क्षयवृद्धियुक्ताः दूर्वाप्रतानवदत्यन्ताभावो न भवतीत्यर्थः । इयं गण्डमालेत्युच्यते अपचीति च । अपच्या निर्वचनं च शास्त्रान्तरेभ्यधायि । तां ग्रन्थिभिस्त्वामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथान्यैः । अनन्यवर्णैरुपचीयमानांचयप्रकर्षादपचीं वदन्तीति । मेदः कफाभ्यामेवापची जायत इति धन्वन्तरिः । तामिति ज्वराद्यन्वितां तामपचीं त्यजेत ॥ )

(नाडीव्रणस्य दीर्घकालानुबन्धितया अपची साम्यात्तदनन्तरं नाडीव्रणमाह ॥ )

**अभेदात्पक्वशोफस्य व्रणेचापथ्यसेविनः ।**
**अनुप्रविश्यमांसादीन् दूरंपूयोभिधावति ॥**
**गतिः सा दूरगमनान्नाडीनाडीवसंस्रुतेः ।**
**नाड्येकानृजुरन्येषां सैवानेकगतिर्गतिः ॥**

यत्र पक्वशोफो न भिद्यते व्रणे वा अपथ्यसेवाक्रियते तत्र पूयो मांसादीननुप्रविश्य दूरमभिधावति सा गतिरित्युच्यते दूरगमनाद्धेतोः । नाडीत्युच्यते नाडीवसंस्रुतेः तत्र या एका अनृजुश्च सा नाडी अन्येषामाचार्याणां मते । सैवनाड्यनेकगतिर्गतिरित्युच्यते पक्वशोफस्य प्राप्तपाकतया भेद्यस्य शोफस्या भेदादविदारणात् व्रणे व्रणयुक्ते काल इत्यर्थात् गम्यते । अपथ्यसेविनः व्रणविरुद्धान्नाशनादिशीलस्य चशब्दः समुच्चये । पूयः मांसादीन् आदिशब्देन मेदोस्थ्यादिपरिग्रहः अनुप्रविश्य विदार्येत्यर्थः दूरं नत्तदेहदेशप्रमाणावधि अभिधावति शीघ्रं गच्छति । सा पूयदीर्णा नाडी दूरगमनात् दूरगत्या गतिरित्युच्यते । नाडीवसंस्रुतेः यथा तोयगर्भया नाड्या तोयं स्रवति तथाऽविच्छिन्नधारया पूयवहनात् नाडीतिचोच्यते । अत्रैव मतविशेषं दर्शयति । नाडीति । अन्येषा माचार्याणां मते अनृजुः कुटिला एका अद्वितीया गतिर्नाडीत्युच्यते । सा अनृजुरेवगतिरनेकमार्गगाचेत् गतिरितिचोच्यते ॥

एवं नाड्याः स्वरूपमुक्त्वानन्तरं तस्याः संख्याविभागं दर्शयति ॥ )

**सा दोषैः पृथगेकस्थैः शल्यहेतुश्च पञ्चमी ॥**

सा च नाडी पृथक् दोषैस्त्रिधा । एकस्थैः सन्निपतितैः चतुर्थी । शल्यहेतुश्च पञ्चमीति पञ्च नाड्यः ॥

**वातात् सरुक्सूक्ष्ममुखी विवर्णा फेनिलोद्गमा ।**
**स्रवत्यभ्यधिकं रात्रौ—**

सरुगादिका रात्रावभ्यधिक स्रावान्तलक्षणा वातान्नाडी । (वाताद्धेतोर्नाडी सरुक्रुजासहिता सूक्ष्ममुखी सूक्ष्मास्या आस्यं व्रणमुखम् । विवर्णा विगतपूर्ववर्णा । फेनिलं पूयमुद्गमतीति फेनिलोद्गमा । रात्रौ निशायामभ्यधिकं बहु स्रवति । व्रणप्रतिषेधे वातोद्व्रणस्याल्पसंस्रुतिमुक्त्वात्र नाडीव्रणस्याभ्यधिकपूयस्रवणकथनमहर्निशोर्निश्यभ्यधिकसूचनार्थं न स्रावबाहुल्यात् ॥ )

**—पित्तात्तृड्ज्वरदाहकृत् ॥**
**पीतोष्णपूतिपूयस्रुद्दिवा चातिनिषिञ्चति ॥**

पित्तान्नाडी तृडादिकृत पीतादिगुण पूयस्रावा दिवा चाति निषिञ्चति स्रवति (पित्तान्नाडी तृडादीन् करोति पीतवर्णत्वादिगुणयुक्तं पूयं स्रवति । दिवा अहन्यति निषिञ्चति अतीव पूयस्रुतिं करोति । चशब्दः समुच्चये ॥ )

**घनपिच्छिलसंस्रावा कण्डूला कठिना कफात् ।**
**निशि चाभ्यधिकक्लेदा—**

कफान्नाडी घनं पिच्छिलं च स्रवति कण्डूला कठिना च भवति तस्यां च निश्यभ्यधिकं क्लेदो भवति । (कफान्नाडी घनो निबिडः पिच्छिलश्च स्रावः पूयवहनं यस्याः सा तथोक्ता कण्डूला कण्डूबहुला कठिना कठिनस्पर्शा निशि अभ्यधिकक्लेदा रात्रावधिकतरपूयवाहिनी च क्लेदशब्देन क्लेदजं पूयं गृह्यते ॥ )

**—सर्वैः सर्वाकृतिं त्यजेत् ॥**

सर्वैर्दोषैः सर्वाकृतिर्वातादिलक्षणयुक्ता भवति तां सान्निपातजां नाडीं त्यजेदिति (सर्वैर्वातपित्तकफैः सर्वाकृतिं वातपित्तकफनाडीलक्षणयुक्तां सान्निपातजां नाडीं त्यजेन्नचिकित्सेत् ॥ )

**अन्तःस्थितं शल्यमनाहृतं तु**
**करोति नाडीं वहते च सास्य ।**
**फेनानुविद्धं तनुमल्पमुष्णं**
**सास्रं च पूयं सरुजं च नित्यम् ॥**

**॥ इति चतुस्त्रिंशोऽध्यायः ॥**

अन्तः शरीरान्तः शल्यमनाहृतं नाडीं करोति । सा च शल्यजा नाडी अस्यातुरस्य फेनानुविद्धादिगुणं पूयं स्रवति । (वहते चसास्यादिति पाठः । अन्तःस्थितं येनकेनापि हेतुना नानाहार्यतया शरीरान्तर्भागस्थितं शल्यं विषाणवेण्वायसादिकमायुधं तुशब्दो विशेषद्योतकः । अनाहृतमनुद्धृतं नाडीं नाडीव्रणं करोति । सा नाडी आस्याद्व्रणमुखात् फेनानुविद्धं फेनयुक्तं तनुमघनं उष्णमुष्णस्पर्शं सास्रं सरक्तं पूयं सरुजं रुजासहितं चशब्दात् कदाचिन्नीरुजं च नित्यं सर्वदा अल्पमल्पमात्रं वहते स्रवति चशब्दौ समुच्चयार्थौ ॥ )

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्याया-
॥ मुत्तरे चतुस्त्रिंशोऽध्यायः ॥

# पञ्चत्रिंशोऽध्यायः ।

## ग्रन्थ्यर्बुदश्लीपदाऽपचीनाळीप्रतिषेधम्॥

उक्तक्रमेणैव ग्रन्थ्यादीनां साधनं प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो ग्रन्थ्यादिप्रतिषेधं नामाध्यायं व्याख्यास्याम इति यः ॥

सर्वेष्वेवपूर्वं ग्रन्थिषु बृहतीद्वयपिप्पलीचित्रकसाधितेन पुराणसर्पिषा स्निग्धं वामयेत् । विरेचयेच्च । कृतसंसर्जनस्यचोत्तमाङ्गगतेषु ग्रन्थिषु लाक्षाद्विरजनी विळङ्गशुण्डी पूतीदारुभिः शिरोविरेचयेत् धूमकबळगण्डूषांश्च संसेवेत ॥

सर्वेषु ग्रन्थिषु पूर्वं बृहतीद्वयादिसिद्धेन पुराणसर्पिषा स्नेहः । तत्स्निग्धस्य वमनं विरेचनञ्च । पश्चात् संसर्जने पेयादिक्रमे कृत ऊर्ध्वाङ्गगतेषु ग्रन्थिषु लाक्षादिभिः शिरोविरेचयेत्। धूमादींश्च यथागमं सेवेत ॥

अङ्कोलमधुकमातुलुङ्गहिंस्रा पूतीदारुविल्वमूलसरळकुष्ठवचावरणत्वक्काळातिविषाजगन्धाभिर्लेपः । श्यामा सुरदारुसमङ्गाकोशातकी पुनर्नवसर्षपैर्वा ॥

अङ्कोलादिना सामान्यलेपः । श्यामादिभिर्वा । अङ्कोलः, प्रसिद्धो माळवादिषु वेतसाकारपत्रै स्सकण्टकः । हिंस्रा, मांसी, काळा, नीलिनी ॥

सशोफरुक्स्तंभे चोपनाहो यवसक्तुमधुककुष्ठशतपुष्पा देवदारुभिर्घृतयुक्तैः । गोजाऽविखरोष्ट्राश्वहस्तिमूषिकमांसैर्वा वेशवारीकृतैर्वसा तैलवर्तिभिः ॥

सशोफादिके च ग्रन्थौ यवसक्त्वादिभिर्वा गवादिमांसैर्वा वेशवारीकृतैर्वसा तैलवर्तिभिरुपनाहो बन्धः ॥

पलाशवृन्ताग्निमन्थत्वक्कल्केन मांसपिण्डैर्वा । बहुशः स्विन्नमंगुष्ठेन वेणुपर्वणा वा शनैश्शनैः पुनःपुनर्विमर्दयेत् । यथायथं च शोफवत् क्रियां प्रयुञ्जीत ॥

पलाशवृन्तादिभिर्वा स्विन्ने यथोक्तेन विमर्दनं यथायथमिति दोषाद्यनतिक्रमेण इति साधारणम् । [अथेत्यादिना वातादिविशेषेणोच्यते ॥]

अथ वातजे ग्रन्थौ दशमूलसिद्धं महास्नेहं पिबेत् । अमृतानिम्बबीजभार्ङ्गीस्थोनाकबाणतालपत्रीकृष्णगन्धागरुभिः क्षीरपिष्टैस्सुखोष्णैर्लेपः । विविधाश्च वातव्याधिविहिताः स्नेह स्वेदोपनाहाः । तथानुपशमे सिराव्यधः ॥

महास्नेहः स्नेहचतुष्टयं । अमृतादिभिः क्षीरपिष्टैस्सुखोष्णैर्लेपः । बाणो, नीलसहचरः। तालपत्री, मौसली । कृष्णगन्धा, सौभञ्जनम् । सुबोधम् ॥

पक्वं तु विदार्यनिरस्त पूयंकृत्वार्कादिवर्गाम्भसा प्रक्षाळ्य तिलकल्केन सचित्रकसैन्धवेना लेपयेत् । तैलं च रोपणं रास्नासरळोशीरविळङ्गमधुकक्षीरसंस्कृतं कुर्यात् ॥

पक्वमिति ग्रन्थिं रास्नादिभिस्संस्कृतं तैलं रोपणं कुर्यात् ॥

**पित्तजे रक्तजे च जळौकसोन्यग्रोधादिः प्रदेहपरिषेकयोः पद्मकादिः पाने च द्राक्षेक्षुरसयुक्ता हरीतकी विरेकः । पक्के पाटिते च पित्तव्रणोक्तो विधिः ॥**

पित्तजरक्तजयोस्सुबोधम् । उभये भिन्नविपक्के पित्तव्रणोक्तो विधिः ॥

**कफजमन्तश्शुद्धस्य भृशं स्वेदयेद्विम्लापयेच्च काकादनीविकङ्कतकाकनान्दिकारग्वधेंगुदमूलमदनफलभार्ङ्गीकरञ्जैर्लेपयेत् । नागरविळङ्गैलावालुकचव्यपलाशवृन्दाचित्रकैर्वा । भल्लातकसैन्धवाजगन्धा सर्षपैर्वा ॥**

कफजेऽन्तश्शुद्धिर्वमनविरेचनाभ्याम् । विम्लापनं, विलायनं, काकादन्यादिभिर्लेपयेत् । काकादनी, स्थूलकाकादनी । काकनान्दिका, गुञ्जा । [नागरादिभिर्वा लेपयेदितिसम्बन्धः] पलाशवृन्तं, पलाशपत्रम् ॥

**एवमप्यपच्यमानममर्मस्थं विदार्यास्थितरक्तं निश्शेषमग्निना दहेत् । स शेषो हि पुनरापूर्यते । ततो निर्वापितं क्षारक्षौद्रगुडोत्तरैरालेपैस्संशुद्धं रोपयेत् ॥**

एवमित्यनन्तरोक्तक्रियया पच्यमानममर्मणोन्यत्र स्थितं शस्त्रेण विदार्य स्थितरक्तं निश्शेषमग्निना दहेत् । स शेषस्य पुनरापूरणात् । निर्वापितं, शीतीकृतम् । रोपणैरालेपैः क्षाराद्यधिकैस्संशुद्धं रोपयेत् ॥

**मांसव्रणग्रन्थीचैवमेव यापयेत् । मेदोजेप्ययमेव विधिः अपि च । मेदोग्रन्थिं तिलकल्कदिग्धं द्विगुणपटान्तरितं तप्तेन फालेनदर्व्या वाजतु लिप्तया बहुशः प्रमृज्यात् । शस्त्रं वा वचार्यपूर्ववन्मेदो दहेत् । सुपक्वं वा विपाट्य मूत्रप्रक्षाळितं क्षौद्रसैन्धवसुवर्चिकाकाञ्चनक्षीरी हरितालमिश्रैः क्षीरवकप्रगाढैस्तिलैरालेपयेत् ॥**

एवमेवेत्यनयैवक्रियया यापयेत् । अपि चेति समुच्चये । सुबोधम् । फालो, लोहदळः । जतुलिप्तयादर्व्या तप्तयेत्यर्थात् । शस्त्रमवचार्य शस्त्रेण पाटयित्वेत्यर्थः । क्षीरबकं, श्वेतिका ॥

**गुञ्जादिकरञ्जतापसवृक्षवंशावलेखमूत्रसिद्धं तैलमभ्यङ्गः । सम्यक्शुद्धं चैनं रोपयेत् ॥**

गुञ्जादिसिद्धंतैलमभ्यङ्गः तापसवृक्ष, इङ्गुदः । वंशावलेखो वंशतनुवल्कः । सम्यक्शुद्धमेनं रोपयेत् ॥

**सिराग्रन्थौत्वभिनवे तैलं साहचरं पिबेत् उपनाहश्च वातहरैर्बस्तिकर्म च कुर्यात् । सिराव्यधश्च ॥**

अभिनवे सिराग्रन्थौ साहचरं तैलं पिबेत् । उपनाहादींश्च कुर्यात् ।

**वातार्बुदमेरण्डप्रियाळनाळिकेरमज्जोर्वारुकर्कारुबीजोत्कारिकयोपनाहयेत् । आनूपामिषवेशवारैर्वा । नाडीस्वेदश्च कुर्यात् बहु-**

शश्वात्रशृङ्गेण रुधिरमवसेचयेत् । वातहरवर्गक्वाथ पयोम्लसिद्धं त्रिवृतं पिबेत् ।

वातार्बुदे एरण्डपत्रादिभिरुपनाहं नाळीस्वेदञ्च कुर्यात् । अत्र वातार्बुदे बहुशश्शृङ्गेण रक्तमवसेचयेत् । वातहरवर्गादिसिद्धं त्रिवृतस्नेहं पिबेत् ॥

पित्तोत्थे मृदून् स्वेदोपनाहात् कायविरेचनञ्च प्रयोजयेत् । शाककाकोदुम्बरिका पत्रघृष्टे च प्रियङ्गुपत्तङ्गसर्जरसार्जुनलोध्रमधुमधुकैर्लेपः । श्यामा गिरिकार्णिकाञ्चनक्षीतनकनखद्राक्षा सप्तलान्यतमरससाधितं सर्पिः पीतं पित्तार्बुदश्लीपदोदरघ्नम् ॥

पित्तोत्थे मृदून् स्वेदोपनाहान् कायविरेचनञ्च शाकादिपत्रघृष्टे प्रियंग्वादिभिर्लेपः प्रियंग्वादिभिस्साधितं सर्पिः पीतं पित्तार्बुदादिघ्नम् ॥

श्लेष्मजेतूर्ध्वमधश्च हृतदोषस्य सुतरक्तस्य च वमनविरेचनद्रव्यैः प्रलेपः । काकादनी शुकबर्हाग्निजिह्वामूलदक्षकपोतगृध्रपुरीषकाशमूलैर्वा पलाशक्षीरपिष्टैः । पिण्याककुलत्थनिष्पावैर्मांसप्रगाढैर्दधिपिष्टैर्लेपयेत् । लेपास्वादलोभेन च निलीयमाना मक्षिकाः । समुपेक्षेत । तद्विमुक्तैः क्रिमिभिरितरैर्वा भक्ष्यमाणश्च । ततः क्रिमिभक्षितावशेषं शाकादिपत्रैर्विलिख्याग्निनाप्रतिसारयेत् । अल्पमूलं वात्रपु ताम्रायः सीसपट्टकवेष्टितम् । पुनः पुनश्चक्षारान् कालापेक्षया योजयेत् । जात्यास्फोतकरवीरपल्लवांश्च व्रणशोधनाय कल्कादौ । तैलश्चात्र पाठाविळङ्गभार्ङ्गी त्रिफलाकषायसिद्धमभ्यञ्जनम् ॥

श्लेष्मजे ऊर्ध्वमधश्च हृतदोषस्य सूतरक्तस्य वमनविरेचनद्रव्यैर्मदनादिभिः प्रलेपः काकादन्यादिभिर्वा शेषं सुबोधम ॥

मेदोर्बुदं स्विन्नभिन्नं सुशोधितमेदस्कमुपशान्त रक्तस्रावं सम्यक्सीव्येत् । ततो गृहधूमलोध्रमनश्शिला हरिद्रापत्तङ्गचूर्णैर्मधुमद्भिः प्रतिसारयेत् । करञ्जतैलश्चाभ्यञ्जनार्थे नियुञ्जीत । सर्वार्बुदानि च यदृच्छया पर्यागतानि सुपरिशोधितानि रोपयेत् । अपि च ॥

सशेषदोषाणि तु योर्बुदानि करोति तस्याशु पुनर्भवन्ति तस्मादशेषोद्धरणं प्रशस्तं क्षारेण शस्त्रेण तथाग्निना वा ॥

श्लीपदे तु वातात्मके स्नेहस्वेदोपनाहात् प्रयुज्यगुल्फस्योपरिष्टाच्यङ्गुले सिरां विध्येत् । एरण्डतैलञ्च गोमूत्रेण मासं पिबेत् जीर्णे नागरकाथितेन पयसा पुराणधान्यान्यश्नीयात् त्रिवृतञ्च पाययेत् । वस्तिञ्च प्रयुञ्जीत एवमप्यशाम्यत्यग्निना दहेत् ।

मेदोर्बुदक्रिया च सुबोधा । वातात्मके श्लीपदे स्वेदादीन् प्रयुज्य सिरां विध्येत् । एरण्डतैलं त्रिवृतस्नेहञ्च पाययेत् वस्तिञ्च कुर्यात् । अनन्तरोक्तेना शाम्यत्यग्निना दाहः ॥

पैत्तिके मृदुरुपनाहो गुल्फस्याधः सिरामोक्षः पित्तार्बुदोक्ताः स्नेहविरेकाः पित्तघ्नाश्च लेपाः ॥

पैत्तिके उपनाहादिकं पित्तघ्नलेपान्तम् ॥

श्लैष्मिकेत्वङ्गुष्ठे सिरां मुञ्चेत् । सक्षौद्रांश्च कफघ्नान् कषायानभीक्ष्णं पाययेत् । यथाबलं वा हरीतकी वर्द्धमानाः ॥

श्लेष्मात्मके अङ्गुष्ठे सिराव्यधः कफघ्नान्युक्तानि तेषां कषायात् सक्षौद्रानभीक्ष्णं पाययेत् । पिप्पली वर्द्धमानं रसायने वक्ष्यते ॥

आदारी काकजंघा काकादनी शुकनासाकदम्बपुष्पबृहतीद्वयमन्तर्धूमं दग्ध्वा गोमूत्रेण बहुशः परिस्रावयेत् ततस्तत् क्षारोदकं क्षारकल्पेन विपचेत् । दद्याच्चात्र प्रतीवापं फल्गुशुकाख्या मदनफलरसं एषक्षारो मधुराहारेणाभ्यस्तः श्लीपदापचीग्रहणीदोषारोचकान् सर्वविषाणि च नियच्छति ॥

आदार्यादीनामन्तर्धूमदग्धानां क्षारपरिस्रुतं गोमूत्रं सूत्रोक्तक्षारविधानेन विपचेत् । क्षारोदकशब्देन सामान्येन क्षाराच्छमुच्यते । आलेपयेन्नागरादिभिः ॥

तैलं वा पिबेद्विळङ्गार्कमरिचचित्रकशुण्ठीदेवदार्वेलावालुकलवणपञ्चकैस्सिद्धम् । आलेपयेच्च नागरामृताविळङ्गकटुकाभद्रदारुभिर्मूत्रपिष्टैरूरुस्तं भोक्तैश्च भेषजैर्यवान्नं च शीलयेत् ॥

विळङ्गादिभिस्सिद्धं तैलं वा पिबेत् । ऊरुस्तम्भोक्तैश्च भेषजैर्मूत्रपिष्टैरालेपयेदितिसंबन्धः । यवान्नञ्चभोजने शीलयेत् । इति श्लीपदम् ॥

गण्डमालायां कुम्भनिकुम्भद्रवन्ती जीमूतकको शातकीफलविपक्वं घृतमुभयानुलोमनं पिबेत् । शार्ङ्गेष्टामूलं वा तक्रपिष्टम् । वमनार्थं सुखोदकेन वा जातीबर्हिष्ठ निर्गुण्डीजीमूतकोतुण्डकीमूलत्वक्चूर्णम् । सिराश्चास्य विध्येत् ॥

गण्डमालायां कुम्भादिविपक्वं घृतमुभयानुलोमकं वमनविरेचनं पिबेत् । शार्ङ्गेष्टामूलं वा तक्रपिष्टं पिबेत् । जात्यादिमूलत्वक्चूर्णं वोष्णोदकेन वमनार्थं पिबेत् । बर्हिष्ठं, ह्रीबेरं, अस्येति गण्डमालावतः ॥

सशेषदोषन्तुकौष्ठिकं नवकं पाययेत् । रसाञ्जनं गोमूत्रतण्डुलोदकान्यतरेण । तदेवचनावयेत् । मधूकसारं वा शिग्रुफलानि वा निम्बकरञ्जकरवीरसिद्धं वा तैलं वैरेचानिकश्च धूमं पिबेत् ॥

शोधनेन सशेषदोषं गण्डमालिनं कुष्ठोक्तं नवकं हरिद्रादिकं पाययेत् । गोमूत्रेण वा तण्डुलोदकेन वा रसाञ्जनं पाययेत् । तदेवेति गोमूत्रेण तण्डुलोदकेन वा युक्तं रसाञ्जनं नावयेत् । मधूकसाराद्यन्यतमं वा नावयेत् । वैरेचनिकश्च धूमं सूत्रोक्तम् ॥

अपक्वांश्च गण्डान्नाकुलीसैन्धवनागरैर्लेपयेत् । गुञ्जाकरवीरार्कश्यामा सिद्धार्थकैरजामूलयुक्तैर्दशकृत्वो विपक्वं तैलं लवणपञ्चकपिप्पलीमरिचचूर्णोपेतमभ्यङ्गात्सर्वावस्थानपच्यर्शोर्बुदनाडीदुष्टव्रणवल्मीकानपोहति ॥

अपक्वांश्चेत्यादि सुबोधम् । नाकुली, सर्पसुगन्धा । गुञ्जादिभिर्विपक्वं तैलं तैरेव पुनः पचेत् । एवमेव पुनर्दशवारान् एवं पक्वेन लव-

णागुपेतेनाभ्यङ्गः सर्वावस्थानपच्यादीनपोहति वल्मीकाख्यः, क्षुद्ररोगः ॥

सौवर्चलसैन्धवौद्भिद दन्तीभल्लातकचित्रककल्केन सिद्धं तैलमभ्यङ्गो पच्याम् । तण्डूलीयकस्वरसेन वा सनिर्गुण्डीरसं वा तैलं साधितमभ्यङ्गपाननावनैर्गण्डमाला नाडीव्रणकुष्ठानिलार्तिहरम् ॥

सौवर्चलादिसिद्धन्तैलमपच्यामभ्यङ्गः । तण्डुलीयकनिर्गुण्डी स्वरसाभ्यां प्रत्येकं तैलं साधितमभ्यङ्गादिभिर्गण्डमालादिहरम् ॥

काकादनी नलिकाग्निजिह्वा वन्ध्या कर्कोटकी विशाला पाठोत्तुण्डकी जीमूतको शातकीबीजैरर्द्धपलांशैर्विषकर्षयुक्तैर्निर्गुण्डी स्वरसोपेतं करञ्जतैलप्रस्थं विपचेत्तत्पूर्ववदेवप्रयुक्तं परमपचीघ्नम् ॥

काकादन्यादिभिः पलांशिकैर्विषकर्षेणयुक्तैर्निर्गुण्डी स्वरससमंतै लैप्रस्थं विपचेत् तत्पूर्ववदभ्यङ्गादिषुयुक्तं परमातिशयेना पचीघ्नम् । वन्ध्या, कर्कोटकी निष्कला, वनजा कारवल्ली ॥

अमर्मजांश्च गण्डानपक्वानेवोद्धृत्याग्निना क्षारेणा वा प्रसाधयेत् । सर्षपवृक्षादनी क्वाथैर्व्रणक्षाळनम् । तिलकुन्तळक्षारपिष्टास्तिलकल्कः सुखोष्णो लेपः । काककूकलासगोधाहिनिर्मोक कूर्माणामन्यतमस्यान्तर्धूमदग्धस्य मषींगुदतैलप्लुताभ्यङ्गः । मांसीसर्जरसकार्पासीफलसैन्धवैः स्तन्यपिष्टैस्तैलं विपक्वमभ्यङ्गो व्रणकाठिन्यघ्नः सर्पाजगरवसे तैलं च समं त्वयमेतदपचीघ्नम् । श्लीपदोक्तानि च तैलानि प्रयोजयेत् ॥

तत्र चा मर्मजान् गण्डान् मर्मेभ्योऽन्यत्र जातानुद्धृत्योत्पाट्याऽग्निक्षारान्यतरेण साधयेत् । प्रक्षाळनलेपौ सुबोधौ । काकादीनामन्यतमस्याऽन्तर्धूमदग्धस्यमषी इङ्गुदतैलाप्लुताभ्यङ्गः - मांस्यादिभिस्तैलं सुबोधम् । सर्पवसाऽजगरवसा तैलश्चेत्येतत् त्रयमभ्यङ्गेनाऽपचीघ्नम् । सुबोधम् ॥

एवमनुपशमे वामपार्श्वजायां दक्षिणजंघा पृष्ठमध्यादिन्द्रवस्तेरधः ऊर्ध्वं वा शस्त्रेणाक्षिमात्रं व्रणं कृत्वा मत्स्याण्डजालानिभं मेदापनीयाऽग्निना दहेत् । अनेनेतरपार्श्वजा व्याख्याता । एवमुभयपार्श्वजायामुभयतः । यवमुद्गप्रायं च गण्डमालासु भोजनम् ॥

एवमित्यनन्तरोक्तप्रकारेण गण्डमालाया अनुपशमे वामपार्श्वजाया मपच्यां दक्षिणजंघायाः यत् पृष्ठमग्रभागं तस्य मध्ये वस्त्याख्यस्य जंघामध्यभवमर्मण ऊर्ध्वं वाऽत्रोवाऽक्षिमात्रं व्रणं कृत्वा ततो मत्स्याण्डजालनिभंमेदोपनीयव्रणमाग्निना दहेत् । अनेनवामपार्श्वजंघाविधानेनेतरपार्श्वजा दक्षिणपार्श्वजाऽपची व्याख्याता । तेनैतदुक्तं भवति । दक्षिणपार्श्वजाया मपच्यां वामजंघायां दाक्षिणप्रकारेण कर्मकार्यमिति । उभयपार्श्वजायां गण्डमालायां दक्षिणपार्श्वमाश्रितायां वामपार्श्वजंघायामपि वामपार्श्वमाश्रितायां दक्षिणपार्श्वजंघायामपि । यवमुद्गप्रायं यवमुद्गभूयिष्ठं इत्यपची ॥

नाडीमनिलजा मुपनाह्य पूयगतिमस्यानिश्शेषमेषित्वाऽवदारयेच्छस्त्रेण । ततस्ति-

ळापामार्गफलकल्केन ससैन्धवेन पूरयित्वा बध्नीयात् ॥

नाडीमलिनजा मुपनाह्य बध्वा अर्थाद्वातहरद्रव्यैः । पूयगतिं पूयनाडी मेषिण्यान्वीक्ष्य । सुबोधम् ॥

पित्तजां सघृतक्षीरया पत्मकादिकृतयोऽत्कारिकयोऽपनाहिताम् । विदारितां च तिलनागदन्ती माञ्जिष्ठाकल्केन पूरयेत् श्यामा त्रिभण्डी त्रिफलातिल्वकहरिद्राद्वयकल्कक्षीरसंस्कृतं सर्पिरभ्यङ्गः । परं नाडीनिबर्हणम् ॥

पित्तजाया नाड्याः पत्मकादिगणकृतया सघतक्षीरयोऽत्कारिकयोऽपनाहः । ततः शस्त्रेण विदारणम् । ततस्तिलादिकल्केन पूरणम् । श्यामादिकल्कक्षीरसंस्कृतं सर्पिरभ्यङ्गः ॥

श्लेष्मजां सक्तुकुलत्थकिण्वसर्षपैरुपनाह्य विदार्य च निम्बतिलसैन्धवसौराष्ट्रीनिकुम्भैर्लेपयेत् । दन्तीचित्रकस्वर्चिकासैन्धवतालीसनछदपूतीकापामार्गफलैस्तैलं समूत्रं पाचितमभ्यङ्गः ॥

श्लेष्मजाया नाड्याः सक्त्वादिभिरुपनाहः । विदारणं च निम्बादिभिर्लेपः । दन्त्यादिभिः समूत्रं तैलं पाचितमभ्यङ्गः ॥

शल्यहेतुकीं पाटयित्वा सर्वशः शल्यं विशोध्य मधुघृततिलकल्कप्रतिच्छन्नां बध्नीयात् । बिल्वकपित्थकुम्भीखर्जूरवनस्पातिशलाटुक्काथे प्रियङ्गुमुस्तोरुपूगशकुनसुगन्धिकालोध्रमोचरसधातकीपुष्पगर्भं तैलं प्रसाधितं साधयत्याशु शल्यजां गतिम् ॥

शल्यहेतुकीं नाडीं शस्त्रेण पाटयित्वा । सर्वश इत्यादि सुबोधम् । बिल्वादिवनस्पतिशलाटुक्वाथे प्रियङ्ग्वादिगर्भं तैलं प्रसाधितं शल्यजां गतिमाशु साधयति ॥

अशस्त्रकृत्यां नाड्यां भेदिन्यैषिण्याऽन्ते समुत्भिद्य क्षाराक्तं सूत्रं प्रवेशयेत् । तदसन्निधानेत्वितरयैषिण्या च तेनानवदीर्णायां तदनुस्यूतमन्यदन्यत् क्षारसूत्रं सञ्चारयेदा गतिभेदादयमनपायोऽभ्युपायः । सूक्ष्मानेकगतिषु भगन्दरेषु मूलेषु च छिद्रितेषु ग्रन्थ्यर्बुदेष्विति । भवतिचात्र ।

या नाळी सूत्रोक्तप्रकारेण शस्त्रकृत्या न भवति तां भेदिन्या विशिष्टयैषिण्याऽन्ते समुत्भिद्येत्यादि सुबोधम् । तदसन्निधान इति भेदिन्येषिण्य सन्निधाने । तेनेति क्षारसूत्रेण तदनुस्यूतमिति पूर्ववत् क्षारसूत्रवेष्टितं कृत्वा सूचीवत् सूत्रं सूत्रेण प्रवेशयेदयं क्षारसूत्रप्रयोगः अनपायः परिणामे निर्दोष उपायः । किं नाडीष्वेवायमनपायोभ्युपाय आहोस्विदन्यत्रापीत्याह । सूक्ष्मानेकगतिष्वित्यादिमूलेषु च छिद्रितेष्विति ग्रन्थ्यर्बुदविशेषणम् । छिद्रेणैव सूत्रप्रयोगः । गतानुगतिका ॥

व्रणेषुदुष्टसूक्ष्मास्यगम्भीरादिषुसाधनम् ।
यावर्त्यो यानि तैलानि तन्नाडीष्वपि कल्पयेत् ॥

पूर्वं व्रणेषु दुष्टेषु सूक्ष्मास्येषु गम्भीरादिषु यावर्त्यो यानि च तैलानि तत्साधनं चिकित्सितं नाडीष्वपि कल्पयेत् ॥

विभीतकम्राास्थिवटप्रवाल-
हरेणुकाशाल्मलिबीजयुक्ता ।
वराहविष्ठा च मषीसुदग्धा
तैलप्लुता सर्वगतीर्निहन्ति ॥

विभीतकादिमष्यास्तैलप्लुतायास्सर्वगतिप्रयोगः ॥

धत्तूरकंमदनकोद्रवजश्चबीजं
कोशातकीशुकनसामृगभोजनी च ।
अङ्कोलजश्चकुसुमं परिकल्प्य चूर्णं
लाक्षोदकापहृतदोषगतौ प्रयोज्यम् ॥

मिश्रितं तेन तैलश्च परमं गतिरोपणम् ।
सौवहेषु च कन्देषु कृतं वज्राह्वयेषु च ॥

भल्लातकार्कमरिचैर्लवणोत्तमेन
सिद्धं विळङ्गरजनीद्वयचित्रकैश्च ।
तैलं समार्कवरसैर्विनिहन्ति कृच्छ्रां
नाडीं कफानिलकृतामपचीव्रणांश्च ॥

॥ इति पञ्चत्रिंशोऽध्यायः ॥

धुर्द्धूरादिकं चूर्णं परिकल्प्य मदनकोद्रवौ शालिविशेषौ मृगभोजिनी मृगादिनी, तेन च धत्तूरादिचूर्णेन युक्तं तैलं परमं गति रोपणम् । भल्लातकादिभिस्सभृङ्गरसैस्सिद्धं तैलं सुकृच्छ्रानपि नाड्यादीन् विनिहन्ति ॥

इतीन्दुविरचितायां अष्टाङ्गसंग्रहव्याख्याया-
॥ मुत्तरे पञ्चत्रिंशोऽध्यायः ॥

# षट्त्रिंशोऽध्यायः ।

## क्षुद्ररोगविज्ञानीयम् ॥

शस्त्रकर्मार्हरोगप्रसङ्गेन क्षुद्ररोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ॥

अथातः क्षुद्ररोगविज्ञानीयंनामाध्यायं व्याख्यास्यामः । इति यः ॥

क्षुद्रारोगाः क्षुद्ररोगः । [क्षुद्रशब्दः स्वल्पाधमक्रूरपर्यायवाची । क्षुद्रः स्वल्पेधमे क्रूर इति वैजयन्ती । उक्त धर्मयुक्ता रोगाः क्षुद्ररोगाः उक्तं च । मन्दवेगा महावेगा व्याधयोल्परुजोऽरुजः । येमहान्तोल्पकाश्चैव क्षुद्ररोगास्तु ते स्मृता इति । अत्राऽपि स्वल्पामशव्यङ्गतिलकाळकादयः । अधमारुद्धगुदशर्करार्बुद कुनखादयः । क्रूरा मसूरिकाविस्फोटाग्नि रोहिण्यादयः । क्रौर्ये क्षुद्रशब्दप्रयोगः पुराणादिष्वपि दृश्यते । अपि क्षुद्रमृगा यत्र शान्ताश्चेरुः समामृगैरिति । आयुर्वेदस्य तस्याष्टौ प्राहुरङ्गानि तद्विदः । सर्वेभ्यः प्रायशस्तेभ्यः क्षुद्ररोगाः समुच्छ्रिता इति श्रेष्ठत्वेपि ॥ ]

[क्षुद्ररोगाणामनेकविधत्वेन सामान्यलक्षणाभावात् प्रत्येकं व्याधिगौरवानुरूपेण हेत्वादिकं प्रदर्शयिष्यति ॥ ]

स्निग्धाः सवर्णा ग्रथिता नीरुजा मुद्गसन्निभाः ।
पिटकाः कफवाताभ्यां बालानामजगल्लिका ॥

बालानां कफवाताभ्यां स्निग्धादिगुणाः पिटका भवन्ति सा नाम्नाऽजगल्लिका । बालानां प्राय इयि बोद्धव्यम् । [ केरळे पालुण्णीत्युच्यते ॥ ]

**यवप्रख्यायवप्रख्या ताभ्यां मांसाश्रिता घना। अवक्त्रात्वलजी—**

ताभ्यामिति कफवाताभ्यां मांसाश्रिता घना यवसदृशाया पिटका भवति सा नाम्ना यवप्रख्या । सैवावक्त्रासत्यलजीत्युच्यते । [ताभ्यामेव अवक्त्रा अमुखतया पूयोत्गमनद्वाररहिता ॥ ]

**—वृता स्तोकपूयाघनोन्नताः ॥**
**ग्रन्थयःपञ्च वा षड्वा कच्छपी कच्छपोन्नताः ॥**

वृत्तत्वादिगुणाः पञ्च वा षड्वा कच्छपवदुन्नता ग्रन्थयो नाम्ना कच्छपी । [कफवाताभ्याम् । कच्छपोन्नताः कच्छपपृष्ठवदौन्नत्ययुक्ताः ॥ ]

**कर्णस्योर्ध्वं समन्ताद्वा पिटकाकाठिनोग्ररुक् । शालूकाभापनसिका—**

कर्णस्योपरिभागे समन्ताद्वा कर्णमाश्रित्य काठिनत्वादिगुणा शालूकेन जलकुसुमकन्देनसदृशा पिटका नाम्ना पनसिका । [कर्णस्योर्ध्वमुपरिष्टान् समन्तान् परितः वाशब्दो विकल्पार्थः। उभयोः पार्श्वयोः समं जायतेनैकास्मिन्नेव कर्ण इति भोजः । उक्तं च । कर्णयोरुपरिष्टाच्च कर्णयोश्च समन्ततः । पिटकां कुरुते राजन् शालूकसदृशां स्थिरामिति । कठिना कठिनस्पर्शा । उग्ररुगधिकतरपीडायुक्ता । शालूकाभा शालूककन्दसदृशा । (शालूकं नीर्बेम्प् । ) पिटका पनसिकासंज्ञः क्षुद्ररोगः ॥ ]

**—शोफस्त्वल्परुजः स्थिरः ।**
**हनुसन्धिसमुद्भूतस्ताभ्यां पाषाणगर्दभः ॥**

ताभ्यामिति कफवाताभ्यां हनुसन्धौ समुत्पन्नः अल्परुजादिकः शोफो नाम्ना पाषाणगर्दभः ॥

**शाल्मलीकण्टकाकाराः पिटकाः सरुजो घनाः।**
**मेदोगर्भा मुखे यूनां ताभ्यां च मुखदूषिका ॥**

ताभ्यां चेति कफवाताभ्यामेव शल्मलीकण्टकाकारत्वादिगुणा यूनां यौवनवतां मुखेया पिटका भवन्ति ता नाम्ना मुखदूषिका मेदो गर्भे पूरणे यासां तास्तथोक्ताः चशब्दो भेदः समुच्चयति । [ताभ्यां कफवाताभ्यां यूनां प्रत्यग्रवयसां मुखे वदनस्य बहिर्भागे कपोलललाटनासिकाचिबुकादिप्रदेशे । शल्मलीकण्टकाकाराः शल्मलीकण्टकसदृशाः आकृतिमात्रेणैव सादृश्यम्। सरुजः ईषद्रुजायुक्ताः । घना निबिडाः । मेदोगर्भाः मेदःगर्भेन्तर्भागे यासां । यास्त्वेवं विधास्ताः पिटकाः मुखदूषिकासंज्ञः क्षुद्ररोगः ॥ ]

**तेपद्मकण्टकाज्ञेया यैः पद्ममिव कण्टकैः ।**
**चीयते नीरुजैः श्वेतैः शरीरं कफवातजैः ॥**

ते पत्मकण्टका नाम्ना ज्ञेयाः यैः कफवातजैः पत्मं कण्टकैरिव शरीरे नीरुजैःश्वेतैश्चीयते सञ्चियिते । [कफवातनिमित्तैः नीरुजै रुजारहितैः श्वेतैः श्वेतवर्णैः यैः पिटकैः कण्टकैः पत्मं पत्मनाळमिव शरीरं चियिते समन्ताव्याप्य-

ते ते पिटकाः पक्ष्मकण्टकसंज्ञाः ज्ञेयाः मुनिभिरिति शेषः य एवंविधः स पक्ष्मकण्टाख्यः क्षुद्ररोगः ॥ ]

**पित्तेनपिटकावृत्ता पक्वोदुम्बरसन्निभा ।**
**महादाहज्वरकरी विवृता विवृतानना ॥**

पित्तेन हेतुना विवृतमुखी वृत्तत्वादिगुणा पिटका भवति सा नाम्ना विवृता । [पित्तेन हेतुना वृत्ता वर्तुळा पक्वोदम्बरसन्निभा पक्वेनोदुम्बरफलेनसदृशी महादाहज्वरकरी महान्तमतिदुस्सहं दाहं सर्वाङ्गीणं तीव्रसन्तापं तथाविधं ज्वरं च करोतीति महादाहज्वरकरी विवृतानना असंवृतमुखी अनेनारम्भसमय एव पाकपूयस्रवणादिकं द्योत्यते। या एवं विधा सा पिटका विवृतासंज्ञः क्षुद्रोगः ॥ ]

**गात्रेष्वन्तश्चवक्त्रस्य दाहज्वररुजान्विताः ।**
**मसूरमात्रास्तद्वर्णास्तत्संज्ञाः पिटका घनाः ॥**

गात्रेषु बहिरन्तर्मुखं च याः प्रकरणात् पित्तेन पिटका मसूरप्रमाणाः तद्वर्णा इति मसूरवर्णा लोहिताः घनाश्च भवन्ति तास्तत्संज्ञाः नाम्ना मसूरिकाः। [गात्रेषु पादपाण्याद्यवयवेषु अनेन पादतलं मस्तकं च गृह्यते । वक्त्रस्यान्तरन्तर्मुख इत्यर्थः। चशब्दान्नेत्रश्रोत्राद्यन्यस्रोतांसि च गृह्यन्ते । दाहज्वरान्वित । दाहज्वररुजान्विताः दाहेन ज्वरेण रुजया चान्वितायुक्ताः दाहः सर्वाङ्गीणसन्तापः । अथवा दाहज्वरो दाहादिज्वरः मसूरमात्राः मसूरप्रमाणाः तद्वर्णा मसूरतुल्यवर्णाः लोहिता इत्यर्थः । घना निबडतया निरन्तरप्रसृताः पिटकास्तत्संज्ञाः मसूरिकासंज्ञाः । मसूरिकाया रक्तपित्तजत्वमाहभोजः । उक्तं च । पित्तं शोणितसंसृष्टं त्वचं दूषयते यदा। करोति पिटकां घोरां सर्वगात्रेषु देहिनाम् । तिलसर्षपमाषाणां निष्पावानां तथैव च । तुल्यप्रमाणसंस्थानां ज्वरदाहसमन्विताम् । विद्यान्मसूरिकामेतां पिटकां रक्तपित्तजामिति । उरभ्रस्तु नामानुगतरूपभेदेनास्या अष्टविधत्वमाह । उक्तं च । मसूरिका सर्षपिका अजकाक्षो द्रवस्तथा । कंगुर्विस्फोटकोऽपाकी विसर्पीचाष्टमी स्मृता । सोषकण्डूज्वरां ताम्रां सूक्ष्मामाहुर्मसूरिकाम् । सर्षपाकृतितद्वर्णां दाहपाकरुजावतीम् । रक्ताभमूलां दुस्साधां पित्तात् सर्षपिकां जगुः । कळायसदृशां गाढां शाखा पर्वास्थि शोफिनीम् । दाहक्लेदव्रणामूचु रजकां श्लेष्मपित्तजाम् । कोद्रवं कोद्रवाकारं रक्तपित्तसमुद्भवम् । कङ्गोस्तण्डुलसङ्काशैर्निरन्तरविसर्पिभिः । स्फोटैः श्लेष्मसमुद्भूतैरापूर्णं कंगुरिष्यते । अग्निदग्धैरिव स्फोटैराकीर्णः कफरक्तजः । निर्विपाको विसर्पस्तु विस्फोटक इति स्मृतः । अपाकं विरळं शुष्कं जायते मृत्युसन्निभम् । विसर्पवत्सर्पतिसर्वगात्रे शोफान्विता च ज्वरदाहयुक्ता । विसर्पिणी कायसमानवर्णा कालोपकल्पा कफरक्तजातु । विदाहकम्पातिरुजातिसारैस्तृष्णार्तिहिक्कारुचिकासमोहैः युक्तानि हन्त्याशु मसूरिकान्तर्मुखा च बाह्ये किणसन्निभा च । ज्वरास्यशोषाङ्गविमर्दकासन्धिश्लथत्वारुचिरोमहर्षाः । शिरोर्तिनेत्रामयपीनसाश्च मसूरिकाणां प्रभवन्तिचाग्रे । त्वगक्षिरोगापस्मार राजयक्ष्ममसूरिकाः । दर्शनात् स्पर्शनात् दानात् सङ्क्रामन्ति नरान्नरम् ।

इति । पृथग्दोषसंसर्गसन्निपातरक्तविषद्रुमप्रसवाघ्राणजत्वभेदेनास्या नवविधत्वमाख्यातवान् भरद्वाजः । पृथग्दोषसन्निपातरक्तागन्तुजत्वभेदेन षट्विधत्वमाह वृद्धकाश्यपः । तत्सर्वं ग्रन्थगौरवभयादत्र न लिख्यते ॥

**ततः कष्टतरास्फोटा विस्फोटाख्या महारुजाः ॥**

ततो मसूरिकातः सर्वेण प्रकारेण कष्टतरा महारुजाः स्फोटास्तु आख्यया विस्फोटाः । [कष्टतराः अतिशयितपीडायुक्ताः निरन्तराचितस्फोटसर्वाङ्गतयाऽसनशयनाद्येषु कथञ्चिदलब्धशर्मतयाऽनल्पवेदना युक्ता इत्यर्थः । विस्फोटस्य पित्तजत्वमाहभोजः । पित्तं प्रकुपितं स्थानात्त्वचं बाह्यां समाश्रितम् । करोति त्वग्गतान् स्फोटानग्निदग्धोपमान् बहून् । सर्वदेहाश्रयं जन्तोर्ज्वरदाहसमन्वितान् । नानाप्रकारसंस्थानान् विद्याद्विस्फोटकान् नृप इति । जातूकर्णेपि । ऊषाचोषपरीदाह ज्वराङ्गसदनान्विताः । जायन्ते पित्तवैषम्याद्विस्फोटाः । सर्वदेहगा इति ॥ ]

**यापत्मकर्णिकाकारा पिटका पिटकाचिता ।**
**सा विद्धा वातपित्ताभ्यां ताभ्यामेवचगर्दभी ॥**

वातपित्ताभ्यां या पत्मकर्णिकाकारा अग्रे महती तनुमूला पिटकाभिरन्याभिराचिता पिटका सा नाम्ना विद्धा भवति । ताभ्यामेवेति वातपित्ताभ्यामेव गर्दभीनाम पिटका भवति । अस्याः पत्मकर्णिकाकारत्वं न भवतीत्यर्थात् ॥

**मण्डला विपुलोत्सन्ना सरागपिटकाचिता ।**

प्रकरणाद्वातपित्ताभ्यामेवया विपुला विस्तृता उत्सन्ना प्राप्तोत्सेधा सरागाभिरन्याभिः पिटकाभिश्चाचिता सा नाम्ना मण्डला ॥

**कक्ष्येति कक्षासन्नेषु प्रायो देशेषु सानिलात् ।**
**पित्तात् भवन्तिपिटका सूक्ष्मालाजोपमाघनाः ।**
**तादृशी महतीत्वेका गन्धनामेति कीर्तिता ।**

सानिलात् प्रधानात् पित्तात् प्रायः कक्षासन्नेषु प्रदेशेषु सूक्ष्मालाजसदृशा घनाश्च पिटका भवन्ति सरोगो नाम्ना कक्ष्या । तादृशीति कक्षासन्नेषु सा निलात् पित्ताद्यामहत्येका पिटका सा नाम्ना गन्धनामा इति कीर्तिता । [प्रायः शब्देनास्योपेक्षया सकलशरीरव्यापकत्वं सूचितम् । कक्ष्यासन्नेषु प्रदेशेषु बाहुपार्श्वादिष्वित्यर्थः । उक्तं च सौश्रुते । बाहुपार्श्वांसकक्षेषु कृष्णाः स्फोटाः सुदारुणाः । पित्तप्रकोपसम्भूताः कक्ष्यामिति विनिर्दिशेत् । इति । तादृशीति । आकृत्या कक्ष्यासदृशी । महती-स्थूला । एका अद्वितीया । एका तु महती इति योजनायामनेकपिटकासध्ये एकस्या महत्त्वमिति च प्रतीयते । एतमर्थं पित्तकारणत्वं चाहधन्वन्तरिः । एकामेतादृशीं दृष्ट्वा पिटकां स्फोटकाचिताम् । त्वग्गतां पित्तकोपेन गन्धनामां प्रचक्षत इति ॥ ]

**घर्मस्वेदपरीताङ्गे पिटकाः सरुजोघनाः ।**
**राजिकावर्णसंस्थानप्रमाणा राजिकाह्वयाः ॥**

घर्मेणा तपेन स्वेदेन वा परीते समायु-

के चाङ्गे देहे सरुजत्वादिगुणायाः पिटकास्ता-नाम्नाराजिकाह्वयाः राजिकासंज्ञाः । राजिकारक्तसर्षपास्ताभिस्तुल्यं वर्णादियासां पिटकानां तास्तथोक्ताः । [क्लेदः स्वेदविध्युक्ततापोपनाहादिजनितः । संस्थानेनैव प्रमाणसिद्धेः पुनरपि प्रमाणकथनं प्रमाणाधिक्ये एतत् भ्रान्तिनिरासार्थम् । अनुक्तकारणत्वादत्राप्यनिलपित्तजत्वमूह्यम् ।]

**दोषैः पित्तोद्बणैर्मन्दैर्विसर्पति विसर्पवत् ।**
**शोफो पाकस्तनुस्ताम्रो ज्वरकृज्जालगर्दभः ॥**

पित्तोद्बणैस्त्रिभिर्दोषैर्मन्दैश्चिरकारिभिः क्रमेण विसर्पवत्तनुत्वादिगुणः पाकरहितश्चयः शोफो विसर्पति व्याप्नोति स नाम्ना जालगर्दभः ॥

**मलैः पित्तोद्बणैः स्फोटा ज्वरिणो मांसदारणाः**
**कक्ष्याभागेषुजायन्तेयेऽग्न्याभाःसाग्निरोहिणी ।**
**पश्चाहात् सप्तरात्राद्वा पक्षाद्वाहन्ति जीवितम् ।**

पित्तोद्बणैस्त्रिभिर्दोषैर्ये ज्वरादियुता मांसदारणाः स्फोटा वर्णदाहव्याप्त्यादिकेनाग्निसदृशाः कक्ष्यासन्नेषु प्रदेशेषु जायन्ते साग्निरोहिणीत्युच्यते । सा चाग्निरोहिणी दोषकोपवशात् पञ्चाहेन सप्तरात्रेण पक्षेण वा जीवितं हन्ति । [पित्तोद्बणैरुद्रिक्तपित्तैर्मलैर्वातादिभिः ज्वरिणः स ज्वरस्य पुरुषस्य । ज्वरिण इति स्फोटविशेषणं वा आमरणान्तं ज्वरकारिण इत्यर्थः । कक्ष्या भागेषु अत्र भागशब्दस्य बहुवचनोक्त्या न केवलं कक्ष्यैव तत्समीपवर्तिनोऽन्येपि प्रदेशा गृह्यन्ते । इक्तं च सौश्रुते । स्फोटाः कक्षांसपार्श्वेषु जायन्ते मांसदारणाः । अन्तर्दाहज्वराकारा दीप्तपावकसन्निभाः । सप्ताहाद्वाद्दशाहाद्वा पक्षाद्वाघ्नन्तिमानवम् । तामग्निरोहिणीं विद्यदसाध्यां सन्निपातत इति । मांसदारिणः मांसदरणशीलाः । अनेनैषामन्तर्मूलत्वं ध्वन्यते । अग्न्याभाः वर्णौष्ण्यादिभिरग्निसदृशाः । य एवंविधा विस्फोटा जायन्ते सा नाम्ना अग्निरोहिणीति प्रसिद्धा । सा पञ्चाहात् पञ्चदिवसात् पूर्वमिति शेषः । सप्तरात्रात् सप्तदिवसात् पक्षात् पञ्चदशदिवसाद्वा जीवितं नाशयति । असाध्यप्रकरणात् पञ्चाहादेः परमिति वा । सन्निपात जाया अप्यस्या असाध्यमर्यादायास्त्रै विध्यकथनमेकैकदोषोद्रेकात् । तत्राशुकारिणः पित्तस्योद्रेककथनात् पित्तवातकफजस्थितिक्रमोपि बोद्धव्यः ॥]

**त्रिलिङ्गा पिटका वृत्ताजत्रूर्ध्वमिरिगल्लिका ।**

जत्रुण ऊर्ध्वं त्रिलिङ्गात्रिदोषलक्षणा वृत्ता या पिटका सा इरिगल्लिकेत्युच्यते । [अस्या अपि सन्निपातजत्वादुग्ररुग्ज्वरादिसहितत्वं द्योत्यते । उक्तं च धन्वन्तरिणा । पिटकामुत्तमाङ्गस्थां वृत्तामुग्ररुजाज्वराम् । सर्वात्मिकां सर्वलिङ्गां जानीयादिरिगल्लिकामिति ॥]

**विदारीकन्दकठिनाविदारीकक्षवङ्क्षणे ।**

कक्षे वङ्क्षणेवा या विदारीकन्दवत् कठिना पिटका सा विदारी नाम्ना । [अत्रापि त्रिलिङ्गत्वमूह्यम् । ऊक्तं च धन्वन्तरिणा । विदारीकन्दवद्वृत्ता कक्षवङ्क्षणसान्धिषु । वि-

दारिका सा विज्ञेया सरुजा सर्वलक्षणा इति ।]

**मेदोनिलकफैर्ग्रन्थिः स्नायुमांससिराश्रयैः ।**
**भिन्नोवसार्ज्यमध्वाभं स्रवेत्तत्रोद्धणोनिलः ॥**
**मांसं विशोष्यग्रथितां शर्करामुपपादयेत् ।**
**दुर्गन्धिरुधिरं क्लिन्नं नानावर्णं ततोमलाः ॥**
**तांस्रावयन्ति निचितां विद्यात्तच्छर्करार्बुदम् ।**

स्नाय्वाद्याश्रयैर्मेदः प्रभृतिभिः प्रथमं ग्रन्थिर्भवति । ततः स एव स्वयं भिन्नो वसादिसदृशं स्रवेत् । तत्र स्रावयुक्ते ग्रन्थावनिलो वायुरुद्धणः प्राप्तबलो मांसं विशोष्य ग्रथितां कठिनां शर्करामुपपादयेत् । ततोनन्तरं मला वातादयो निचिता वृद्धाः सन्तः तां शर्करां दुर्गन्धत्वादियुक्तं रुधिरं स्रावयन्ति तस्य रोगस्य शर्करार्बुदमिति संज्ञा । [स्नायुमांससिराश्रयैः स्नायुर्मांसं सिराश्च आश्रयो येषां तैः मेदोनिलकफैः कृतो यो ग्रन्थिः सः स्वयं भिन्नः वसाज्यमध्वाभं वसाघृतमधुनिभं यत् किञ्चित् स्रवेत् । तत्र तस्मिन् काले अनिल उद्धण आस्रावाल्लब्धावकाशतया वृद्धिंगतः मांसं विशोष्यशोषयित्वा ग्रथितां ग्रथनात् काठिन्ययुक्तां शर्करां शर्करा तुल्यत्वाच्छर्करां (शर्करावत् कल्ल् ।) उपपादयेत् परिणामयेत् ततोनन्तरं मलावातादयो (निचितामिति पाठः ।) निचितां वृद्धां तां शर्करां दुर्गन्धि दुर्गन्धयुक्तं क्लिन्नं क्लेदयुक्तं नानावर्णं सन्निपातजत्वात् सङ्कीर्णवर्णं रुधिरं रक्तं स्रावयन्ति शर्करातः सिरामुखेन स्रावयन्तीत्यर्थः । उक्तं च । दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं ततः सिराः स्रवन्ति सहसा रक्तं विद्यात्तच्छर्करार्बुदमिति । यदेवंविधं तच्छर्करार्बुदं विद्यात् ॥]

**पाणिपादतलेसन्धौ जत्रूर्ध्वंवोपचीयते ।**
**वल्मीकवच्छनैर्ग्रन्थि स्तद्वत्बह्वणुभिर्मुखैः ॥**
**रुग्दाहकण्डूक्लेदाढ्यैर्वल्मीकोसौसमस्तजः ।**

पाणिपादतलादिके ग्रन्थिरुपचयं प्राप्नोति । तद्वदिति शर्करार्बुदग्रन्थ्युक्त हेतुना । वल्मीकवत् पिपीलिकास्थाणुवत्क्रमवृध्या च बहुभिरणुभिश्च रुग्दाहाद्याढ्यैर्मुखैरुपलक्षितः । असौरोगो नाम्ना वल्मीकः । अस्य पूर्वस्माद्विशेषः समस्तजत्वं सन्निपातजत्वम् । [पाणितले पादतले सन्धौ कक्षादिके जत्रूर्ध्वं जत्रोरुपरिभागे वा वल्मीकवत् वल्मीकसदृशं ग्रन्थिर्ग्रथितः शोफः तद्वद्वल्मीकवत् बह्वणुभिः बहुभिरसंख्यैरणुभिः सूक्ष्मैः रुग्दाहकण्डूक्लेदाढ्यैः रुगादिपरिपूर्णैर्मुखैः पूयोद्गमनद्वारैः शनैर्मन्दं मन्दं उपचीयते उपचयं प्राप्नोति उपचयोवृद्धिः समस्तजः सन्निपातजः असौवल्मीकः वल्मीकाख्यः क्षुद्ररोगः ॥]

**शर्करोन्मथिते पादेक्षते वा कण्टकादिभिः ।**
**ग्रन्थिकीलवदुत्सन्नो जायते कदरं तु तत् ॥**

शर्करया शिला खण्डिकया पाद उन्मथिते अथवा कण्टकादिभिः क्षते कीलवत् सोत्सेधो ग्रन्थिर्जायते तत्तुकदरं नाम्ना भवति । [शर्कराभिरुन्मथिते कृतोन्मथने निरन्तरनिचितशर्करा प्रदेशाटनादित्यर्थः । कण्टकादिभिः आदिशब्देन निशिताग्रदारुशकलादिपरिग्रहः ।

क्षते व्रणिते वा शब्द उन्मथनक्षतयोर्विकल्पार्थः । पादे पादतले कीलवत् उत्सन्न उन्नतः ग्रन्थिर्जायते । कीलसाम्येन निखातकीलवद्त्यन्तवेदनाकरत्वं च द्योत्यते तत् तुर्विशेषेकदरं कदराख्यः क्षुद्ररोगः ॥ ]

**वेगसन्धारणाद्वायुरपानोपानसंश्रयम् ।**
**अणूकरोति बाह्यान्तर्मार्गमस्य ततः शकृत् ॥**
**कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदोमतः ।**

अपानाख्यो वायुर्वेगरोधाद्धेतोरपानसंश्रयं गुदसंश्रयं मार्गं बाह्यान्तरणूकरोति सङ्कोचयति । ततः अणूकरणाद्धेतोरस्य पुंसः शकृत् पुरीषं कृच्छ्रान्निर्गच्छति । अयं व्याधिर्नाम्ना रुद्धगुदोमत आचार्याणाम् । [वेगसन्धारणात् अधो वातपुरीषादिवेगधारणात् कुपितः अपानोवायुर्गुदाश्रयः अस्य गुदस्य बाह्यान्तर्मार्गं वलीत्रितयमित्यर्थः । अपानसंश्रयः इति च पाठः ॥ ]

**कुर्यात् पित्तानिलं पाकं नखमांसे सरुग्ज्वरम् ।**
**चिप्पमक्षतरोगं च विद्यादुपनखं चतम् ॥**

पित्तानिलं कर्तृनखमांसे सरुग्ज्वरं पाकं कुर्यात् । तस्य रोगस्य चिप्पमित्यक्षतरोगमित्युपनखमिति च नामत्रयम् । [ पित्तं चानिलश्च पित्तानिलं अत्र सर्वोपि द्वन्द्वः समाहारार्थ एकवत् स्यादिति द्वन्द्वस्यैकवत् भावः स नपुंसकमिति नपुंसकत्वं च । नखमांसे नखसम्बन्धिन्यन्तर्बहिर्मांसे सरुग्ज्वरं रुग्ज्वरोपेतं पाकं कुर्यात् । तं रोगं चिप्पाख्यमक्षतरोगाख्यमुपनखाख्यं च विद्यात् जानीयात् ॥ ]

**कृष्णोभिघाताद्रूक्षश्च खरश्चकुनखोनखः ।**

अभिघाताद्धेतोर्यः कृष्णो रूक्षः खरश्च नखो भवति सरोगो नाम्ना कुनखो भवति । [ स्खलनशिलादार्वादिपतनजनितादभिघाताद्धेतोः ॥ ]

**दुष्टकर्दमसंस्पर्शात् कण्डूक्लेदान्वितान्तराः**
**अंगुल्योऽलसमित्याहुः**

दुष्टकर्दमस्य संस्पर्शात् कण्ड्वादियुता अंगुल्यः अलसमित्याहुः । [दुष्टकर्दमसंस्पर्शात् कृम्यादिदूषितमलनयनस्पर्शशीलनात् अत्र कफपित्तकारणत्वं शास्त्रान्तरादवगन्तव्यम् । उक्तं च । दुष्टकर्दमसंस्पर्शात् पादांगुल्यन्तरे व्रणम् । कण्डूपा क्लेदकोथाढ्यं स पित्तः कुरुते कफ इति ॥ ]

**तिलाभांस्तिलकालकान् ।**
**कृष्णानवेदनां स्त्वक्स्थान् मशांस्तानेव चोन्नतान् ।**
**मशेभ्यस्तून्नततरान् च नीकीलान् सितासितान्**
**तथाविधो जतुमणिः सरुजो लोहितस्तुसः ।**

कृष्णादिगुणान् त्वक्स्थान् तिलाभान् तिलकालकानाहुः । [तिलाभान् तिलप्रमाणान् । उक्तं च शास्त्रान्तरे । कृष्णास्तिलप्रमाणाये नीरुजाः पिटकाः समाः । वातपित्तप्रकोपेन तान् विद्यात्तिलकालकानिति । ] उन्नतांस्तानेवमशानाहुः । [ उन्नतान् किञ्चिदुत्सन्नान् तांस्तिलकालकान् एव शब्देनाकृतिमात्रस्य विशेष इति द्योत्यते । उक्तं च । अवेदनं स्थिरं चैवयत्तु-

गात्रे प्रजायते । माण्वत्कृष्णमुत्सन्नं तद्वातान्मशमादिशेदिति ।] तेभ्योऽप्युन्नततरान् सितासितान् चर्मकीलानाहुः । [सितासितान् कांश्चित् सितान कांश्चिदसितान् । अर्शो निदानोक्तचर्मकीलात्तु सितासितत्वं विशेषः ।] तथाविधः सरुजो लोहितश्चय: स नाम्ना जतुमणि: । [तथाविधः चर्मकीलतुल्यः । सहजो लोहित इति च पाठः । सजतुमणिस्तुर्विशेषे । सहजः देहेन सहजातश्चेल्लोहितो रक्तवणः ॥]

**कृष्णं सितं वा सहजं मण्डलं लाञ्छनं समम्।**

शरीरे यत्कृष्णं वा सितं वा सहजं समं मण्डलं तल्लाञ्छनमित्युच्यते । [सहजातं सहजम् । समं निम्नोन्नतत्वरहितम् ।]

**शोकक्रोधादिकुपिताद्वातपित्तान्मुखेतनु ।**
**श्यामळमण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका ॥**

शोकादिकुपिताद्वातपित्तात्तनुत्वादिगुणं यन्मुखे मण्डलं तन्नाम्ना व्यङ्गम् । तदेववक्त्रादन्यत्र देशे स्थितं नीलिकेतिनामलभते । सा च स्वरूपा विशेषान्न रोगान्तरम् । [व्यङ्गनीलिकयो: संज्ञा भेदस्य स्थानमात्रजनितत्वाद्वक्ष्यमाण. षड्त्रिंशत्सख्यायामेकत्वेनैव संख्यानं कायम् । न पृथक्त्वेन ॥]

**परुषं परुषस्पर्शं व्यङ्गं श्यावं च मारुतात् ।**
**पित्तात्ताम्रान्तमानीलं श्वेतान्तं कण्डुमत्कफात्।**
**रक्ताद्रक्तान्तमाताम्रं सोषं चिमिचिमायते ॥**

तव्यङ्गं मारुतात् परुषादिरूपम् ताम्रपर्यन्तमानीलं च पित्तात् । श्वेतपर्यन्तं कण्डुमच्च कफात् । रक्तपर्यन्तादिरूपं रक्ताव्यङ्गं भवति । सह ऊष्मेण खेदारतिमता प्रादेशिकेन दाहेन वर्तत इति सोषम् । [पितानिलजे व्यङ्गेऽकफरक्तयोरुद्रेककथनमयुक्तमिति चेन्न ब्रूमः । आश्रयिभावनतोऽपि ह्याश्रयदोषाश्रयाद्रुधिरम् । व्यङ्गे निलपित्तकृतेऽप्याद्याधिक्येन दर्शये द्रूपम्। इत्यादि वचनात्तदपि युक्तमेव ॥]

**वायुनोदीरितः श्लेष्मात्वचं प्राप्यविशुष्यति ।**
**ततस्त्वग्जायते पाण्डुः क्रमेण च विचेतना ॥**
**अल्पकण्डूरविक्लेदा सा प्रसुप्तिः प्रसुप्तितः ।**

वायुना उदीरितः स्थानात् क्षिप्तः श्लेष्मात्वचं प्राप्य वायुनैव शुष्यति । ततस्त्वक् पाण्डुत्वादिगुणा जायते सम्पद्यते । सा प्रसुप्तितः अचैतन्याद्धेतोः प्रसुप्तिरित्युच्यते । [ततस्तस्माद्धेतोः त्वकपाण्डुः पाण्डरवर्णाक्रमेण विचेतना च भवति । यदायदापवनोदीरितेन त्वग्गतेन शुष्केण श्लेष्मणात्वक्पूर्यते तदातदा निरवकाशतया तत्र रक्तादिवहनाभावाच्चेतनाहानिः स्यादिति क्रमार्थः । त्वचश्चेतना स्पर्शविज्ञानं तेन हीनाविचेतना ॥]

**असम्यग्वमनोदीर्ण पित्तश्लेष्मान्न निग्रहैः ।**
**मण्डलान्यति कण्डूनि रागवन्ति बहूनि च ॥**
**उत्कोठः सोनुबन्धस्तु कोठ इत्यभिधीयते ।**

असम्यग्वमनेनोदीर्णयोः पित्तश्लेष्मणोरन्नस्य च निग्रहेण वेगधारणेन देहेऽति कण्डुत्वादियुक्तानि मण्डलानि भवन्ति । एष च रोग उत्कोठ इत्यभिधीयते । स एवानुबन्धः

सन् कोठ संज्ञां लभते । [अल्पवीर्येणाल्पमात्रेण वा वमनद्रव्येण कृतं वमनमसम्यग्वमनं तेनान्तः सञ्चलद्यनिर्हर्तुमसमर्थतया उन्मुखीकरणमुदीर्णता । पित्तश्लेष्मणोर्निग्रहः पुनर्वमनविरेचनाभावः । अन्ननिग्रह उपवासः । स एवोत्कोठो ज्वराद्यनुबन्धयुक्तश्चेत् कोठः । मण्डलानामेवान्योन्यानुबन्ध इति केचित् ॥]

**प्रोक्ताः षड्त्रिंशदित्येते क्षुद्ररोगा विभागशः।**
**यान्विज्ञायनसम्मुह्येच्चिकित्सायां चिकित्सकः**

॥ इत्युत्तरे षड्त्रिंशोध्यायः ॥

इत्यनन्तरोक्तप्रकारेण एते अजगल्लिका, यवप्रख्याऽ, ऽन्त्रालजी, कच्छपी, पनसिका, पाषाणगर्दभ, मुखदूषिका, पद्मकण्टक, विवृता, मसूरिका, विस्फोट, विद्धा, गर्दभी, मण्डला, कक्ष्या, गन्धनामा, राजिका, जालगर्दभाऽ,ऽग्निरोहिणीऽ, रिगाल्लिका, विदारी, शर्करार्बुद, वल्मीक, कदर, रुद्धगुद, चिल्प, कुनखाऽऽ, लस, तिलकालक, मश, चर्मकील, जतुमणि, लाञ्छने, व्यङ्ग, प्रसुप्त्यु, त्कोठाख्याः षड्त्रिंशत्क्षुद्ररोगा विभागश उक्ताः । यान् विज्ञाय भिषक् चिकित्सायां न सम्मुह्येदिति ।

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्याया-
मुत्तरे षड्त्रिंशोध्यायः ॥

# सप्तत्रिंशोऽध्यायः ॥

## क्षुद्ररोगप्रतिषेधम् ।

उक्तक्रमेणैव क्षुद्ररोगाणां चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ॥

**अथातः क्षुद्ररोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥**

(क्षुद्ररोगाणामजगल्लिकादीनां प्रतिषेधश्चिकित्सास्मिन्नुच्यत इति क्षुद्ररोगप्रतिषेधः । शेषं पूर्ववत् ॥)

**अजगल्लिकामपक्वां जलौकोभिर्ग्राहयेत् ।**
**यवक्षारशुक्तिसौराष्ट्रीकल्कैश्चलेपयेत् ॥**

अपक्वायामजगल्लिकायां जलौकसो यवक्षारादिभिश्च लेपः ॥

**यवप्रख्यादीन् पाषाणगर्दभान्तान् स्वेदयित्वा सुरदारुकुष्ठमनशिलालैर्लेपयेत् ॥**

यवप्रख्यादीनां पञ्चानां प्रकरणादपक्वानां यथार्हः स्वेदः । सुरदार्वादिभिश्च लेपः । (यवप्रख्यादीनां भिन्नरूपत्वेपि कफवातजत्वसाम्येन कारणैक्यात् ग्रथनसाम्येन विलायनीयत्वाच्च क्रियैकत्वकथनम् ॥)

**पक्वांस्तु सहाजगल्लिकया व्रणवदुपाचरेत् ॥**

पक्वांस्तु यवप्रख्यादीन् सहाजगल्लिकये-

त्य जगल्लिकामपि पक्वामेवं षड्व्रणप्रतिषेधोक्तचिकित्सयोपचरेत् ॥

**मुखदूषिकां लोध्रतुवरिकाभ्यां वा प्रदिह्यात् । वटपत्रनाळिकेरशुक्तिभ्यां वा सैन्धववचाक्षिभेषजसिद्धार्थकैर्वा । एवमशान्तौ छर्दयेत् । ललाटे च सिरां विध्येत् ॥**

मुखदूषिकासु लोध्रं तु वरिकाभ्यां वा लेपो वटपत्रनाळिकेरफलशुक्तिभ्यां वा सैन्धवादिभिर्वा । लोध्रमक्षिभेषजम् । तुवरिका आढकी । एवं लेपे नाशान्तौ छर्दनं सिराव्यधश्च ॥

**पद्मकण्टकेषु निम्बाम्बुवान्तं निम्बोदकसिद्धं सर्पिः सक्षौद्रं पाययेत् । निम्बारग्वधकषायेणचोद्वर्तनम् ॥**

पद्मकण्टकेषु निम्बक्वाथेन वमनं ततो निम्बक्वाथसिद्धस्य सर्पिषः पानं निम्बारग्वधयोः कषायेण चूर्णेनोद्वर्तनं च । [निम्बस्यत्वगारग्वधस्यमूलत्वक् च ॥ ]

[कारणानां पित्ताद्विनाऽभावाद्रोगाणां प्रायेण स्वरूपसाम्याच्च विवृतादीरिगल्लिकान्तानां क्रियामेकीकृत्याह ॥ ]

**विवृतादीन् जालगर्दभान्ता निरिगाल्लिकां च पित्तविसर्पवच्चिकित्सेत् ॥**

विवृतादी निरिगाल्लिकां च चिकित्सितोक्त पित्तविसर्पवत् चिकित्सेत् । [विवृतादीन् विवृता मसूरिका विस्फोटविद्धा गर्दभीकक्ष्यागन्धनामराजिकाजालगर्दभा निरिगल्लिकां चेति दशक्षुद्ररोगान् पित्तविसर्पवत् पित्तविसर्प इव कमलोत्पलादिप्रलेपादिना चिकित्सेत् अन्ये तु पित्तविसर्पवदित्यस्यार्थमेवमाहुः पित्तवद्विसर्पवच्च शास्त्रान्तरेषु क्रियाविशेषदर्शनात् केषां चित् पित्तहरं केषां चिद्विसर्पहरमिति । अनेन विसर्पेषु सामान्येनोक्ता लङ्घनरूक्षणरक्तावसेकवमनविरेचनादिकाः क्रियाद्योत्यन्ते । उक्तं च । मसूरिकाग्ररूपेषु लङ्घनं वमनं ततः यष्टीमधुकनिम्बत्वगम्बुभिः सितयानुच विरेचनं त्रिवृच्चूर्णयुक्तया वाऽविपत्तिना । अन्ये मसूरिकायां कफविसर्पकुष्ठहरं प्रलेपादिक्रियाविधिमुपदिशन्ति विस्फोटचिकित्सां च । विस्फोटेषु च सर्वेषु लङ्घनं पूर्वमाचरेत् । न रसेन विना केपि विस्फोटाः सम्भवन्ति हि । इति । मसूरिकाविस्फोटयोर्विंशतिदिनात् पूर्वं स्नानाभाव उक्तः पूज्यवाभ्यज्य च स्नाया त्रिंशतेर्दिवसात् परम् । प्राप्ते स्नानदिनेऽगारं मुञ्चेयुर्गेहवासिनः । अन्यथा तान् विशेत् प्रायो मसूरीत्याह काश्यपः । इति । अष्टविधाया मसूरिकायाश्चिकित्सा समानतन्त्रादवगन्तव्या ॥ ]

**विशेषतोराजिकामपाकशर्करामूर्वाकण्टकशर्कराभिः क्षीरपिष्टाभिर्लेपयेत् । अभीक्ष्णं च मृजाशीलनम् । जालगर्दभे धात्रीफलान्युपयुञ्जीत ॥**

विशेषत इत्यादिना राजिकायाः साधनसमुच्चयः । अपाकशर्करादिभिः क्षीरपिष्टैर्लेपः - अपाकशर्करा कुम्भकारचुल्ली दग्धशर्करा । कण्टशर्कराङ्गणमृत् । अभीक्ष्णमत्यर्थं मृजाशीलनं

संशोधनसेवा । जालगर्दभे धात्रीफलान्यामलकान्युपयुञ्जीत विशेषत इत्यर्थात् ॥

**अग्निरोहिणीमपि प्रत्याख्याय पित्तविसर्पवदुपाचरेत् । पक्वां तु मधुरवर्गसिद्धेन सर्पिषा रोपयेत् ॥**

अग्निरोहिणीमपीत्यसाध्यत्वाङ्गीकरणे । प्रत्याख्यायनसिध्यतीत्युक्त्वा । (प्रत्याख्याय-निराकरणं कृत्वा। साध्येत वा नवेत्युक्त्वेत्यर्थः। ) पक्वामित्यग्निरोहिणीम् ॥

**विदारिकां जलवासिनीभिर्ग्राहयित्वा विल्वमूलनगवृत्तिकवर्षाभ्वजकर्णपलाशकल्केन प्रलिम्पेत् । अनुपशाम्यन्तीं त्वभ्यज्य स्वेदयित्वा विम्लापयेत् । पक्वां शस्त्रेण विदार्यनिम्बतिलपटोलकल्केन प्रच्छाद्य बध्नीयात् । क्षीरिवृक्षकदरखदिरकषायो व्रणप्रक्षाळनम् । शुद्धां मधुरकषायसंस्कृतेन तैलेन रोपयेत् ॥**

विदारिकायां पूर्वं जलौकसः ततो विल्वमूलादिपलाशान्तकल्केन प्रलेपः । नगवृत्तिकः सुबोधः । पलाशं पत्रम् । विम्लापनं मर्दनेन विलायनम । पक्वामिति तामेव विदारिकाम । शुद्धामिति तामेव । (नगवृत्तिकवर्षाभूविल्वमूलैरिति सुश्रत पाठः । नगवृत्तिकः जिंगाणम् । गुडगनिकेति लोके । वृश्चिकाळीत्यन्ये । अजकर्णः सर्जः । पालाशः शठो । इति श्रीडल्लणकृते निबन्धसंग्रहे ॥)

**शर्करार्बुदं मेदोर्बुदवदुपाचरेत् ॥**

शर्करार्बुदे ग्रन्थ्याद्युक्तमेदोर्बुदवच्चिकित्सा ॥

(वल्मीकस्य देशभेदरूपजानितमसाध्यत्वं दर्शयति ॥)

**वल्मीकं हस्तस्य पादस्य चोपरिष्टान्मर्मणि वा जातं प्रवृद्धमतिबहुच्छिद्रावृतं सशोफं च वर्जयेत् ॥**

हस्तस्येत्याद्यसाध्यवल्मीकस्य लिङ्गम् ॥

**अतोन्यथा तु प्राक् कृतशुद्धेः शोणितमपहरेत् । सक्तुपललवणगुळूच्यारेवतश्यामादन्तीकुलत्थिकामूलैर्लेपयेत् ॥**

अतो साध्यलक्षणादन्यथा वैपरीत्ये वल्मीकवतः प्राक्पूर्वं कृतसंशुद्धेर्विहितवमनविरेकस्य शोणितं यथोपपत्त्यवसेचयेत् । ततः सक्त्वादिभिरारेवतादिमूलयुक्तैर्लेपयेत् । आरेवतः कर्णिकारः । श्यामा त्रिवृत् । दन्ती नागदन्ती । कुलत्थिका द्वितीया त्रिवृत् ॥

**पक्वे तु सर्वां गतिं दुष्टमांसानि च शस्त्रेण सम्यक्शोधयित्वाग्निना क्षारेण वा दहेत् ।**

पक्वेत्विति वल्मीके । सर्वाङ्गतिमशेषां नाडीम् । सुबोधम् । (पक्वे प्राप्तपाके तुर्विशेषे अनन्तरोक्तादुपक्रमादस्य शस्त्रसुखसाध्यत्वं विशेषः । शस्त्रेण मण्डलाग्रादिना सर्वामशेषां गतीं नाडीं दुष्टमांसानि च सम्यक् शस्त्रकर्मोक्तविधानेनामूलतः शोधयित्वा छित्वेत्यर्थः । अ-

ग्निना क्षारेण वा दहेत । वा शब्द अग्निक्षार योर्विकल्पार्थः । उन्नतमग्निना अन्नतं क्षारेण च दहेदिति भावः ।।)

**सुशुद्धे तु व्रणे भल्लातकमनःशिलालैलाकालानुसार्यगरुचन्दनैर्निम्बतैलं रोपणार्थं श्रपयेत् ॥**

शुद्धे च वल्मीकव्रणे निम्बतैलं भल्लातकादिभी रोपणार्थं श्रपयेत् । कालानुसारीतगरम् ॥

**कदरं शस्त्रेणोत्कृत्य स्नेहेन दहेत् ॥**

कदराख्ये सुबोधम् । स्नेहेन दाहयोग्येन । (कदराख्यं क्षुद्ररोगं शस्त्रेण वृद्धिपत्रादिना उत्कृत्य छित्वा स्नेहेन अग्निसन्तापाद्दाहयोग्येन पादतलमुन्नाम्य तस्य व्रणस्य परितो माषकल्केन दृढां पाळीं कृत्वा स्नेहेन तां पूरयित्वा दहेत् ।।)

**रुद्धगुदे निरुद्धमणिवच्चिकित्सा ॥**

निरुद्धमणिर्गुह्यरोगे वक्ष्यते तदुक्ता चिकित्सारुद्धगुदे । (रुद्धगुदाख्ये क्षुद्ररोगे गुह्यरोगप्रतिषेधे वक्ष्यमाणनिरुद्धमणिक्रियावत् चिकित्सितं कार्यम् । पुनः पुनः स्थूलतरस्नेहाक्तजातुषनाडीविन्यासानिलापहस्नेहपरिषेकादिभिर्गुदस्रोतः क्रमेण वर्धयेदित्यर्थः ।।)

**चिप्पं शोणितावसेकसंशोधनैरुपाचरेत् । व्यपगतोष्माणश्चैनमुष्णाम्बुना परिषिच्य यथायोगं शस्त्रेण परिकर्त्यापनयेत् ॥**

चिप्पे सुबोधम् । परिकर्त्योपकर्षे । (एनं चिप्पाख्यं रोगं दुष्टरक्तमोक्षणेन ऊष्मा पित्तादतेनास्तीत्युक्तत्वात्तन्निर्हरणपरमौषधेन विरेचनाख्येन संशोधनेन च व्यपगतोष्माणं जितोष्माणं कृत्वानन्तरमुष्णोदकेन परिषिच्य शस्त्रेण यथायोगं परिकर्त्य परितो नखशस्त्राग्रेण मांसाद्विश्लेष्य षडगुलेन सन्दंशेनामूलतो दृढं गृहीत्वा सम्यगुत्पाट्यापनयेत् ।।)

**ततो रसाञ्जनरोचनानेपाळीतेजोह्वाकल्कैरम्लपिष्टैः शोधयित्वा कालेयकागरुहरिद्रारसाञ्जनसिद्धेन तैलेन रोपयेत् । मधुरकषायसिद्धेन वा । अल्पावशिष्टं च सर्जरस चूर्णेन पूरयेत् ॥**

ततोनन्तरं रसाञ्जनादिभिः शोधनो लेपः । नेपाळी मनःशिला । कालेयकादिसिद्धं तैलं रोपणम् । कालेयकं पीतचन्दनम् । मधुरद्रव्यसिद्धेन वा तैलेन रोपयेदिति सम्बन्धः । अल्पावशिष्टं रूढप्रायम् । (तन्त्रान्तरे चोक्तम् । चिप्पं शोणितसेकेन शोधनैश्चाप्युपाचरेत् । गतोष्माणं तथा चैनमुष्णोदपरिषेचितम् । शस्त्रेण तु यथायोगमुत्कृत्य स्रावयेद्व्रणम् । शिला तेजोवती चैव रोचना च रसाञ्जनम् । कल्कैरेतैश्च सम्पिष्टैः शोधयित्वा व्रणं ततः । हरिद्रागुरुकालीयकल्कैश्च सरसाञ्जनैः । सिद्धेन तिलतैलेन ततः कुर्वीतरोपणमिति । कालीयकं कृष्णचन्दनम् ।।)

**कुनखमपि मदुष्टमेवमेवोपक्रमेत् ॥**

कुनखमपीति चिप्पचिकित्सितसमुच्चये ।

( प्रदुष्टमभिघातादिनान्तर्मांसविश्लेषोच्चालितदुष्टास्रसंश्लेषात् कुत्सितत्वमागतं नखमप्येवमेव चिप्पवदेव नखोत्पाटनादिकेन शस्त्रकर्मणोपक्रमेत् चिकित्सेत् ॥ )

अलसेत्वम्लकाञ्जिकावसिक्तौ चरणौ निम्बतिलपटोलीकासीसरोचनाकल्केना लेपयेत् । निदिग्धिकारससिद्धेन सर्षपतैलेनाभ्यज्य रोचनाकासीसमनःशिलाचूर्णैः प्रतिसारयेत् ॥

अलस इत्यादि सुबोधम् । (अलसाख्ये क्षुद्ररोगे तु अम्लेन काञ्जिकेन धान्याम्लेनावसिक्तौ परिषिक्तौ चरणौ निम्बादिकल्केना लेपयेत् । कासीसं तुत्थम् । प्रतिसारणं घर्षणम् ॥)

तिलकाळकान् मशांश्च सूर्यकान्तेनाग्निना वा दहेत् क्षारेण वा । चर्मकीलं जतूमणिं च तद्वच्छस्त्रेणोत्कृत्य ॥

तिलकालकादिषु सूर्यकान्तव्यवहितैः सूर्यरश्मिभिर्दाहोऽग्निना वा क्षारेण वा । (तिलकाळकाख्यान् मशाख्यांश्च रोगान् अर्ककिरणसन्तप्तेन सूर्यकान्तेनाग्निना वा तयोस्त्वङ्मांसाश्रयतया पद्मपत्रतनुना मृदुक्षारलेपेन वा दहेत्।) चर्मकीलं जतूमणिं च तद्वदिति सूर्यकान्तादिना दहेदिति सम्बन्धः । न तु प्रथममेवापितु शस्त्रेणोत्कृत्य । (चर्मकीलाख्यं जतूमणिसंज्ञितं च । जतूमणिरित्य प्राणिजातेर्वारज्वादेरित्यूङ् । शस्त्रेण वृद्धिपत्रादिना उत्कृत्य मूलतश्छित्वा तद्वत् सूर्यकान्ताद्यन्यतमेन दहेत्।।)

लाञ्छनादित्रयाणामपि रक्तदोषजत्वसाम्याच्चिकित्सामेकीकृत्याह ॥

लाञ्छनव्यङ्गनीलिकासु यथासन्नां सिरां विध्येत् । क्षीरिवृक्षवल्ककल्कैश्च क्षीरपिष्टैर्लेपयेत् । बलातिबलामधुकहरिद्राभिर्वा । मधुकागरुपयस्याकालीयकैर्वा । तरुणकपित्थतिन्दुकरजनीभिर्वा । अम्लिकामूलेन वा। सूकरदंष्ट्रया वा मधुघृतयुक्तया ॥

लाञ्छनादित्रये आसन्नाया अप्रतिषिद्धायाः सिराया व्यथनम् । पञ्चलेपयोगाः सुबोधाः । पयस्या क्षीरिका । कालीयकं कृष्णचन्दनम । तरुणकपित्थोऽजीर्णकपित्थतरुः । अम्लिका चुक्रिका तस्या मूलम् । इति लाञ्छनादित्रय साधारणम । [पूर्वोक्तं व्यङ्गनीलिकयोरपृथक्त्वं तु सम्ख्यानां षट्त्रिंशत्त्वापादनायैव । अत्र नीलिकाग्रहणं स्थानभेदजनितसंज्ञान्तरतया चिकित्सान्तरभ्रान्तिपरिहारार्थम् । ]

(लाञ्छनादित्रयस्य सामान्यचिकित्सामुक्त्वा तेषु व्यङ्गस्य विशेषचिकित्सामाह ॥ )

विशेषेण व्यङ्गेष्वसृक्स्रावपूर्वमर्जुनपरिपोटैर्लेपः । क्षौद्रेण वा पिष्टा मञ्जिष्ठा । अजाक्षीरेणवार्द्रदाडिमत्वक् । तेनैव वा बालामलकं गोमूत्रेण सप्ताहं स्थितम् । दधिमण्डेन वा कालेयकलोध्रोत्पलाकिञ्जल्कम् । नवनीतेन वा श्वेताश्वखुरजमषी ॥

विशेषतस्तु व्यङ्गेषु रक्तस्रावं कृत्वा अर्जुनतरोः परिपोटैः स्वयं जीर्णत्वग्भिर्लेपः । सु-

बोधम । मञ्जिष्ठाक्षौद्रेण । आर्द्रडाडिमत्वगजाक्षीरेण । बालामलकं तेनैवाजाक्षीरेण । किम्भूतमामलकमाह । गोमूत्रेण सप्ताहं स्थितम । कालेयकादिकं दधिमण्डेन । कालेयकं पीतचन्दनम् । श्वेताश्वखुरजक्षारो नवनीतेन । (श्वेता श्वेतवचा । अश्वखुरः कृष्णशंखपुष्पी । (नि) गिरिकर्ण्यपरा नीला वाजिखुरा व्यक्तगन्धकुसुमा च । अश्वखुरा तुरगखुरप्रतिमास्याच्छंखिनीकृष्णा । श्लक्ष्णपिष्टाश्वखुरप्रलिप्तसंशुष्कतान्तवक्तताज्यसिक्तप्रज्वलितवर्युद्भवयामध्या लेपः। न तु शंखपुष्पीमेव दग्ध्वोत्पन्नया । अश्वखुरेण कृतामषीति वा । ) इति सामान्येन व्यङ्गेषु ॥

तत्रेत्यादिना व्यङ्गेषु वातादिविशेषेणाह ॥

तत्रापि वातजेषु देवदारुदुरालभाबृहतीमञ्जिष्ठामूर्वापामार्गत्रायन्तीत्रायमाणा शुकनसाबलाविदारीयवबदरकुलत्थबिल्वोत्पलशतावरीदर्भमूलक्वाथे शृङ्गीविडङ्गगर्भं घृतं विपक्वमधोभक्तं पानमभ्यङ्गं नावनं च सायं योजयेत् ॥

तत्रापि तेष्वपि वातजेषु व्यङ्गेषु देवदार्वादिक्वाथे शृङ्गीविडङ्गं गर्भं दत्वा विपक्वं घृतमधोभक्तं भोजनादूर्ध्वं पाने योजयेत् तदेवाभ्यङ्गे नावने च सायं योजयेत् ॥

प्रलेपं च न्यग्रोधदेवदारुहरीतकीपूतीकरञ्जमदनफलचूर्णैर्घृतयुक्तैः । बदरमज्जाकोद्रवलाजचूर्णेन वा सघृतेन । श्वेतचमरास्थि तालपत्रीस्तन्यमधुघृतैर्वा ॥

न्यग्रोधादीनां चूर्णैर्घृतयुक्तैः प्रलेपं च योजयेत् । बदरमज्जादिचूर्णेन वा सघृतेन । श्वेतचमरास्थ्यादिभिर्वा । चमरोनाम मृगः तस्य श्वेतवर्णस्यास्थि । तालपत्री मौसली ॥

पैत्तेषु बलामधुकमागधिकाक्षीरकाकोलीस्वगुप्ताफलकाकमाचीतुकाह्वाभिः सपयः सर्पिः सिद्धं पूर्ववत् प्रयोजयेत् ॥

पित्तव्यङ्गेषु बलादिभिः सक्षीरं सिद्धं सर्पिः पूर्ववदित्यधोभक्तमभ्यङ्गे नावने च सायं योजयेत् ॥

मृद्वीकाश्वेतपाकीखर्जूरपरूषकसौवीरबदरद्धिमेदापुनर्नवकशेरुकाप्रवाळविद्रुममृणाळैर्वा सक्षीरैः ॥

सक्षीरैर्मृद्वीकादिभिर्विपक्वं सर्पिर्वा पूर्ववत् प्रयोजयेत् ॥

उपस्निग्धंचैनमिक्षुरसेनोभयतो विरेचयेत् ॥

एवं च सर्पिः प्रयोगेणोपस्निग्धमेनमिक्षुरसेन कल्पोक्तविधिनोभयत ऊर्ध्वमधश्च विरेचयेत् ॥

कृतरुधिरावसेचनानेतांश्च व्यङ्गान् मधुकशारिवा बलाचन्दनलोध्रोत्पलैर्घृतयुक्तैरालेपयेत । प्रपौण्डरीकमधुकपद्मकनीलोत्पलशारिबाकदळीमूलप्रवाळसुवर्णगैरिकैर्वा । शीतमधुरमन्नपानं प्रवातमहः स्वप्नंसौमनस्यं च सेवेत ॥

एतांश्च पित्तव्यङ्गान् रुधिरं स्रावयित्वा मधुकादिभिर्घृतयुक्तैरालेपयेत् । प्रपौण्डरीकादिभिर्वा घृतयुक्तैः । प्रवालं विद्रुमम् । शीतमधुरान्नपानादिकं च सेवेत ॥

कफजेषु दशमूलदेवदारुहरीतकीश्वदंष्ट्रामलकीकाथे मुस्तकुष्ठहरिद्रामरतरुकल्कैस्तद्वत् साधितं सर्पि तद्वदेवोपयुञ्जीत ॥

कफजेषु व्यङ्गेषु दशमूलादिकाथे मुस्तादिकल्कैस्तद्वदिति सक्षीरं साधितं सर्पिस्तद्वदेवेत्यधोभक्तं पाने नावनाभ्यञ्जनयोः सायं च प्रयोजयेत् ॥

तुत्थरोचना लोध्रप्रियंगुकालेयकैः स मधुघृतैर्लेपः । देवदारुसरळबलाशिग्रुमूलैर्वा । मनश्शिलातुत्थरसाञ्जनैर्वा । मृदुना वा क्षारेण दशमात्राः प्रलेपः ॥

तुत्थदेवदारुमनश्शिलादिभिर्लेपत्रयं सुबोधम् । अथवा मृदुना क्षारेण सूत्रोक्तेन दशमात्राः प्रलेपः । मात्रा कालविशेषः । तस्या लक्षणं यावत् पर्येति हस्ताग्रं दक्षिणं जानुमण्डलं निमेषोन्मेषकालेन समं मात्रा तु सा स्मृता इति ॥

रक्तजेषु क्षीरसर्पि स्निग्धस्य सिरां विस्रावयेत् । वमनविरेचने च पित्तवत् कुर्यात् । आलेपश्चास्य चन्दनमधुककल्केन घृतवता । सर्जरसनीलोत्पलशङ्खवेतस कदळीमूलमूर्वा मधुककल्केन वा ॥

रक्तजेषु व्यङ्गेषु क्षीरोद्भवेन सर्पिषा स्निग्धस्य सिरां विस्रावयेत् । सुबोधम् । पित्तवदिति पित्तव्यङ्गवदित्युपदेशेनेत्यर्थः । चन्दनसर्जरसादिभिरालेपद्वयं सुबोधम् । इति व्यङ्गानि ॥

प्रसुप्तौ वातकुष्ठोक्तक्रमोऽन्तेचाग्निना दाहः ॥

प्रसुप्त्याख्ये सुबोधम् । अन्ते च वातकुष्ठचिकित्सया शान्त्यप्राप्तावग्निना दाहः ॥

उत्कोठे पित्तश्लेष्महरो विधिः सक्षारलवणं च तैलमभ्यङ्गः । कोठे कुष्ठचिकित्सितमीक्षेत ॥

॥ इति सप्तत्रिंशोऽध्यायः ॥

उत्कोठाख्ये सर्वो विधिः पित्तश्लेष्मघ्नः । यवक्षारसैन्धवयुक्तं तैलमभ्यङ्गश्च । कोठे कुष्ठचिकित्सा । [शास्त्रान्तरेषु क्षुद्रत्वसाम्यात्तदनन्तरोक्ता पादप्रभेदकण्टकवेधपाददाहपार्ष्णिव्यथा देहस्फुटनातिस्वेददेहदौर्गन्ध्यवैद्युतानलदाहादिक्रियाप्यत्र दिङ्मात्रावबोधनार्थं किञ्चिल्लिख्यते ॥

क्षयंगते श्लेष्मणि पादलग्ने
सञ्चारिणां देहभृतामजस्रम् ।
वातः सपित्तोऽग्निलेपुदुष्टो
भेदान् करोत्यप्रतिकारनिघ्नान् ॥

वटांकुरारुष्करासिक्थचूत-
निर्यासिसिन्धूद्भवमर्कदुग्धम् ।
एभिर्महिष्यास्तुघृतं विपक्वं
पादप्रभेदं विनिहन्ति सद्यः ॥

अर्कविस्नुहिदुग्धं सिक्थं पटुतैलसंयुतं पिष्टम् ।
पादविलिप्तं सद्यः करोति कमलोपमं चरणम् ॥
स्नुह्यर्कदुग्धसैन्धवहयखुरचूर्णं सनवनीतम् ।

न्यस्तंतुम्बफले तत्प्रदारिकां लेपनाद्धन्यात् ॥
पाददार्यां सिरां विध्वा स्निग्धस्विन्ने पदे पुनः ।
वसाघृतमधूच्छिष्टमज्जाक्षारैः प्रलेपयेत् ॥
स्नुह्यर्कच्छागपयो लवणमधूच्छिष्टचूतनिर्यासम् ।
माहिषनवनीतयुतं विपादिकां हन्त्यलाबुस्थम् ॥
अतिपक्वशुष्ककेतकरलभासितं घृतपटूपेतम् ।
कंसनिघृष्टं लेपात् करोति कमलोपमं चरणम् ॥

नश्यति तथा विपादी
पुष्यलता नीलिमूलश्रृततैलात् ।
कार्पासभुजगवल्ली
पटुतिलजै र्नश्यते विशेषेण ॥

सर्जघृतं तुल्यगुडं
पिष्ट्वाष्टांशार्कदुग्धेन ।
प्रतिलेपात् पादतले
नश्यति नियतं विपादिका सहसा ॥

शुक्तिकाभस्म सिन्धूत्थं सर्पिः सर्जरसं पयः ।
पादयोः स्फुटने लेप स्तिक्तालाबुव्यवस्थितः ॥
सक्षीरं स्नुहिकाण्डं सान्तर्धूमं सुवर्चलाविळवत् ।
दग्धं छागघृतयुतं तुम्बस्थं हन्ति परिलेपात् ॥
पूरितोपरिसिक्थेन वह्निना तापिता भृशम् ।
असाध्यापि व्रजत्यस्तं क्षिप्रमेव विपादिका ॥

करञ्जबीजं रजनी कटुत्रयं
समानभागं लवणस्य मृत्तिकाम् ।
दग्ध्वा समालोड्य घतेन लिम्बेत्
पादौ विनश्येत विपादिका ध्रुवम् ॥

॥ कण्टकवेधस्य ॥

पादयोःकण्टके विद्धे रविदुग्धेन पूरयेत् ।
उद्धृतेऽनुद्धृते चापि पतति स्वयमेव तत् ॥

सैन्धवं तत्र संस्थाप्य दहेल्लोहशलाकया ।
कुमार्याः कोष्णपत्रेण बन्धनं चात्र कारयेत् ॥
लवणोदकसेकं वा सन्धानौदनबन्धनम् ।
तण्डुलीयकमूलाढ्यं लवणं सपुनर्नवम् ॥
वायसीं वा पटुयुतां चिञ्चीं वा स्नेहसंयुताम् ।
चिञ्चाकरञ्जपत्रं वा घृतकाञ्चिकसंयुतम् ॥
भृष्टं प्रबन्धनं कुर्यात् पायसं कोरदूषकैः ।
व्रणक्रियां च कुर्वीत पक्वे दुष्टं पुनर्दहेत् ॥

॥ पाददाहस्य ॥

शतावरीमूलरसात् फेनेन परिलेपितौ ।
परितापाद्विमुच्येते चरणौ क्षिप्रमेव तु ॥
मसूरविदलैः पिष्टैः भृशशीतेन वारिणा ।
चरणौ लेपयेत् सम्यक् पादादाहप्रशान्तये ॥
नवनीतेनसंलिप्तौ वह्निना परितापितौ ।
मुच्येते चरणौ क्षिप्रं परितापात् सुदारुणात् ॥
घृताक्तैःसक्तुभिःश्लक्ष्णैरजाक्षीरसमन्वितैः ।
लेपयेच्चरणौ सद्यःपरितापविमुक्तये ॥
लिम्पेत्सेव्यजलारिष्टैः शतधौतघृतेन वा ।
पाददाहेषु चरणौ सेकं काञ्चिकसर्पिषा ॥
कुमारीरससेको वा जलौकोभि र्हरेदसृक् ॥

॥ पार्ष्णिव्यथायाः ॥

लिप्ता सर्षपकल्केन स्वेदिता चाश्मना भृशम् ।
पादपार्ष्णिव्यथा तीव्रा पक्षार्द्धेन विनश्यति ॥

॥ देहस्फुटनस्य ॥

अगस्तिपुष्पचूर्णेन माहिषं श्रपयेत्पयः ।
तदुत्थनवनीताक्तो देहस्य स्फुटनं जयेत् ॥

॥ अतिस्वेदस्य ॥

हरीतकीं तु सम्पिष्य गात्रमुद्वर्तयेन्नरः ।

पश्चात् स्नानं प्रकुर्वीत देहस्वेदोपशान्तये ॥

॥ देहदौर्गन्ध्यस्य ॥

गोमूत्रेण समालोड्य माहिषं शकृदुत्तमम् ।
तेनैव लेपनं कुर्याद्देहदौर्गन्ध्यनाशनम् ॥

शिरीषलामज्जकहेमलोध्रै-
स्त्वग्भेदसंस्वेदहरः प्रघर्षः ।
पत्राम्बुलोहै रथ चन्दनाभ्यां
शरीरदौर्गन्ध्यहरः प्रलेपः ॥

तिन्त्रिणीस्वरसे तैलप्रस्थं सम्यक्पचेद्भिषक् ।
अत्र कल्कार्थमेतानि वातघ्नानि च योजयेत् ॥
शिग्रुसैन्धवदुर्गन्धा लशुनं च सचित्रिकम् ।
एतच्छरीरदौर्गन्ध्यकण्डूतिस्वेदनाशनम् ॥
तिन्त्रिणीकदलोद्भूतं स्वरसं लेपयेन्नरः ।
बहुशो देहवैगन्ध्यकण्डूकोठविनाशनम् ॥
क्षौद्रेण पौष्करं रेणु मेकविंशति वासरान् ।
लिहतां देहदौर्गन्ध्यं नश्येन्निश्शेषमङ्गिनाम् ॥
द्विनिशातिलरुमाजीकल्कोद्वर्तितविग्रहः ।
यःस्नाति तस्य देहःस्यात् सुगन्धिर्भास्करच्छविः ॥

॥ वैद्युतानलदाहस्य ॥

वैद्युतानलदग्धस्य लेपसेकादियोजयेत् ।
सतैल मम्ललवणप्रायं तापं च वह्निना ॥
तुल्यदग्धवदाहारं मधुरस्निग्धशीतलम् ।
सेकं च संज्ञायुक्तस्य कुर्वीतेऽन्द्रियवेदिनः ॥
आग्नेयैरौषधैर्लेपं सेक मिक्षुतुषोदकैः ।
सर्पिस्निग्धैरम्लयुक्तै र्वसातैलघृतैरपि ॥
इत्यादिकं शास्त्रान्तरादवगन्तव्यम् ॥ ]

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्याया-
मुत्तरे सप्तत्रिंशोऽध्यायः ॥

# अष्टत्रिंशोऽध्यायः ॥

## गुह्यरोगविज्ञानीयम् ।

व्रणशस्त्रप्रसङ्गेन क्षतप्रायत्वात् गुह्यरोगाणां हेत्वादिकं प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो गुह्यरोगविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति यः ॥

गुह्यशब्देनोपस्थो भण्यते ॥

स्त्रीव्यवायनिवृत्तस्येत्यादिना पुंगुह्यरोगाणां हेतुरुच्यते ॥

स्त्रीव्यवायनिवृत्तस्य सहसा भजतोथवा ।
दोषाध्युषितसङ्कीर्णमलिनाणुरजःपथाम् ॥
अन्ययोनि मनिच्छन्ती मगम्यां नवसूतिकाम् ।
दूषितं स्पृशतस्तोयं रतान्तेष्वपि नैव वा ॥
विवर्धयिषया तीक्ष्णान् प्रलेपादीन् प्रयच्छतः ।
मुष्टिदन्तनखोत्पीडाविषवच्छूकपातनैः ॥
वेगनिग्रहदीर्घातिखरशष्पविघट्टनैः ।
दोषा दुष्टा गता गुह्यं त्रयोविंशतिमामयान् ॥
जनयन्त्युपदंशादीन्–

स्त्रीव्यवायनिवृत्तत्वादियुक्तस्य पुरुषस्य तत एव हेतो र्गुह्यं गता वातादयो दुष्टा स्त्रयोविंशतिमुपदंशादीनामयान् व्याधीन् जनयन्ति । स्त्रीव्यवायो मैथुनं अतः सहसा यो निवृत्तः सेवते स्त्रियं तस्य । सहसा निवृत्तिः सहसा सेवनं च दोषकोपहेतुः । अथवा दोषाध्युषितत्वादिगुणरजःपथा मन्ययोन्यादिकां वा स्त्रियं

भजतः । दोषैर्वातादिभि रध्युषितमधिष्ठितं सङ्कीर्णं च मलिनं चाणु च रजःपथं योनिद्वारं यस्यास्ताम् । सङ्कीर्णं केनचित् बीभत्सेन मिश्रितम् । मलिनं शौचाद्यभावेन मलयुक्तम् । अणु संवृतम् । अन्ययोनि विजातीयावडवागवादि स्ताम् । अनिच्छन्ती या मैथुनद्वेषेणाङ्गसङ्कोचनपरा । अगम्या भगिन्यादिः । तथा रतान्तेषु दूषितं पङ्काद्याविलं तोयं स्पृशतस्तेन शौचं कुर्वतः अपि वा नैव स्पृशतः शौचादिकं नैव कुर्वतः । तथा विवर्धयिष्या शेफं वर्धयितुमिच्छया तत्रैव तीक्ष्णान् प्रलेपसेकादीन् प्रयच्छतो ददतः । मुष्ट्यादीनामुत्पीडनया । विषवतां शूकानां पातनैः । वेगनिग्रहः शुक्रादिवेगधारणम् । दीर्घेणातिखरेण च शष्पेण तृणेन विघट्टनं क्षोदनम् । [गुह्यरोम शष्पमिति जज्झटः ।] [स्त्रीव्यवायनिवृत्तस्येति पाठः । वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनैरिति च । व्यवायनिवृत्तस्य चिरकालोपेक्षितमैथुनस्य नरस्य पुनः सहसा अतर्कितमेव स्त्रीं नारीं भजतः सेवमानस्य । अथवेति विकल्पे । सङ्कीर्णः प्रसववैषम्यादिना गुदवस्तिभ्यामेकीभूतः । अथवा रजः शब्दोपि दोषाध्युषितादिवत् गुणवचनः तथा सति रजःपथां रजोयुक्तयोनिमार्गां रजस्वला सूतिकादिमित्यर्थः । अस्मिन् पक्षे दोषाध्युषितादिभिः पथशब्दोपि सम्बध्यः । अगम्यां भगिन्यादिकां तथा सत्यन्यजनज्ञानशङ्काजुगुप्सादिजनितवैक्लव्यदूने हृदि क्रुद्धा दोषा स्तद्गतेन मनसा सह गुह्यंप्राप्ता स्तत्ररोगान् जनयन्तीत्यर्थः । श्रुतिस्मृतिविरुद्धचारतश्च । मुष्ट्युत्पीडनादयः कामसूत्रविहितकरणभेदजनिताः । ऊषरजलेषु बाहुल्येन दृश्यमानो जन्तुतुल्याकृतिः कश्चिदौषधिविशेषः शूकः । ते च शूकाः सविषानिर्विषभेदात् द्विधा तत्र विषवन्तो रोगकारिणः । तदुक्तं कृष्णानि चित्राण्यथवा शूकानि सविषाणि तु पातितानि पचन्त्याशु मेढ्रं निरवशेषत इति । अथवा विषद्रव्यकल्पितानां वच्छूकानां वश्यौषधानां पातनात् । वेगनिग्रहदीर्घातिखरस्पर्शविघट्टनात् वेगनिग्रहाच्छुक्रादिवेगधारणात् । तथा दीर्घाणामतिखराणां च स्पर्शानां विघट्टनादास्फालनात् । स्पर्शमिति कामातपत्रसंज्ञितस्त्वग्विशेषः । तस्य च बहुरूपता विद्यते तत्कामशास्त्रादवगन्तव्यम् ॥]

**अपदंशो त्वपञ्चधा ।**

**पृथग्दोषैः सरुधिरैः समस्तैश्च-**

अत्रैषां त्रयोविंशतेर्मध्ये वातेन पित्तेन श्लेष्मणा रक्तेन सन्निपातेनेति पञ्चधा अपदंशः ॥

**-अत्र मारुतात् ॥**

**मेढ्रशोफो रुजश्चित्राः स्तम्भस्त्वक्परिपोटनम् ।**

त्वक्परिपोटनान्तं वातेनापदंशे लक्षणम् । [अत्र पञ्चानां मध्ये वातेनापदंशे लिङ्गे शोफो नानाप्रकारा रुजःस्तब्धता त्वचोभेदनं च स्यात् ।]

**पक्वोदुम्बरसङ्काशं पित्तेन श्वयथुर्ज्वरः ॥**

ज्वरान्तं पित्तेन । [पित्तजे अपदंशे पक्वोदुम्बरसदृशः शोफो ज्वरश्च स्यात् ॥]

**श्लेष्मणा कठिनः स्निग्धःकण्डूमाञ्छीतळो गुरुः**

गुर्वन्तं श्लेष्मणा । कठिन इत्याद्यनन्तरप्रकृतस्य श्वयथोर्विशेषणम् । [विशेषणसाम-

श्याच्छ्वयथुरेवात्रविशेष्यः । श्लेष्मकृते अपदंशे काठिन्ययुक्तः स्नेहलेपप्रतीतिकरः कण्डूसहितः शीतस्पर्शश्च शोफो जायते ॥ ]

**शोणितेनासितस्फोटसम्भवोऽस्रस्रुतिर्ज्वरः ।**

ज्वरान्तं रक्तेन । [ रक्तकृते अपदंशे कृष्णवर्णानां स्फोटानामुत्पत्तिरस्रस्रावो ज्वरश्च स्यात् ॥ ]

**सर्वजे सर्वलिङ्गत्वं श्वयथुर्मुष्कयोरपि ।**
**तीव्रारुगाशुपचनं दरणं कृमिसम्भवः ॥**

कृमिसम्भवान्तं सन्निपातेन । [ सरक्तसन्निपातजे अपदंशे सर्वलिङ्गत्वं वाताद्यपदंशानां प्रत्येकोक्तलक्षणनिचयसम्भवः । तथा वृषणयोरपि शोफः अपिशब्देनान्यत्रापि । मेढ्रमात्रे शोफोद्भवं सूचितम् । रक्तापदंशेपि शोफ उक्तः । तीव्रा अत्यर्थमसहनीयारुक्पीडाविशेषः । आशुपचनं द्वित्रिदिनैरेव पाकः । आशुशब्दोक्त्या पूर्वेषां क्रमेण पाकः सूचितः । दरणं भेदनम् । कृमिसम्भवः अन्तः स्वयमेव जन्तूनामुद्भवः ॥ ]

[ एषामवान्तरभेदत्वादत्रैव साध्यासाध्यविभागं दर्शयति ॥ ]

**याप्यो रक्तोद्भवस्तेषां मृत्यवे सान्निपातजः ।**

तेषां पञ्चानामपदंशानां मध्ये रक्तापदंशो याप्यः । सन्निपातजस्तु मृत्यवे भवति ॥

**जायन्ते कुपितैर्दोषैर्गुह्यासृक्पिशिताश्रयैः ।**

**अन्तर्बहिर्वा मेढ्रस्य कण्डूला मांसकीलकाः ॥**
**पिच्छिलास्रस्रवा योनौ तद्वच्च छत्रसन्निभाः ।**
**तेऽर्शांस्युपेक्षाद्घ्नन्ति मेढ्रपुंस्त्वभगार्तवम् ॥**

गुह्ये यदसृग्रक्तं पिशितं मांसं च तदाश्रितात् कारणात् कुपितैर्दोषैर्मेढ्रस्यान्तर्वा बहिर्वा कण्डूलाः पिच्छिलास्रस्रवाश्च मांसकीलका जायन्ते । अनेनैवप्रकारेण स्त्रिया अपि योनौ छत्राकृतयो मांसकीलका जायन्ते ते नाम्ना अर्शांसि । ते च पुरुषे जाता उपेक्षिताः सन्तो मेढ्रं पुंस्त्वं च नाशयन्ति । स्त्रियास्तद्वद्भगमार्तवं च लाघवार्थमत्र योनिरोग उक्तः । [कुपितैर्यथोक्तेन कारणजालेन क्रुद्धैर्गुह्यासृक्पिशिताश्रयैः गुह्यगतमसृक्पिशितञ्चाश्रयो येषां तैः मेढ्रस्यान्तर्भागे बहिर्भागे वा कण्डूलाः कण्डूयुक्ताः पिच्छिलास्रस्रवाः पैच्छिल्ययुक्तं रक्तं स्रवन्तः मांसकीलकाः कीलकाकारा मांसाङ्कुरा जायन्ते योनौ च स्त्रीणां गुह्येऽपि तद्वत् योनिव्यापदुक्तकारणदुष्टैर्दोषैरन्तर्बहिर्वा कण्ड्वादियुक्ता मांसकीलका जायन्ते । तत्र त्वयं विशेषः ते छत्रसन्निभाः छत्रतुल्याकाराः कृशमूलाः स्थूलाग्राश्च भवन्ति । मेढ्रजा मांसकीलकाः योनिजाश्चार्शांसीति कथ्यन्ते । उपेक्षया ते पुनः मेढ्रपुंस्त्वभगार्तवं मेढ्रं चेन्मेढ्रम् । पुंस्त्वं स्त्रीगमनसामर्थ्यं शुक्रं वा । तथा भगे चेत् भगमृतुत्वयोग्यं आर्तवं रक्तं च घ्नन्ति । पुंरोगाणां मध्ये स्त्रीरोगकथनं कारणादिसाम्येन लाघवात् ॥ ]

**गुह्यस्य बहिरन्तर्वा पिटकाः कफरक्तजाः ।**

सर्षपामानसंस्थाना घनाः सर्षपिकाः स्मृताः ।

कफरक्ताभ्यां गुह्यस्य बहिरन्तर्वा सर्वत्र वा सर्षपतुल्यप्रमाणसंस्थाना घनाः संहताः पिटका भवन्ति ता नाम्ना सर्षपिका स्मृताः । [गुह्यस्य मेढ्रस्य गुह्यशब्दोक्त्यायोनेरपि बहिरन्तः बहिर्भागेऽन्तर्भागे वा कफरक्तजाः श्लेष्मरक्तसंसर्गनिमित्ताः सर्षपामानसंस्थानाः मानसंस्थानाभ्यां सर्षपतुल्याः घना निरन्तरनिचिताः पिटकाः सर्षपिकासंज्ञो गुह्यरोगः ॥]

पिटका बहवो दीर्घा दीर्यन्ते मध्यतश्चयाः ।
सोवमन्थः कफासृग्भ्यां वेदनारोमहर्षवान् ॥

गुह्ये याः पिटका बह्वो दीर्घामध्यतश्च दीर्यन्ते स रोगो नाम्नावमन्थः । स च कफवाताभ्यां भवति वेदनारोमहर्षवांश्च भवति । [कफासृग्भ्यां कफेना सृजा च संसृष्टाभ्यां जाताः बहवो बहुसंख्याः दीर्घा आयामयुक्ताः याः पिटका मध्यतो मध्यप्रदेशे दीर्यन्ते विदीर्णा भवन्ति वेदना रोमहर्षवात् वेदनया रोमहर्षेण च युक्तः स रोगोऽवमन्थाख्यः ॥]

कुम्भीकारक्तपित्तोत्थाजाम्बवास्थिनिभाशुजाः

रक्तपित्तहेतुर्जाम्बवास्थिसदृशा क्षिप्र जाया पिटका सा नाम्ना कुम्भीका । [रक्तपित्ताभ्यां जाता जाम्बवबीजास्थिसदृशा आशुजा अतिवेगेनोत्थिता पिटका कुम्भीका तत्संज्ञो गुह्यरोगः ॥]

अलजीं मेहवद्विद्यात्

अलज्याख्यां गुह्यपिटकां मेहवच्छराविकादिपठितालजीवल्लक्षणैर्विद्यात् ॥

उत्तमां रक्तपित्तजाम् ।
पिटकां माषमुद्गाभाम्

पित्तरक्तजां माषमुद्गसदृशां पिटकां नाम्नोत्तमां विद्यात् । [उत्तमामिति पाठः । पित्तरक्तकारणजनितां संस्थानमानाभ्यां माषेण मुद्गेन वा तुल्यां पिटका मुत्तमाख्यं क्षुद्ररोगं विद्यात् ॥]

पिटका पिटकाचिता ।
कर्णिका पुष्करस्येव ज्ञेया पुष्करिकेतिसा ॥

पुष्करस्य पद्मस्य कर्णिकेव या पिटका अन्याभिर्बह्वीभिः पिटकाभिराचिता सा नाम्ना पुष्करिकेति ज्ञेया । [पित्तरक्ताभ्यामेव पद्मकर्णिका तुल्या तथा पिटकैराचिता स्वयमप्यणुभिः पिटकाभिव्याप्तेत्यर्थः ॥]

पाणिभ्यां भृशसंव्यूढे संव्यूढपिटका भवेत् ।

संव्यूढाख्ये रोगे मेढ्रे भृशसंव्यूढे विमर्दिते पिटका भवेत् । [हस्ताभ्यामातिशयेन संव्यूढे संवाहिते मर्दित इति यावत् मेढ्र इत्यर्थात् । संव्यूढ पिटका तत्संज्ञो गुह्यरोगो भवेत् । अत्रापि पित्तरक्ताभ्यामित्यूह्यम् ॥]

मृदितं मृदितं वस्तु संरब्धं वातकोपतः ।

वस्तु मेढ्राख्यं मृदितं स द्वातकोपात् संरब्धं भवति स नाम्ना मृदितम् । [हर्षणा-

र्थं हस्ताभ्यां मर्दितं यद्वस्तु मेढ्राख्यं तद्वातकोपतः मर्दनस्यैवातियोगात् कारणान्तराद्वा कुपिताद्वातात् संरब्धं हृष्टमेव सदा वर्तते चेन्मृदितं मृदिताख्यो गुह्यरोगः ॥ ]

**विषमा कठिना भुग्ना वायुनाष्ठीलिका स्मृता ।**

या विषमत्वादिगुणा पिटका वायुना भवति सा नाम्नाष्ठीलिका स्मृता । [ कुपितेन वायुना विषमा काचिन्निम्ना कचिदुन्नता कठिना प्रायेण काठिन्ययुक्ता भुग्ना कुटिलाकारा स्त्रीलिङ्गसामर्थ्यात् पिटकेत्यूह्यं इयमष्ठीलिकाख्यो गुह्यरोगः ॥ ]

**विमर्दनादिदुष्टेन वायुना चर्म मेढ्रजम् ।**
**निवर्तते सरुग्दाहं कचित् पाकं च गच्छति ॥**
**पिण्डितं कुथितं चर्म तत्प्रलम्बमधोमणेः ।**
**निवृत्तसंज्ञं सकफं कण्डूकाठिन्यवत्तुतत् ॥**

विमर्दनादिना दुष्टेन वायुना मेढ्रजं चर्म सरुग्दाहं सन्निवर्तते परावृत्य तिष्ठति । कचित्तु पाकमपि गच्छति । ततश्चर्मपिण्डितं संकुचितं कुथितं क्लिन्नं मणेर्मेढ्राग्रभागस्याधः प्रलम्बं भवति तस्य निवृत्तमिति संज्ञा । तच्च निवृत्तं कफसंयोगात् कण्डूकाठिन्यवच्च भवति न तु सर्वत्र । [ विमर्दनाद्धि दुष्टेनेति पाठः । पिण्डितं ग्रथितमिति च । विमर्दनाद्धिविधान्मर्दनात् दुष्टेन वायुना मेढ्रजं चर्ममेढ्रस्य त्वक् निवर्तते परावृत्य तिष्ठति । हि प्रसिद्धौ । कचित् केषुचित् पुरुषेषु दोषभेदवशात् सरुग्दाहं रुजया ऊष्मातिशयेन च युक्तं सपाकं गच्छति च । तत्तथाभूतं चर्मपिण्डितं ग्रथितं पिण्डाकारतया ग्रन्थिभावमापन्नं मणेर्मेढ्राग्रभागस्याधः प्रलम्बं लम्बमानं निवृत्तसंज्ञं निवृत्ताख्यो रोगः । स कफं कफसम्बद्धं तत्तु निवृत्तं कण्डूकाठिन्येन च युक्तं भवति ॥ ]

**दुरूढं स्फुटितं चर्मनिर्दिष्टमवपाटिका ।**

मेढ्रभवं चर्मदुष्टं कृत्वोढं मर्दितं स्फुटितं सदवपाटिकेति नाम्ना निर्दिष्टम् । [ दुरूढं दुष्टं कृत्वोढं अयथावत् गृहीत मर्दितमित्यर्थः । अत एव स्फुटितं भिन्नं यच्चर्मत्वक् तदवपाटिका तत्संज्ञो गुह्यरोगः ॥ ]

**वातेन दूषितं चर्म मणौ सक्तं रुणाद्धि चेत् ।**
**स्रोतो मूत्रं ततोऽभ्येति मन्दधारमवेदनम् ॥**
**मणेर्विका सरोधश्च स निरुद्धमणिर्गदः ।**

वातेन दूषितं चर्ममेढ्रमणौ सक्तं श्लिष्टं यदि मेढ्रस्रोतोरुणाद्धि ततो मूत्रं मन्दधारमवेदनं चाभ्येति मणेश्च हर्षणे विकासरोधो भवति स गदो नाम्ना निरुद्धमणिः । ( वातेन कृतदूषणं चर्म मणौ लिङ्गाग्रे सक्तं संश्लिष्टं स्रोतो मूत्रमार्गं रुणाद्धि यदि ततस्तस्माद्धेतोः मूत्रं मन्दधारं स्रोतो रोधादन्तरान्तरा विछिन्नं अवेदनं वेदनारहितं अश्मर्यादौहि निरोधस्याभ्यन्तरत्वाद्वेदना सम्भवः इह तु बाह्यत्वात्तदभावः । अभ्येति निर्गच्छति । मणेः कार्णिकाया स्त्वक्परिवर्तिना शक्यतया विकासयितुमशक्यत्वं च स्यात् । य एवंविधः स गदो निरुद्धमणि संज्ञो गुह्यरोगः ॥ )

लिङ्गं शूकैरिवाकीर्णं ग्रथिताख्यं कफोद्भवम् ।

कफेन हेतुना लिङ्गं मेढ्रमन्तः शूकैः किंशारुभिरिवावृतं भवति तस्य ग्रथित इत्याख्या । (शूकाचितप्रतीतियुक्तं मेढ्रं ग्रथिताख्यं तच्च कफोद्भवं कफेन जायत इत्यर्थः) । (किंशारुर्द्धान्य शूकम् ॥)

शूकदूषितरक्तोत्था स्पर्शहानिस्तदाह्वया ।

शूकेन दूषितं यन्मेढ्रे रक्तं तदुत्था मेढ्रे स्पर्शस्य हानिरचेतनत्वं भवति ततदाह्वय नाम्ना स्पर्शहानिः । (लिङ्गवृध्यर्थं प्रलिप्त शूकदूषिताद्रक्तादुत्पन्ना स्पर्शहानिः स्वापप्रयुक्तं स्पर्शाज्ञानं तदाह्वया स्पर्शहान्याख्यो रोगः ॥)

छिद्रैरणुमुखैर्यत्तु मेहनं सर्वतश्चितम् ।
वातशोणितकोपेन तं विद्याच्छतपोनकम् ।

यत्तुमेहनं मेढ्रं सर्वतः सर्वत्र अणुमुखैः सूक्ष्मास्यैश्छिद्रैश्चितं वातशोणितकोपेन हेतुना भवतितं नाम्ना शतपोनकं विद्यात् । (यत्तु लिङ्गं वातरक्तयोः कोपादणुमुखैः सूक्ष्मास्यैर्मुखस्याणुत्वोक्त्या मूलस्य स्थूलत्वमपि व्याप्तितम् । अत एव हि तेभ्यो मूत्रादिपरिस्रुतिः । छिद्रैः सुषिरैः सर्वतश्चितं व्याप्तं तं शतपोनकाख्यं विद्यात । भगन्दरोक्तशतपोनकवत् बहुच्छिद्रत्वात् ॥)

पित्तासृग्भ्यां त्वचः पाकस्त्वक्पाकोज्वरदाह [वान् ।

पित्तासृग्भ्यां हेतुभ्यां ज्वरदाहवान् यस्त्वचः पाकः स नाम्ना त्वक् पाकः । [पित्तेनासृजा च हेतुना ज्वरदाहवान् ज्वरेण दाहेन च युक्तो मेढ्रत्वचः पाकस्त्वक् पाकाख्यो गुह्यरोगः ।]

मांसपाकः सर्वजः सर्ववेदनो मांसशातनः ।

सर्वजः सन्निपातजो मांसपाकः सर्वाभिर्वेदनाभिर्युक्तो मांसशातनो भवति । [सर्वजः सन्निपातजः सर्ववेदनःछेदभेदतोदस्फुरणव्यासः व्यथस्त्वं स स्वापाद्याखिलवेदनान्वितः मांसशातनः मांसं पक्त्वामेढ्रादणुशः पातयन् मांसपाकः मांसपाकाख्यो रोगः ।]

सरागैरसितैः स्फोटैर्वेदनाभिश्च पीडितम् ।
मेहनं वेदना चोग्रा तं विद्यादसृगर्बुदम् ॥

सरागत्वादियुक्तैः स्फोटैस्तद्विधाभिश्च सूक्ष्माभिः पिटकाभिर्यत्र मेहनं पीडितं भवत्युग्रा च वेदना तस्य रोगस्या सृगर्बुदमिति नाम विद्यात् । [मेढ्रं सरागैरीषद्रक्तवर्णैरसितैः कृष्णवर्णैर्वा स्फोटैरर्थात्तादृशीभिरेव पिटकाभिश्च पीडितं व्याप्तं तथा उग्रा अत्यर्थमसहनीया वेदना च स्यात् य एवं विधो रोगस्तमसृगर्बुदं विद्यात् ।]

मांसार्बुदं प्रागुदितं विद्रधिश्च त्रिदोषजः ।

गुह्ये तु यन्मांसार्बुदं तत् लक्षणैः प्राक् ग्रन्थ्यार्बुदाध्याय उदितम् । गुह्ये च त्रिभिर्दोषैर्विद्रधिर्भवति । [अर्बुदानां मध्ये मांसार्बुदं विद्रधीनां मध्ये सन्निपातजो विद्रधिश्चावपि भवतः तौ च स्वस्वनिदानेन बोद्धव्यावित्यर्थः ।]

**कृष्णानि भूत्वा मांसानि विशीर्यन्ते समन्ततः।**
**पक्वानि सन्निपातेन तान् विद्यात्तिलकाळकान्।**

सन्निपातेन हेतुना गुह्ये पक्वानि मांसानि कृष्णानि भूत्वा समन्ताद्विशीर्यन्ते तां स्तिलकाळकान् विद्यात् । (सन्निपातकोपेन पक्वानि मेढ्रमांसानि कृष्णानि कृष्णवर्णानि भूत्वा समन्ततः आवस्तिपर्यन्तं विशीर्यन्ते शकलीभूय निपतन्ति । बहुवचनं शकलापेक्षया । य एवंविधास्तान् तिलकाळकसंज्ञान् जानीयात् । ) इत्यपदंशार्शः सर्षपिकाऽवमन्थकुम्भीकालज्युत्तमा पुष्करिका संव्यूढामृदिताऽष्ठीलिकानिवृत्ताऽवपाटिकानिरुद्धमणिग्रथितस्पर्शहानि शतपोनकत्वक्पाकमांस्पाकाऽसृगर्बुदविद्रधि तिलकाळकाख्यास्त्रयोविंशतिः पुंगुह्यरोगा उक्ताः ॥

(साध्यासाध्यानि विभजते ।)

**मांसोत्थमर्बुदं पाकं विद्रधिं तिलकाळकान् ।**
**चतुरो वर्जयेदेषां शेषान् शीघ्रमुपाचरेत् ॥**

एषां च मध्यान्मांसोत्थमर्बुदं मांसोत्थमेव च पाकं विद्रधिं तिलकाळकां श्चेति चतुरो वर्जयेत् न चिकित्सेत्। शेषांस्तु शीघ्रमेवोपाचरेत्। (अपदंशानां साध्यासाध्यविभागस्योक्तत्वादेषामनन्तरोक्तानामर्शःप्रभृतीनां मध्ये मांसोत्थमर्बुदं मांसार्बुदं पाकं मांस्पाकं विद्रधिं तिलकाळकानिति चतुरः वर्जयेत् । उद्देशत एवैषां चतुष्ट्वे सिद्धेपि चतुर इति पुनरुक्तिः सुखनिश्चयार्था बहुवचनोक्तानां तिलकाळकानां बहुत्वशङ्कानिरासार्थं च । शेषानर्शःसर्षपिकादीन् शीघ्रमाश्वेवोपाचरेत् तेषामपि कालातिपाते महान् प्रत्यवायः स्यादिति भावः ।)

(एवं पुंगुह्यरोगानुक्त्वा स्त्रीगुह्यरोगानाह ।)

**विंशतिर्व्यापदो योनेर्जायन्ते दुष्टभोजनात् ।**
**विषमस्थाङ्गशयनभृशमैथुनसेवनैः ॥**
**दुष्टार्तवादपद्रव्यैर्बीजदोषेण दैवतः ।**

योनेः स्त्रीगुह्यस्य दुष्टभोजनादिहेतोर्विंशतिर्व्यापदो जायन्ते । विषमस्थैरङ्गैः शयनं तथोक्तम् ; दुष्टार्तवेन स्रवता । अपद्रव्याणि लोहादिमयानि दाक्षिणात्यासुप्रसिद्धानि । बीजदोषः स्त्रियो जन्मकाले योन्यारम्भकस्य बीजस्योपहतत्वम् । दैवमन्यजन्मकृतं कर्म । इति योनिव्यापदामविशेषेण हेतुरुक्तः । (दुष्टभोजनात् पर्युषिताद्यन्नभोजनात् । उक्तं च । भवेत् पर्युषितं पूतिक्लिन्नमुष्णीकृतं पुनः । दुष्टं कृम्यादिजुष्टं च शोषितं चान्नमातप इति । विषमस्थाङ्गशयनभृशमैथुनसेवनैः अयथावद्विन्यस्तैरङ्गैः शयनस्य भृशमैथुनस्य च शीलनैः । दुष्टार्तवाद्वातादिदूषितादृतुजरक्तात् । उपद्रव्यैरिति पाठः । उपद्रव्यैर्लोहादिकृतैरुपलिङ्गैः । उपलिङ्गसुरतं देशान्तरेषु प्रसिद्धम् । उक्तं च रतिरहस्ये । विमृद्यमानाः कृतकध्वजेन द्रवन्ति हृष्यन्ति दृढप्रहारैः । स्त्रीराज्यजाः कोसलजाश्च नार्यः प्रचण्डकण्डूति भगाभवन्तीति । बीजदोषेण योन्यारम्भकस्याकाशाद्यकस्य बीजस्योपहतत्वेन दैवतो जन्मान्तरकृतपापफलपरिणामाच्च हेतोः योनेर्विंशतिर्व्यापदो भवन्ति ।

इयता ग्रन्थजालेन योनिव्यापदां सामान्यकारणमुक्तम् ।)

योनावित्यादिना लिङ्गान्युच्यन्ते ।

**योनौ क्रुद्धोऽनिलः कुर्याद्रुक्तोदायामसुप्तताः ।**
**पिपीलिका सृप्तिमिव स्तम्भं कर्कशतां स्वनम् ॥**
**फेनिलारुणकृष्णाल्पतनु रूक्षार्तवस्रुतिम् ।**
**भ्रंशं वङ्क्षणपार्श्वादौ व्यथां गुल्मं क्रमेण च ॥**
**तांस्तांश्च स्वान् गदान् व्यापद्वातिकीनाम सा (स्मृता ।**

योनौ क्रुद्धो वायूरुगादीन् कुर्यात् । फेनिलेत्याद्यार्तवविशेषणं तस्य स्रुत्या सम्बन्धः । भ्रंशो योनिभ्रंशः । वङ्क्षणादौ व्यथां क्रमेण गुल्ममपि कुर्यात् । तां स्तांश्च स्वान् वातजान् स्तम्भादीन् गदान् । इयं वातिकीनामयोनिव्यापत् स्मृता । (दुष्टभोजनादिना कुपितो वायुर्योनौरुगादीन् कुर्यात् । पिपीलिकासृप्तिमिव तासां सञ्चरणप्रतीतिमित्यर्थः । कर्कशता काठिन्यम् । स्वनं योनिमुखादप्यधो वातस्वननिर्गमनम् । फेनिलं फेनयुक्तमरुणमरुणवर्णं कृष्णं कृष्णवर्णं वा अल्पमबहुतनुस्वच्छं रूक्षमस्निग्धं एवम्भूतस्यार्तवस्य स्रुतिः स्रवणम् । स्रंसमिति पाठः । स्रंसो वेदनाविशेषः (कല ൧൩൭.൧൩൦ക) वङ्क्षणपार्श्वादौ व्यथां वङ्क्षणयोः पार्श्वयोश्च आदिशब्देन कटीपृष्ठपरिग्रहः । क्रमेण उपेक्षया कालातिपातात् गुल्मं गुल्माख्यं रोगं तां स्तानायामाक्षेपकस्तम्भादीन् स्वान् वाताव्याधिसम्बन्धिनो गदांश्च करोति । यैवंविधा सावातिकी नाम योनि व्यापत् स्मृता ।)

**सैवातिचरणा शोफसंयुक्तातिव्यवायतः ।**

सैव वातिकी अतिव्यवायाच्छोफसंयुक्ता सत्यतिचरणेत्युच्यते । (सावातिक्येव अतिव्यवायतः भृशमैथुनाद्धेतोः शोफसंयुक्ता योनिप्रदेशेश्वयथुमती सञ्जाता चेदतिचरणा अतिचरणेति संज्ञान्तरं लभते ।)

**मैथुनादतिबालायाः पृष्ठजंघोरुवङ्क्षणम् ।**
**रुजन् सन्दूषयेद्योनिं वायुः प्राक्चरणेति सा ॥**

अतिबालाया स्त्रिया मैथुनाद्वायुः पृष्ठादिकं रुजन् योनिं सन्दूषयेत् । सा व्यापन्नाम्ना प्राक्चरणा । (बालाया असम्पूर्णषोडशवयस्काया अतिमैथुनादनल्पव्यवायात् पृष्ठजंघोरुवङ्क्षणं पृष्ठं जंघे ऊरूवङ्क्षणौ च रुजन् योनिं सन्दूषयेत् रुक्तोदादियुक्तां करोति सा प्राक्चरणेति योनि व्यापत् ।)

**वेगोदावर्तनाद्योनिं प्रपीडयतिमारुतः ।**
**सा फेनिलं रजः कृच्छ्रादुदावृत्तं विमुञ्चति ।**
**इयं व्यापदुदावृत्ता —**

वेगोदावर्तनादधोवातादिवेगधारणनिमित्तादूर्ध्वमुद्गमाद्वायुर्योनिं प्रपीडयति सा पीडिता सत्युदावृत्तं बद्धं फेनिलं फेनयुक्तं रजोरक्तं कृच्छ्राद्विमुञ्चति । इयं व्यापन्नाम्नाप्युदावृत्ता । (प्रपीडयअतिव्यथां करोति । सा अनिलपीडिता योनिः ऋतुकाले प्राप्ते रजोरक्तं फेनिलं फेनयुक्तं कृच्छ्रादल्पाल्पमुदावृत्तं मध्ये मध्ये ऊर्ध्वमावर्तमानं विसृजति ।)

—जातघ्नी तु यदानिलः ।
जातं जातं सुतं हन्ति रौक्ष्याद्दुष्टार्तवोद्भवम् ।

यदा तु दुष्टार्तवोद्भवं सुतं जातं तत्काल एव वायूरौक्ष्याद्धन्ति तदा जातघ्नी नाम व्यापत् भवति । (यदा यस्मिन् काले वायू रौक्ष्यात् स्नेहक्षयोद्भूतरूक्षगुणाधिक्यात् क्रुद्धो दुष्टार्तवोद्भवं दुष्टशोणितसंभूतं जातं जातं सञ्जातान् सर्वानित्यर्थः । जातशब्दशक्त्या जन्मानन्तरत एवेति च द्योत्यते । हन्तिमारयति तदा तु जातघ्नी जातघ्नीनाम योनिव्यापत् । दुष्टशोणितस्यापि गर्भाधानसामर्थ्यमस्तीत्युक्तं शारीरे ।)

अत्याशिताया विषमं स्थितायाः सुरते मरुत् ।
अन्नेनोत्पीडितो योनेः स्थितः स्रोतसि वक्रयेत् ।
सास्थिमांसं मुखं तीव्ररुजमन्तर्मुखीति सा ।

या तु स्त्री अत्याशिता सती सुरते पुंयोगे विषमं कृत्वा तिष्ठति तदा तस्यामरुद्वायुरन्नेनोत्पीडितो योनेः स्रोतसि स्थितः सन् तस्या मुखं तीव्ररुजं सास्थिमांसं वक्रयेत् सा व्यापन्नाम्नान्तर्मुखी । (अत्याशिताया अतिभुक्तायाः सुरते करणवैचित्र्यादङ्गं विषमं कृत्वा स्थिताया नार्याः वायुरन्नेन निरवकाशं निष्पीडितो विषमस्थित्या सावकाशे योनिस्रोतस्येव स्थितस्तस्या मुखमस्थ्ना मांसेन च सह तीव्ररुजमत्यर्थवेदनं वक्रयेत् सा अन्तर्मुखीति नाम योनि व्यापत् ।)

वातलाहारसेविन्यां जनन्यां कुपितोनिलः ।
स्त्रिया योनिमणुद्वारां कुर्यात् सूचिमुखीति सा ।

जनन्यां मातरि वातलाहारसेविन्यामनिलः कुपितो दोषाया योनिं संवृतमुखीं कुर्यात् सा व्यापन्नाम्ना सूचिमुखी ।

वेगरोधादृतौ वायुर्दुष्टो विण्मूत्रसङ्ग्रहम् ।
करोति योनिशोषं च शुष्काख्या साति वेदना ।

ऋतुकाले वेगरोधाद्दुष्टो वायुर्विण्मूत्रसंग्रहं योनिशोषं च करोति । सा व्यापच्छुष्काख्या । सा चातिवेदना भवति । (ऋतुकाले वेगरोधात् अधो वातादिवेगधारणात् दुष्टः क्रुद्धो वायुर्विण्मूत्रसंग्रहं मलमूत्रयोर्निरोधं योनिशोषं योनिद्वारे द्रवाभावं च करोति अतिवेदना अधिकवेदना युक्ता या एवंविधा सा शुष्काख्या शुष्कासंज्ञा योनिव्यापत् ।।)

षडहात् सप्तरात्राद्वा शुक्रं गर्भाशयान्मरुत् ।
वमेत् सरुङ्नीरुजो वा यस्यां सा वामिनीमता ।।

यस्यां व्यापदि निषिक्तं शुक्रं गर्भाशयान्मरुत् सरुजो वा नीरुजो वा षडहात् सप्तरात्राद्वा बहिः क्षिपेत् सा व्यापद्वामिनिमता । (यस्यां व्यापदि वायुः षडहात् षण्णामह्नां समाहारात् हेत्वर्थे पञ्चम्याः करणार्थे परिणामात् षड्भिरहोभिरित्यर्थः । सप्ताहात् सप्तभिरहोभिर्वा । अत्र सप्ताह शब्दस्य मर्यादात्वेनाभिविधित्वेन चेष्टत्वादत्र षडहात् सप्तरात्राद्वेति पक्षद्वयं परिगृहीतम् । सरुक् रुजा सहितः नीरुजो रुजा रहितः वा शब्दो विकल्पे कचित् सरुजः कचिन्नीरुजश्चेत्यर्थः । शुक्रं पुंसानिषिक्तं गर्भाशयात् गर्भकोष्ठं प्रविष्टमपीति

भावः । वमेत् बहिर्निरस्येत् । नुदेदिति वक्तव्ये वमेदित्युक्तिर्वामिनी शब्दस्य निरुक्तिद्योतनाय एवंविधा सा व्यापद्वामिनीसंज्ञा ॥ )

**योनौ वातोपतप्तायां स्त्रीगर्भे बीजदोषतः ।**
**नृद्वेषिण्यस्तनी च स्यात् षण्डसंज्ञानुपक्रमा ॥**

स्त्र्याख्यगर्भे बीजदोषाद्वातोपतप्तायां योनौ पुरुषद्वेषिणी स्तनरहिता च स्त्रीस्यात् सा व्यापत् षण्डसंज्ञानुपक्रमात्याज्या । (योनौ कुतश्चित् कारणात् क्रुद्धेन वायुना पीडितायां सत्यां मातुरित्यर्थात् । गर्भे गर्भाधानसमये बीजदोषतः आर्तवदुष्ट्या स्त्रीजायमाना पुत्रीनृद्वेषिणी पुंसम्भोगविरक्ता अस्तनीयौवनेप्यल्पस्तनचि स्यात् सा व्यापत् षण्डाख्या अनुपक्रमा असाध्यत्वाच्चिकित्सारहिता च ॥)

**दुष्टो विष्टभ्ययोन्यास्यं गर्भकोष्ठं च मारुतः ।**
**कुरुते विवृतां स्रस्तां वातिकीमिव दुःखिताम् ॥**
**उत्सन्नमांसां तामाहुर्महायोनिं महारुजम् ।**

दुष्टो वायुर्योन्यास्यं गर्भकोष्ठं च विष्टभ्य योनिं विवृतां स्थानाच्च स्रस्तां वातिक्याख्य व्यापदमिव च दुःखितां व्यथितामुत्सन्न मांसां महारुजं च कुरुते तां नाम्ना महायोनिमाहुः । (यथास्वैर्गुह्यरोगकारणभूतैर्दूषणैर्दुष्टो वायुर्योनिमुखं गर्भाशयं च विष्टभ्य स्तम्भयित्वा विवृतां न कदाचिदपि संवरणयुक्तां स्रस्तां स्थानाच्चलितां बहिर्निस्सृतामित्यर्थः । वातिकीमिव वातिक्याख्यां व्यापदमिव दुःखितां रुक्तोदायामादिविविधोपद्रवयुक्तामित्यर्थः । उत्सन्नमांसां उद्धान्तमुखत्वादुन्नतमांसां महारुजां अत्यर्थवेदना युक्तां कुरुते योनिमिति महायोनिशब्दसान्निध्या दध्या हार्यं तां व्यापदं महायोनिं महायोन्याख्यामाहुः ।')

**यथा स्वैर्दूषणैर्दुष्टं पित्तं योनि समाश्रितम् ।**
**करोति दाहपाकोषा पूतिगन्धज्वरान्विताम् ॥**
**भृशोष्णभूरिकुणपनीलपीतासितार्तवाम् ।**
**सा व्यापत् पैत्तिकी—**

यथास्वैर्दूषणैर्निदानकथितैर्दुष्टं पित्तं योनिमाश्रित्यतामेव दाहाद्यन्वितां भृशोष्णादिगुणां च करोति सा व्यापन्नाम्नापैत्तिकी । (यथास्वैः सर्वरोगनिदानोक्तैः कट्वम्लादिभिर्दुष्टं प्राप्तदूषणं योनिं प्राप्तं पित्तं तां योनिं दाहाद्यन्वितां भृशोष्णादिगुणयुक्तार्तवां च करोति । दाहः सर्वाङ्गीण दाहः । ऊषा प्रादेशिक दाहः । पूतिगन्धो दुर्गन्धः कुणपार्तवं रक्तदोषजं प्राक् पुत्रकामीयाध्याय उक्तम् । या एवंविधा व्यापत्सापैत्तिकीनाम भवति ॥)

**—रक्तयोन्याख्या सृगति स्रुतेः ॥**

एषैवातिरक्तस्रुतेः रक्तयोन्याख्या भवति । (सापैत्तिकीव्यापदेवात्य सृक् स्रावाद्धेतोः रक्तयोनिसंज्ञास्यात् ॥ )

**कफोभिष्यन्दिभिः क्रुद्धः कुर्याद्योनिमवेदनाम् ।**
**शीतलां कण्डुलां पाण्डु पिच्छलां तद्विधस्रुतिम् ॥**
**सा व्यापच्छ्लैष्मिकी—**

अभिष्यन्दिभिः स्रोतो मालिन्यकरैरा-

हारैः कफः क्रुद्धो वेदनारहितां शीतलादिगुणां च योनिं कुर्यात् तद्विधस्रुतिं शीतलादिगुणस्रुतिं सा व्यापन्नाम्ना श्लैष्मिकी । ( योनिं अवेदनामीषद्वेदनायुक्तां शीतलां शीतस्पर्शां कण्डुलां कण्डूयुक्तां पाण्डु पिच्छिलां पाण्डुरवर्णां पैच्छिल्ययुक्तां च तद्विधस्रुतिं पाण्डु पिच्छिलाम्बुस्रवणयुक्तां च करोति ॥ )

**—वातपित्ताभ्यां क्षीयते रजः ।**
**स दाहकार्श्यवैवर्ण्यं यस्यां सा लोहितक्षया ॥**

यस्यां व्यापदि वातपित्ताभ्यां रजः क्षीयते दाहादिकञ्च भवति सा व्यापन्नाम्ना लोहितक्षया । [यस्यां योनिव्यापद्यनिलपित्ताभ्यां कारणाभ्यां रजोरक्तं दाहाद्यन्वितं क्षीयते क्षयं याति सा लोहितक्षयाख्या व्यापत् ॥ ]

**पित्तलाया नृसंवासे क्षवथूद्गारधारणात् ।**
**पित्तयुक्तेन मरुता योनिर्भवति दूषिता ॥**
**शूना स्पर्शासहा सार्तिर्नीलपीतास्रवाहिनी ।**
**वस्ति कुक्षि गुरुत्वातिसारारोचककारिणी ।**
**श्रोणिवङ्क्षणरुक्तोदज्वरकृत्सा परिप्लुता ॥**

पित्तलायाः पित्तप्रकृतेः स्त्रिया नृसंवासे मैथुने क्षवथोरुद्गारस्य च धारणात् पित्तयुक्तेन वायुना दूषिता योनिः शूनादिगुणा भवति साव्यापन्नाम्ना परिप्लुता । [पित्तलायाः प्रभूतपित्तायाः पित्तप्रकृतेरित्यर्थः । नृसंवासे पुंसङ्गतौ क्षवथूद्गारयोर्धारणात् पित्तयुक्तेन मरुता दूषिता योनिः शूना शोफयुक्ता स्पर्शासहा स्पर्शं किञ्चिदप्यसहमाना सार्तिः रुजायुक्ता नीलपीतास्रवाहिनी नीलवर्णं पीतवर्णं वा अस्रं रक्तं वहनमाना तथा वस्तेः कुक्षेश्च गुरुत्वमतिसारमरोचकं च कुर्वाणा श्रोण्यां वङ्क्षणयोः रुक्तोदौ च ज्वरं च कुर्वती भवति सा व्यापत् परिप्लुताख्या ॥ ]

**वातश्लेष्मामयव्याप्ता श्वेतपिच्छिलवाहिनी ।**
**उपप्लुतास्मृता योनिः—**

वातश्लेष्मलैरामयैर्व्याप्ता योनिः श्वेतं पिच्छिलं च वहति सा नाम्नोऽपप्लुता स्मृता । [वातनिमित्तैः श्लेष्मनिमित्तैश्चामयैर्व्याप्ता परिवृता श्वेतपिच्छिलवाहिनी श्वेतवर्णं पैच्छिल्ययुक्तं चास्रं वहमाना योनिः योनिव्यापत् उपप्लुताख्या स्मृता ॥ ]

**—विप्लुताख्यात्वधावनात् ।**
**सञ्जातजन्तुःकण्डूला कण्ड्वाचातिरतिप्रिया ॥**

या तु योनिरधावनादप्रक्षालनाद्धेतोः सञ्जातजन्तुः कण्डूला च भवति कण्ड्वाचातिरतिप्रिया अतिव्यवायप्रिया च भवति सा नाम्ना विप्लुता । [विप्लुताख्या तु योनिः तुशब्दः परिप्लुतातो विशेषद्योतकः । अधावनादन्तर्मला परिशोधनात् सञ्जातजन्तुः योन्यन्तर्गतरक्तजक्रिमियुतत्वादागन्तु गन्तुक्रिमिसम्भवेत्वतिरतिप्रियेत्यस्यानुपपत्तेश्चान्तः प्रवृद्धनैसर्गिकक्रिमिरित्यर्थः । रतिरहस्येचैतत् स्पष्टमुक्तम् । रक्तजाः क्रिमयः सूक्ष्मा मृदुमध्योग्रशक्तयः । स्मरसद्मनिकण्डूतिं जनयन्ति यथा बलम् । ध्वजदण्डाभिघातेन कण्डूत्यपनयादतः । रक्षणाच्च सुखमिति । कण्डूला अमर्षणीय कण्डूयुक्ता कण्ड्वा कण्डूतिहेतोः चशब्दः सञ्जातजन्तुत्वात् कण्डूः कण्डूत्यारत्याभिनिवेशश्चेतिहेतु

74 *

पारं पर्यद्योतनार्थः । आतिरातेप्रिया अर्तावसुरतेच्छुः ॥ ]

**अकालवाहनाद्वायुः श्लेष्मरक्तविमूर्च्छितः**
**कर्णिकां जनयेद्योनौ रजोमार्गनिरोधिनीम् ॥**
**साकर्णिनी —**

अकालवाहनादप्राप्ताम्ब्वीरणाद्वायुः श्लेष्मरक्ताभ्यां मिश्रितो योनौ रजोमार्गनिरोधिनीं कर्णिकां जनयेत् । साव्यापन्नाम्ना कर्णिनी । [वायुरकालवाहनाद्वेगो दीरणात् । काश्चिद्रतान्तेकामांबु छला द्रव्यायितुं प्रियान् । मूत्रं स्रजन्त्यकाले वा मदनाम्ब्वेव तत् द्वयम् । अकालवाहनस्यार्थं इति व्याचष्टसारकृत् । द्वेधाप्यनिच्छासुरते द्रुतिभावः प्रतीयते । (श्लेष्मरक्तविमूर्च्छितः श्लेष्मरक्ताभ्यां विमूर्च्छितो वर्द्धितः श्लेष्मसम्बन्धात् घनीभूय दुर्मांसप्रायतां प्राप्तस्य रक्तस्य वायुनो दीरणे कर्णिन्याः सम्प्राप्तिरितिभावः । यानौ गर्भाशयद्वारमुखे रजोमार्गनिरोधिनीं गर्भाशयद्वारसंवृतिकरीं अत एव निषिक्तस्य शुक्रस्य प्रतिग्रहात् गर्भो न जायत इति भावः । कर्णिकां पद्मकर्णिकातुल्यं मांसांकुरमित्यर्थः । जनयेदाविष्कुर्यात् । सा कर्णिनीसंज्ञाव्यापत् ॥ ]

**—त्रिभिर्दोषैर्योनिगर्भाशयाश्रितैः ।**
**यथास्वोपद्रवकरैर्व्यापत् सा सान्निपातिकी ॥**

त्रिभिर्दोषैर्योनौ गर्भाशयेवाश्रितैर्यथास्वोपद्रवकरैः सूत्रोक्तवाताद्युपद्रवकरैर्या व्यापत् सा नाम्ना सान्निपातिकी । (योनिं गर्भाशयं चाऽश्रित्य रुक्तोददाहपाकशैत्यकण्डूवादिस्वस्वोपद्रवं कुर्वद्भिर्वातादिभिर्या व्यापत् सा सान्निपातिकीसंज्ञा ॥ )

**इति योनिगदा नारी यैः शुक्रं न प्रतीच्छति ।**
**ततो गर्भं न गृह्णाति रोगांश्चाप्नोति दारुणात् ।**
**असृग्दरार्शोगुल्मादीनाबाधांश्चानिलादिभिः ॥**

**॥ इत्युत्तरे अष्टत्रिंशोऽध्यायः ॥**

इति विंशतिर्वातिक्यातिचरणा प्राक्चरणोदावृत्ताजातघ्न्यन्तर्मुखी, सूचीमुखी, शुष्काख्या, वामिनी, षण्डा, महायोनिः, पित्तयोनी, रक्तयोनिः, श्लैष्मिकी, लोहितक्षयोऽपप्लुता, परिप्लुता, विप्लुता, कर्णिनी, सान्निपातिक्याख्या, योनिगदा उक्ताः यैर्गदैर्नारीनिषिक्तं शुक्रं न प्रतीच्छति गर्भाशयेन न गृह्णाति शुक्रस्याग्रहणात् गर्भं न गृह्णात्यसृग्दरादींश्च रोगान् दारुणानतिकृच्छ्रानाप्नोत्यनिलादिभिश्च दोषैर्दारुणाना बाधान् व्याधीन् स्तम्भशूलादीनाप्नोतीति । (योनिगदा योनिव्यापदः इत्यनेनप्रकारेणोक्ताः यैर्योनिगतैर्नारी व्यापद्यमाना स्त्री शुक्रं पुंसा निषिक्तं न प्रतच्छिति न प्रतिगृह्णातिततस्तस्माद्धेतोः गर्भं न गृह्णाति गर्भो न जायते अपत्यार्थमेव यस्याः परिग्रहो विधीयते तदभावे तया किं फलमिति भावः । किञ्च दारुणानतिकृच्छ्रानसृग्दरार्शो गुल्मादीन् आदिशब्देन मूत्रकृच्छ्राश्रिस्रावादयो गृह्यन्ते रोगा नाप्नोति तथा आनिलादिभिर्वातपित्तकफैः कृतानाबाधान् असम्भावनीयान् व्यापदन्तरांश्च प्राप्नोति ॥ )

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्यख्यायामुत्तरे
॥ अष्टत्रिंशोऽध्यायः ॥

# एकोनचत्वारिंशोऽध्यायः ॥

## गुह्यरोगप्रतिषेधम् ॥

उक्तक्रमेणैव गुह्यरोगाणां प्रतिषेधं प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो गुह्यरोगप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

(अथेत्यादि पूर्ववत् । गुह्यरोगाणां प्रतिषेधं चिकित्सितम् ।
तत्र पूर्वमपदंशानां सामान्यचिकित्सामाह ॥)

अपदंशेषूत्पन्नमात्रेषु पाकपरिहारार्थं मेढ्रमध्ये सिरां विध्येत् । उभयतश्चास्य विधिवद्दोषानपहरेद्विशेषतो विरेचनेन । तदयोग्यस्य त्वत्युच्छ्रिता नास्थापनेन ॥

अपदंशेष्विति बहुवचनं विशेषानपेक्षया साधारणचिकित्सा प्रदर्शनार्थम् । सुबोधम् । उभयत ऊर्ध्वमधश्च । तदयोग्यस्याल्पाग्न्यादेः । अत्युच्छ्रितानित्यपदंशविशेषणम् । [उत्पन्नमात्रेष्वचिरकालजनितेष्वपदंशाख्येषु गुह्यरोगेषु पाकपरिहारार्थं मेढ्रमध्ये मेढ्रस्य मध्यभागे न तु मूलेऽग्रे वा उपर्यवेध्य सिरासङ्करेण वेध्य सिराया दुर्ज्ञेयत्वादुधोभागे सीवनीं वर्जयित्वा तत्पार्श्वत इति च मन्तव्यम् । पूर्वं सिरावेधे निवृत्तापदंशशुक्र्व्या परस्तु मेढ्र इत्येतावन्मात्रकथनेन स्थानविशेषस्या निर्देशादत्र मध्य इत्युक्तम् । उत्पन्नमात्रेष्वित्युक्त्या चिरोत्थितेष्वतिप्रवृद्धेन शोफेन सिरान्तर्द्धानादवेध्यतया अनपायिभिर्जलौकोभिर्दुष्टास्रविस्रावणं कार्यमिति च द्योत्यते । सौश्रुतेऽप्युक्तम् । उपदंशेषु साध्येषु स्निग्ध स्विन्नस्य देहिनः । मेढ्रमध्ये सिरां विध्येत् पातयेद्वा जलौकस इति ॥ ]

यथादोषं चालेपसेकादीनविरतं विदध्यात् । एवं सद्य एव रुक्तोदशोफरागसंरम्भा निवर्तन्ते ॥

यथादोषमित्युच्छ्रितदोषानतिक्रमेण ॥
[प्राप्तपाकस्य क्रियामाह ॥ ]

पक्वेषु तु शस्त्रमवचारयेत् । सघृतक्षौद्रशर्करेण तिलकल्केनालेपयेत् । अपि च ॥

शस्त्रमवचारयेद्यथायोग्यं पाटनादिकं कर्तुम् । अपिचेति समुच्चये । [पक्वेषु पाकं प्राप्तेषु सत्सु तुशब्देनाशु शस्त्रावचार्यतास्य दुष्करत्वं च द्योत्यते । उक्तं च शास्त्रान्तरे । शस्त्रेणोपाचरेच्चापि पाकमागतमाशुवै इति ॥ ]

[क्षाळनार्थं तैलपचनार्थं च क्वाथमाह ॥ ]

जम्ब्वाम्रसुमनोनीप श्वेतकांबोजिकांकुरान् ।
सल्लकी बदरी बिल्वपलाशतिनिशोद्भवाः ॥
त्वचः क्षीरिद्रुमाणां च त्रिफलां च पचेज्जले ।
सः क्वाथः क्षाळनं तेन पक्वं तैलं च रोपणम् ।
गोजीविळङ्गमधुक सर्वगन्धैश्च पेषितैः ॥

जम्ब्वाद्यङ्कुरान् सल्लक्यादीनां क्षीरिद्रुमाणां च त्वचः त्रिफलां च जले पचेत् सः क्वाथः क्षाळनं तेनैव च क्वाथेन गोज्यादिमिश्र पेषितैः पक्वं तैलं रोपणम् । नीपो भूमिकदम्बः । श्वेतकाम्बोजिकाख्यः श्वेतपाकी शिखण्डिका च । सल्लक्याद्युद्भवास्त्वचः क्षीरिद्रुमाणां च वटादीनां त्वच एव । [चतुर्गुणे जले पचेत् द्वादशां-

शावशिष्टः स क्वाथः क्षाळनं व्रणप्रक्षाळनाय हितमित्यर्थः । तेन कषायेण पक्वं पाचितं तैलं व्रणरोपणं च ] गोजी गोजिह्वा ।।

तुत्थगैरिकलोध्रैला मनोह्वालरसाञ्जनैः ।
हरेणुपुष्पकासीस सौराष्ट्री लवणोत्तमैः ।
लेपः क्षौद्रद्रुतैः सूक्ष्मैरपदंशव्रणापहः ॥

तुत्थादिभिः सूक्ष्मपिष्टैः क्षौद्रद्रुतैर्लेपोऽपदंशव्रणापहः । [क्षौद्रद्रुतैः क्षौद्रेण द्रवत्वमापादितैः सूक्ष्मैः सूक्ष्मरजीकृतैः तुत्थादिभिर्हरेण्वादिभिश्च प्रलेप अपदंशव्रणरोपणः ] [सौराष्ट्री तुवरमृत्तिका । पुष्पं पुष्पाञ्जनम् इति प्रबन्धसंग्रहे ।। ]

दार्वीत्वक्शङ्खताक्ष्यर्योत्थलाक्षागोक्षीरविड्रसैः
सक्षौद्रतैलसर्पिर्भिर्लेपः श्रेष्ठोव्रणेऽथवा ।
लाक्षाद्राक्षातसीक्षौद्रैः क्षौद्रशैलेयताक्ष्यर्जैः ॥

दार्वीत्वगादिभिर्लेपो व्रणे श्रेष्ठः । ताक्ष्यर्योत्थं रसाञ्जनम् गोः क्षीरम् । विड्रसं च तस्या एव । अथवा लाक्षादिभिः क्षौद्रान्तैर्लेपः। अथवा क्षौद्रादिभिर्द्रव्यजातैः ॥

[ रोपणद्रव्यविशेषमाह ।। ]

कपाले त्रिफलाऽदग्धा सघृतारोपणी परम् ॥

त्रिफलायाः कपाल एव दाहो विवक्षितः । [अदग्धा अन्तर्धूमं विपाचिता सघृता घृतोपेता त्रिफला परमतिशयेन रोपणं प्रलेपाद्व्रणरोपणम् । रोपणं परामेति पाठः ।। ]

सामान्यं साधनमिदं—

इदं सर्वापदंशानामविशेषेण साधनं चिकित्सितम् । [इदमनन्तरोक्तं सर्वं कर्मसामान्यं साधनं सर्वेषा मपदंशानां सामान्यं चिकित्सितम् ।। ]

—वातिकं तु प्रलेपयेत् ॥
अपक्वंकुष्ठयष्ट्याह्व सुरदारुपुनर्नवैः ।
स्निग्धोष्णैर्लोहसरळरास्ना पुण्ड्राह्वसंयुतैः ।
अथवानिचुळैरण्डबीजगोधूमाचिक्कसैः ॥

वातिकं त्वपदंशमपक्वं कुष्ठादिभिर्लोहादियुतैः स्निग्धोष्णैः प्रलेपयेत् । अथवा निचुळादिभिः [लोहमगरु । चिक्कसं यवचूर्णम् ।। ]

गैरिकाञ्जनमञ्जिष्ठा मधुकोशीरपद्मकैः ।
सचन्दनोत्पलैः शीतैर्घृताढ्यैः पित्तसंभवम् ॥
पद्मोत्पलमृणाळैर्वा ससर्जार्जुनवेतसैः ।
सेचयेच्च घृतक्षीरशर्करेक्षुमधूदकैः ॥

पित्तसम्भवं त्वपदंशमपक्वमिति प्रकरणात् । गैरिकादिभिरुत्पलान्तैः शीतैर्घृताढ्यैः प्रलेपयेदितिसम्बन्धः अथवा पित्तसंम्भवं पद्मादिभिर्वेतसान्तैः प्रलेपयेत् घृतादिभिश्च सेचयेत्। [अञ्जनं रसाञ्जनम् । मृणाळं पद्मनाळम् । इति निबन्धसंग्रहे ।। ]

धवसालाश्वकर्णाजकर्णत्वग्भिः कफोत्थितम् ।
सुरापिष्टाभिरुष्णाभिः सतैलाभिः प्रलेपयेत् ॥
रजन्यतिविषामुस्तसरळामरदारुभिः ।
सपत्रपाठा पत्तूरैरथवा श्लेष्मसम्भवम् ॥

कफोत्थितमपदंशं धवादित्वग्भिः सुरया पिष्टाभिरुष्णाभिस्तैलयुक्ताभिःप्रलेपयेत् । अथवा रजन्यादिभिः पत्तूरान्तैः श्लेष्मसम्भवं प्रलेपयेत । [सुश्रुते तु वातजेपदंशे कुष्ठयष्ट्याह्वादिकषायणे कफजे सुरसारग्वधादिकषायाभ्यां च सेचनमुक्तम् ।। ]

**न च याति यथापाकं प्रयतेत तथा भृशम् ।**
**पक्वैः स्नायुसिरामांसैः प्रायो नश्यति हि ध्वजः ॥**

सर्वश्चापदंशो यथापाकं न याति तथा भृशं प्रयतेत । यतः पक्वैः स्नाय्वादिभिः ध्वजो मेढ्रः प्रायो नश्यतिः । [यथा येन प्रकारेण पाकं न प्राप्नोति (तथा येन प्रकारेण पाकं न प्राप्नोति) तथा तेन प्रकारेण भृशं प्रयतेत अतिशयेन यत्नमाचरेत् । विमनविरेचनासृङ्मोक्षप्रलेपपरिषेकादिभिरनवरतमुपाचरेदित्यर्थः । पक्वैः प्राप्तपाकैः स्नाय्वादिभिः ध्वजो लिङ्गं प्रायो नश्यति नाशं प्राप्नोति । प्रायः शब्देन केषाञ्चिच्चिकित्सासाध्यत्वमपि सूचितम् ॥ ]

**अपदंशद्वये शिष्टे प्रत्याख्यायाचरेत् क्रियाम् ॥**

शिष्टद्वयं रक्तजं सन्निपातजं च तत्र प्रत्याख्यानं कृत्वा न सिध्यतीत्युक्त्वा क्रियामाचरेत् । इत्यपदंशः ॥

**अर्शांसि यथायोगं शुद्धदेहस्य शस्त्रक्षाराग्निभिः साधयेत् । अपदंशोक्ताचात्र रसक्रिया लेपः ॥**

अर्शसां सुबोधम् । अपदंशोक्ता रसक्रिया तुत्थादिका ॥

**सर्षपिकां विलिख्य कषायैरवचूर्णयेत् । तैरेव च तैलं व्रणरोपणं कुर्यात् ॥**

सर्षपिकायां प्रथमं शस्त्रेण विलेखनं ततः कषायैर्लोध्रादिभिरवचूर्णनं तैरेव च कषायैस्तैलं व्रणरोपणं कुर्यात् साधयेत् ॥

**अवमन्थे जलौकसो योजयेत् । पक्वभिन्नं धवतिन्दुकसल्लकीपत्तङ्गसर्जकृतेन तैलेन रोपयेत् ॥**

अवमन्थे सुबोधम् स्वयं पक्वं ततश्च भिन्नं धवादिभिः कृतेन तैलेन रोपयेत् ॥

**तद्वत् कुम्भीकामुपचरेत् । लोध्रतिन्दुकत्रिफला कृतस्तु लेपस्तैलं च रोपणम् ॥**

कुम्भीकां तद्वदवमन्थवदुपाचरेत् । लोध्रादिको लेपः तैरेव च कृतं तैलं रोपणम् ॥

**अलजीं सुतरक्तां कषायैरवचूर्णयेत् । तेष्वेव च तैलं व्रणरोपणार्थं कुर्वीत ॥**

अलज्यां सुबोधम् । तेष्वेव चेति कषायद्रव्येषु ॥

**उत्तमा पिटकां शस्त्रेण च्छित्वा कषायचूर्णप्रदेहैर्मधुमद्भिरुपाचरेत् ॥**

उत्तमायां सुबोधम । [मधुमद्भिर्मधुयुक्तैः कषायरसद्रव्याणां चूर्णैः प्रदेहैश्चोपाचरेत् ॥ ]

**पुष्करिका संव्यूढास्पर्शहानि त्वक्पाकेषु पित्तविसर्पोक्तो विधिः ॥**

पुष्करिकादिषु चिकित्सितोक्तपित्तविसर्पविधिः ॥

**मृदितं कोष्णेन बलातैलेन परिषेचयेत् । मधुरद्रव्यकल्कैश्च सुखोष्णैर्घृतस्निग्धैरुपनाहयेत् ॥**

मृदितमिति मृदिताख्यम् । बलातैलं शारीरोक्तम् । मधुरद्रव्याणि सूत्रोक्तानि तैः सुखोष्णादिगुणैरुपनाहयेत् ॥

**अष्ठीलिकां जलौकोभिर्ग्राहयेत् । तथानुपशमे श्लेष्मग्रन्थिमिव शस्त्रेणोद्धरेत् ॥**

अष्ठीलिकायां सुबोधम् । श्लेष्मग्रन्थिर्ग्रन्थ्यादावुक्ता ॥

निवृत्तं सर्पिषाभ्यज्य स्वेदयेत् । स्विन्नमुपनाहयेत्त्रिरात्रं पञ्चरात्रं वा साल्वलेन । ततोभूयः स्वेदयित्वा घृतेनाभ्यज्यशनैः शनैश्चर्मसमानयन् मणिमव पीडयेत् । पीडयित्वा च पुनरुपनाहयेत् । स्निग्धोष्णं चान्नपानम् ॥

निवृत्ताख्ये सर्पिषाभ्यक्ते पश्चात् स्विन्ने सूत्रोक्तैः साल्वलादिभिस्त्रिरात्रं दोषाद्यपेक्षया पञ्चरात्रं वोपनाहयेत् । उपनाहो बन्धः । साल्वलः सुबोधः । समानयेद्यथा प्राप्तं सम्यगानयेत् ॥

अवपाटिकायामप्ययं विधिः ॥

अवपाटिकायमपि अयमेव निवृत्तोक्तो विधिः ॥

निरुद्धमणौ सुवर्णादिकृतां दारुजां वा जतुकृतां नाडीमुभयतोद्वारां स्नेहाभ्यक्तां स्रोतसि प्रणिधाय सूकरशिंशुमारयोर्वसयामज्ज्ञा वा परिषेचयेत् । चक्रतैलेन वा । वातहरसिद्धेन वा त्रिवृतेन । तृतीये तृतीये चाहनि नाडीं पीनतरां विदध्यात् । एवमस्य स्रोतोद्वारं विवर्धयेत् स्निग्धं चाहारं भोजयेत् । एवमनुपशान्तौ शस्त्रेण सेवनीं परिहृत्य दारयित्वा सद्यः क्षतवदुपाचरेत् ॥

निरुद्धमणौ नाडीविधानं परिषेकश्च सुबोधः । शिंशुमारो मत्स्यविशेषः । वातहरैर्द्रव्यैः सिद्धेन त्रिवृतेन स्नेहत्रयेण । सुबोधम् । सद्यः क्षतवत्सद्यो व्रणविधानतः ॥

ग्रथितं नाडीस्वेदेन स्वेदयित्वा स्निग्धोष्णैरुपनाहयेत् । शतपोनकं लिखित्वा कषायचूर्णैः सक्षौद्रैर्लेपयेत् । विदार्यादिसिद्धेन च तैलेन रोपयेत् । शर्करार्बुदे रक्तविद्रधिवत् साधनम् ॥

ग्रथितं ग्रथिताख्यम् । व्याख्यासमम् । शतपोनकमर्बुदं च ॥

सर्वेषु च यथास्वमन्तः शुद्धिं कषायलेपघृततैलरसक्रियाचूर्णशोधनरोपणान् विदध्यात् ॥

सर्वेष्विति पुरुष गुह्यरोगेषु । यथास्वमिति दोषाद्यपेक्षया अन्तश्शुध्यादीन् विदध्यात् । इत्युक्त्वा मेढ्र्व्या पदः । (कषायरसद्रव्यकृतो लेपः कषायलेपः ॥)

(एवं पुंगुह्यरोगाणां चिकित्सामुक्त्वाऽनन्तरं स्त्रीगुह्यरोगचिकित्सामाह ॥)

योनिव्यापदि तु वातिक्यां लवणतैलाक्तां योनिं पिण्डनाडीकुम्भीप्रभृतिभिः स्वेदयेत् । ततः सुखोष्णाम्बुपरिषिक्तं सर्वगात्रां जाङ्गलरसैर्भोजयेत् ॥

वातिक्यभिधानायां योनिव्यापदियोनिं लवणतैलेनाभ्यज्य पिण्डादिस्वेदैः स्वेदयेत् । सर्वगात्रामिति सम्भवात् स्त्रियम् ॥

बलाद्रोणद्वयनिर्यूहे पयस्या सालपर्णी मागधिका शतावरीकाकनासा श्रावणीशर्करा जीवनीयगर्भं क्षीरचतुर्गुणं घृततैलाढकं साधयेत् तत्पानात् सर्वान् वातपित्तविकारानपोहति गर्भजननं च ॥

बलाकषायेप यस्यादिगर्भं घृततैलयोर्मिश्रीभूतयोराढकं साधयेत् पचेत् । द्रोणद्वयनिर्यूहो द्रोणद्वयक्वाथः । सुबोधम् ॥

शतावरीत्रिफला गुळूचीकाश्मर्यमृद्वीकाकासमर्दकपरूषकहरिद्राद्वयसहचरशुकनासा पुनर्नवैः कार्षिकैर्घृतप्रस्थः सिद्धः पीतो वातजान् योनिरोगानपोहति गर्भजननश्च ॥

शतावर्यादिभिर्घृतप्रस्थः सुबोधः । [कार्षिकैः कर्षप्रमाणैः शतावर्यादिभिः सिद्धः पक्वो घृतप्रस्थः पीतो वातजनितान् योनिरोगानपोहति नाशयति ॥]

सैन्धववचोपकुञ्चिकापिप्पलीवृषकयवक्षाराजमोदाजाजीसितोपला चित्रकचूर्णो मदिरालुळितः सर्पिषा संयावीकृत्य भक्षितो योनिपार्श्ववस्तिवेदनार्शो गुल्महृद्रोगहरः ॥

सैन्धवादिचूर्णो मदिरालुळितः सर्पिषा संयावीकृत्ययवधान्यवत् साधयित्वा भक्षितो योन्यादिवेदनादिहरः । [संयाव उल्कारिका इति जर्जटः ॥]

शूले वृषकरास्नागोक्षुरकसृतं पयः पिबेत् । वृषकमातुलुङ्गमूलमदयन्तिका सैन्धवपिप्पलीकृष्णजीरककल्कं वा मद्येन । तेनैवचार्जकमूलं विल्वयुक्तं वा पिप्पलीयुक्तं वा । सौवर्चलोपकुञ्चिका पिप्पलीर्वा मद्येनावन्तिसोमेन वा ॥

योनिशूले वृषकादिसिद्धं पयः पिबेत् । वृषको वाशकः । वृषकमातुलुङ्गादिकं वा मद्येन पिबेत् । तेनैवेति मद्येनार्जकस्य सूक्ष्मकुठेरस्य मूलं विल्वयुक्तं वा पिप्पलीयुक्तं वा अथवा सौवर्चलादिकं मद्येनावन्तिसोमेन वा । [अवन्तिसोमं काञ्चिकम् ॥]

दन्ती त्रिफला गुळूची क्वाथः सुखोष्णो योनेः परिषेकः ॥

दन्त्यादिक्वाथेन योनेः परिषेकः ॥

कुष्ठतगरदेवदारुवार्ताकिनीसैन्धवैः साधितं तैलं पिचुना धारयेत् ॥

कुष्ठादिभिः साधितं तैलं पिचुना कार्पासचुलुकेन योनौ धारयेत् । वार्ताकिनी बृहती ॥

रास्ना मालती च्छिन्नरुहा मधुकबलाव्याघ्रीदेवदारु चित्रकयूथिकामूलैः कर्षांशैस्तैलप्रस्थः समूत्रो द्विगुणपयसा विपक्वः पिचुना प्रणीतोऽनिलार्तिहरः ॥

रास्नादिविपक्वतैलपिचुप्रयोगः सुबोधः ॥

वस्तिकर्मचाभीक्ष्णं स्वेदं च प्रयोजयेद्विशेषतो वातहरैः सुकुमारबलातैलशिरीषतैलैः शतपाकसहस्रपाकैश्चानुवासनमुत्तरवस्तिं च । एषक्रमो विशेषेण योनेर्वेदना कार्कश्यस्तम्भस्रंसस्पर्शहानिघ्नश्च ॥

व्याख्यासमम् । शतपाकसहस्रपाकौ वातव्याध्युक्तौ । एष इत्यनन्तरोक्तः सर्वः क्रमः ॥

अतिचरणादिषु सर्वास्वनिलजा स्वयमेवक्रमः ॥

अतिचरणादिषु दशसु महायोन्यन्ता स्वयमेव वातिकी विहितः क्रमः । तत्र विशेषः ॥

धारयेच्चातिचरणायां यवगोधूमकिण्वकुष्ठशतपुष्पाश्वाह्वप्रियङ्गुबलाखुकर्णीकल्ककृता मुल्कारिकाम् ॥

अतिचरणायां यवादिकृता मुल्कारिकां योनौ धारयेत् ॥

प्राक्चरणा शुष्का विप्लुता कार्णिनीषु तैलमुत्तरबस्तिं दद्यात् ॥

प्राक्चरणादिषु चतुर्षु सुबोधम् ॥

तत्रापि विशेषः ॥

धारयेच्च विप्लुतायां गोमत्स्यान्यतर पित्तैनैकविंशतिकृत्वो भावितान् क्षौमनक्तकान् किण्वं वा माक्षिकयुक्तमेवमस्याः स्रोतांसि विशुध्यन्ति कण्डूक्लेदशोफाश्च निवर्तन्ते ॥

गोर्वा मत्स्यानां वा पित्तैनैकविंशति वारान् भावितान् क्षौमनक्तकान् विप्लुतायां धारयेत् । सुबोधम् । अस्या विप्लुतायाः ॥

कर्णिन्यां तु कुष्ठार्कपल्लवपिप्पलीसैन्धवैर्बस्तमूत्रपिष्टैर्वर्तिं कृत्वा धारयेत् । श्लेष्महरं च सर्वं कुर्यात् ॥

कर्णिन्यां विशेषः कुष्ठादिभिर्वर्तिः श्लेष्महरं वमनादिकम् ॥

उदावृत्तायां सानूपमांसरसाः क्षीरं स्वेदो दशमूलत्रिवृता क्वाथकल्कसिद्धश्च स्नेहः पानानुवासनोत्तरबस्तिषु । योनिसंसेचमहायोनिप्रभृतिष्वेष एव विधिः ॥

उदावृत्तायां सुबोधम् । महायोनिप्रभृतिषु योनिसंसेचैष एवोदावृत्ताविधिः ॥

जातघ्नीरक्तयोनिरक्तक्षयासु कुटजकाश्मर्यक्वाथसिद्धं सर्पिरुत्तरबस्तौ दद्यात् । अथवा मृगाजाविवराहरुधिराम्लदधिमधुघृतानीति । भवति चात्र ॥

जातघ्न्यादित्रये कुटजादिसिद्धघृतोत्तरबस्तिर्योनौ प्रणिधेयः । अथवा मृगादिरुधिराण्यम्लदध्यादीनि च मिश्रीकृतान्युत्तरबस्तिः स्यात् । भवति चात्रेति तन्त्ररीतिः ॥

स्नेहनस्वेदबस्त्यादि वातलास्वनिलापहम् ।
कारयेद्रक्तपित्तघ्नं शीतं पित्तकृतासु च ॥
श्लेष्मलासु च रूक्षोष्णं कर्म कुर्याद्यथायथम् ।
सन्निपाते विमिश्रं तु संसृष्टासु च कारयेत् ॥

वातलासु योनिव्यापत्सु स्नेहनादिकमनिलापहं सर्वं कर्म कारयेत् । पित्तकृतासु सर्वं रक्तपित्तघ्नं शीतं च श्लेष्मलासु तु सर्वं कर्म रूक्षोष्णम् । यथायथमिति दोषाद्यपेक्षया विमिश्रं कर्म सन्निपाते संसृष्टासु च कारयेत् ॥

स्निग्धस्विन्नां तथा योनिं दुःस्थितां स्थापयेत् समाम् ।
पाणिना नमयेज्जिह्मां संवृतां प्रथयेत् पुनः ॥
प्रवेशयेन्निस्सृतां च विवृतां परिवर्तयेत् ।
स्थानापवृत्ता योनिर्हि शल्यभूता स्त्रिया मता ॥

सुबोधम् । समस्थापनादौ हेतुः स्थानापवृत्तेत्यादि । [दोषवैपरीत्येनाभिधाय व्याधिवैपरीत्येन भेषजनिर्देशः । स्निग्धस्विन्नां दुःस्थितां स्थापयेद्यथापूर्वम् । पाणिना नमयेज्जिह्मां स्निग्धस्विन्नामित्यनुवर्तनीयम् । जिह्मां कुटिलामित्यर्थः । संवृतां व्यासयेत् पुनः क्रमेण विस्तारयेत् । अनेकार्थत्वाद्धातूनाम् । प्रवेशयेन्निस्सृतां तु विवृतां परिवर्तयेत् तिर्यग्व्यवस्थितामित्यर्थः । यस्मात् स्थानापवृत्ता योनिः शल्यभूता स्त्रिया मता । इति जर्जटः । ] [तथा तद्वत् दुःस्थितां स्थानभ्रंशाद्विषमां योनिं समां यथास्थानं स्थापयेत् । जिह्मां कुटिलां पाणिना

योन्यन्तर्गततुल्याग्रेण हस्तेन नमयेत् । अत्र नमनकथनेनोन्नमनस्याऽशक्यत्वादुन्नतप्रदेशस्य नमनेनैव निम्नस्यौन्नत्यजननं द्योत्यते । संवृतां संवरणादणूभूतां पुनः प्रथयेत् अङ्गुल्यग्रेण प्रसारयेत् । निस्सृतां बहिर्निर्गतां प्रवेशयेत् हस्ताग्रेण मन्दं मन्दं प्रपीड्यान्तरावेशयेत् । विवृतां विचित्रकर्मणोऽनिलस्य वैगुण्येन विवरणाद्वेणुनाळ्याकारेण स्थितां परिवर्तयेत् परितः शनैर्गृहीत्वा संवृणुयात् । चशब्दः समुच्चये । (പ്രഥനം വളൎത്തുക,) (പ്രവേശനം അകത്താക്കുക,) (പരിവൎത്തനം ചുരുക്കുക.) स्थानात् भ्रष्टा योनिः स्त्रिया नार्याः शल्यभूता शल्यत्वं प्राप्ता मता । शल्यशब्देनैकावयवजत्वेप्यन्येषा मवयवा नामकर्मण्यताकरत्वं द्योत्यते । हि प्रसिद्धौ ॥ ]

**सर्वां व्यापन्नयोनिं च कर्मभिर्वमनादिभिः ।**
**मृदुभिः पञ्चभिर्नारीं स्निग्धस्विन्नामुपाचरेत् ॥**

सर्वां व्यापन्नयोनिं योनिव्यापद्युक्तां नारीं संस्नेह्य स्वेदयित्वा वमनादिभिः पञ्चभिः कर्मभिर्मृदुभिरेवोपाचरेत् । मृदुभिरतीक्ष्णैर्वमनादिभिर्वमनविरेचनास्थापनास्रस्रावनस्यैः पञ्चभिः कर्मभिः ॥

**सर्वतः सुविशुद्धायाः शेषं कर्मविधीयते ।**
**वस्त्यभ्यङ्गपरीषेक प्रलेप पिचुधारणम् ॥**

तैश्च वमनादिभिः सर्वत इति ऊर्ध्वमधः शिरसि च विशुद्धायाः स्त्रियाः शेषमतः शिष्टं कर्मवस्त्यादिकं विधीयते । [सर्वतोधउपरिष्टाच्च सुविशुद्धायाः सम्यक्शुद्धायाः स्त्रियाः शेषमनन्तरकरणीयं वस्त्यादिकं कर्मविधीयते निर्दिश्यते । अनेन योनिव्यापद्यकृतशोधनायाः शमनौषधं न प्रयोज्यमिति द्योत्यते । वस्तिरुत्तरवस्तिः । पिचुधारणं योनौ स्नेहाक्तपिचुनिक्षेपणम् । ] [वमनादीनिकर्माणि यथोद्गूणदोषप्रशमनाय विधीयन्ते द्वित्राणि सर्वांणि वा यथासम्भवम् । सर्वतः शुद्धानां यद्यत् कर्म वक्ष्यमाणं तत् सर्वं कार्मुकं सम्पद्यते यत आह सर्वतः सुविशुद्धायाः सम्यगूर्ध्वमधश्च शेषं कर्मविधीयते । इति जज्जटः ॥ ]

**हिंस्रा कल्कं समीरार्तां कोष्णमभ्यज्य धारयेत् ।**
**पञ्चवल्कस्यपित्तार्तां श्यामादीनां कफातुरा ॥**

हिंस्रेत्यादिभिस्त्रयः कल्का वातार्त्यादिषु योनिधारणे ॥

**वामिन्याप्लुतयोश्चैव स्वेदयित्वा प्रयोजयेत् ।**
**तर्पणं स्नेहपिचुभिर्भोजनं चानिलापहम् ॥**
**सल्लकी जिङ्गिणी जंबू धवत्वक्पञ्चवल्कलैः ।**
**कषायैःसाधितात्स्नेहात्पर्युपप्लुतयोःपिचुम् ॥**

सुबोधम् । पञ्चवल्कलोन्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसत्वचः ॥

**कुळीरसूकरवसा सर्पिर्भिर्मधुरैः भृतैः ।**
**पूरयित्वा महायोनिं बध्नीयात् क्षौमनक्तकैः ॥**

महायोनिं कुळीरादिवसा सर्पिर्भिर्मधुरद्रव्यसिद्धैः पूरयित्वा क्षौमनक्तकैर्बध्नीयात् ॥

**प्रस्रस्तां सर्पिषाभ्यज्यक्षीरास्विन्नां प्रवेशयेत् ।**
**बध्नीयाद्वेशवारस्य पिण्डेनामूत्रकालतः ॥**

प्रस्रस्तेत्यादिसुबोधम् । आमूत्रकालत इति वेगधारणप्रतिषेधार्थम् ॥

**यच्च वातविकाराणां कर्मोक्तं तच्चकारयेत् ।**
**सर्वव्यापत्सुमतिमान्महायोन्यां विशेषतः ॥**

यच्च चिकित्सिते वातविकाराणां कर्मोक्तं तत्सर्वं सर्वासु योनिव्यापत्स्वपि कारयेत् । तद्वातहरं कर्म महायोन्यां विशेषतः कारयेत् ॥

नहि वातादृते योनिर्वनितानां प्रदुष्यति ।
अतोजित्वातमन्यस्य कुर्याद्दोषस्य भेषजम् ॥

यस्माद्वातादृते वनितानां योनिर्न दुष्यति अतो हेतोस्तं वातं जित्वाऽन्यस्य दोषस्य भेषजं कुर्यात् । [वनितानां स्त्रीणां योनिः वातादृते वातमन्तरेण न प्रदुष्यति दुष्टिं न प्राप्नोति हियस्मादर्थे अतोऽस्माद्धेतोस्तं वातं जित्वा अन्यस्य दोषस्य पित्तश्लेष्मादेर्भेषजं चिकित्सितं कुर्यात् ॥ ]

पित्तळानां तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।
शीताः पित्तजितः कार्याः स्नेहनार्थं घृतानि च ॥

पित्तळानां योनीनां सेकादयः शीताः पित्तजितश्च कार्याः । स्नेहनार्थं घृतान्येव कार्याणि । [पित्तळानां बहुपित्तानां पित्तजानामिति वक्तव्य पित्तळानामित्युक्तिर्नहि वातादृत- इत्यादि पूर्वोक्तग्रन्थस्य विरोधनिरासार्थम् । योनीनां योनिव्यापदामित्यर्थः । शीताः स्पर्शवीर्ययोः शीताः पित्तजितः पित्तघ्नाः शीतशब्देनैव पित्तहरत्वे सिद्धे पुनरपि पित्तघ्नकथनं पित्तघ्नानां मन्दशीतगुर्वादीनां मध्येऽत्रशीतस्य विशेषोपयोज्यत्वद्योतनार्थम् । सेकाभ्यङ्गपिचुक्रियाः सेकः परिषेकः । अभ्यङ्गः स्नेहप्रलेपः । पिचुक्रिया पिचुनक्तकनिक्षेपणम् । क्रियाशब्दः प्रत्येकं सम्बध्यते । कार्याः कर्तव्याः । स्नेहनार्थं शोध्यविषये स्नेहयितुं घृतानि पित्तघ्नौषधैर्बहुधा सिद्धानि चशब्दात् कार्याणीत्यर्थः ॥

शतावरीत्यादिना तान्येव घृतान्युच्यन्ते ॥

शतावरीमूलतुला चतुष्कात् क्षुण्णपीडितात् ।
रसेन क्षीरतुल्येन पाचयेत घृताढकम् ॥
जीवनीयैः शतावर्या मृद्वीकाभिः परूषकैः ।
पिष्टैः भियालैश्चाक्षांशैर्मधुकार्द्धपलान्वितैः ॥
सिद्धशीतेतुमधुनः पिप्पल्याश्च पलाष्टकम् ।
शर्कराया दशपलं क्षिपेल्लिह्यात् पिचुं ततः ॥
योन्यसृक्शुक्रदोषघ्नं वृष्यं पुंसवनं परम् ।
क्षतं क्षयमसृक्पित्तं कासं श्वासं हलीमकम् ॥
कामिलां वातरुधिरं विसर्पं हृच्छिरोग्रहम् ।
अपस्मारार्दितायाम मदोन्मादांश्च नाशयेत् ॥

शतावरीमूलानि परिपूर्णसारण्यनुपहतानि च गृह्यन्ते । सुबोधम् । [द्वियष्टिमधुकैर्भिषगिति चरकपाठः । शतावरीघृते द्वियष्टिमधुकैरिति द्विग्रहणं भागद्विगुणप्रतिपादनार्थम् । यष्टिमधुकद्वयप्रतिपादनार्थं वा । स्थलजं जलजं चेति मधुकं द्विविधं स्मृतमित्याम्नानात् । ब्राह्मणान् प्राशयेत् पूर्वमिति अदृष्टवृष्यर्थमेषा परिभाषान्यत्रापि द्रष्टव्या । इति जर्ज्जटः । ] द्विपलामधुकान्वितैरिति हृदयपाठः । क्षुण्णपीडितात् शतावरीमूलस्यतुला चतुष्कात् क्षीरतुल्येन रसेन । एतावन्मात्रस्य शतावरीमूलस्य यावान् रसो जायते तत्तुल्येन पयसेत्यर्थः । अक्षांशैरक्षप्रमाणैः पिष्टैर्जीवनीयादिभिर्घृताढकं विपचेत् । सिद्धशीते चास्मिन् घृते मधुनः पिप्पलीचूर्णस्य च पलाष्टकं सितायाः दशपलं च क्षिपेत् ततस्तस्मात् पिचुं कर्षप्रमाणं लिह्यादातुर इति शेषः । तत् घृतं योन्यसृक्शुक्रदोषघ्नं वृष्यं शुक्रवर्द्धनम् । प-

रमतिशयेन पुंसवनं गर्भदम् । क्षतादींश्च नाशयेत् । मृद्वीकादीनां बहुवचनोक्तिः छन्दोनुरोधात् ॥ ]

**एवमेवपयस्सर्पिर्जीवनीयोपसाधितम् ।**
**गर्भदं पित्तजानां च रोगाणां परमं हितम् ॥**

एवमेवेति शतावरीविधानेन पयस्सर्पिः क्षीरोद्भवं घृतं जीवनीयोपसाधितं गर्भदत्वादिगुणम् । गर्भदं पित्तजानां च योनीनां स्यात भिषग्जितमिति चरकपाठः । एवमेवेति क्षारसर्पिः क्षीरादुत्थितं एवमेव पूर्वविधिमतिदिशति सिद्धशीते च मधुन इत्यादि यावत् ब्राह्मणान् प्राशयेत् पूर्वमित्यादि । इति जर्जटः ॥ ]

**रक्तयोन्यामसृग्वर्णैरनुबन्धमवेक्ष्यच ।**
**यथादोषोदयंयुञ्ज्याद्रक्तस्थापनमौषधम् ॥**

रक्तयोन्यामसृजो वर्णैः सिराव्यधोक्तप्रकारेण वातादीनामन्यतमस्य दोषस्यानुबन्धमवेक्ष्य दोषोदयानतिक्रमेण रक्तस्थापनं रक्तस्रावहरमौषधं युञ्ज्यात् । [रक्तयोन्यामसृग्वर्णैरनुबन्धं कृष्णारुणनीलपीतपाण्डुत्वादिभिर्वातादीनामाधिक्यमल्पत्वं च समीक्ष्य ततो यथादोषं योयो दोषो यथादोषं रक्तस्थापनमौषधं कार्यमिति जर्जटः ॥ ]

दोषभेदेनासृग्दरचिकित्सितं निर्दिशन्नाह तिलचूर्णमित्यादि । इति जर्जटः ॥

**तिलचूर्णं दधिघृतं फाणितं सौकरी वसा ॥**
**क्षौद्रयुक्तं जयेत् पीतं वातोत्तरमसृग्दरम् ।**
**वराहस्यरसोमेध्यःसकौलत्थश्च तद्गुणः॥**
**पत्रकल्कोघृतेभृष्टो राजादनकपित्थयोः ।**
**शर्कराक्षौद्रयष्ट्याह्व नागरैश्चयुतं दधि ॥**

तिलादिकं क्षौद्रयुक्तं पीतं वातादिकं रक्तस्रावं जयेत् । उत्तरो बलवान् । वराहमांसरसः कौलत्थेन रसेनयुक्तस्तद्गुणो वातोत्तरमसृग्दरं जयेदित्यर्थः । राजादनकपित्थयोस्तु बालपत्रकल्को घृते भृष्टस्तद्गुण एव । तथा शर्करादिभिर्युक्तं दधि ॥

**पयस्योत्पलशालूकविसकालीयवारिजम् ॥**
**सपयश्शर्कराक्षौद्रं [1]रक्ते पित्तोत्तरे पिबेत् ।**
**तण्डुलीयकमूलं वा सक्षौद्रं तण्डुलाम्भसा ॥**
**सताक्ष्यशैलं लाक्षां वा छागेन पयसा पिबेत् ।**
**वाशाघृतं महातिक्तं रक्तपित्तहितञ्च यत् ॥**

पयस्यादिकं क्षौद्रान्तं पित्ताधिके रक्तेऽसृग्दरे पिबेत् । पयस्या क्षीरिका । शालूकं जलजकन्दम् । विसं पद्मादिजम् । कालीयं पीतचन्दनम् । अथवा पित्तोत्तरे रक्ते तण्डुलीयकमूलं क्षौद्रयुक्तं ताक्ष्यशैलयुक्तं च तण्डुलाम्भसा पिबेत् । अथवा केवलामेव लाक्षां छागेन पयसा पिबेत् । वाशाघृतं च रक्तपित्तोक्तं पिबेत् । तथा महातिक्तमन्यच्च यत्किञ्चिद्रक्तपित्तहितं तत् सर्वमत्रेष्यते ॥

**मधुकं त्रिफलां लोध्रं मुस्तं सौराष्ट्रिकां मधु।**
**मद्यैर्निम्बगुळूच्यौ च कफजेसृग्दरे पिबेत् ॥**

कफादसृग्दरे मधुकादिकं गुळूच्यन्तं मद्यैः पिबेत् ॥

---

[1]. पैत्तिकेसृग्दरे पिबेदिति चरकपाठः। पयस्यादीनेकश एकैकशः पयः शर्कराक्षौद्रसहितं पैत्तिकेसृग्दरे पिबेदिति जर्जटः ॥

पाठां जम्ब्वाम्रयोरस्थि शिलोद्भेदं रसाञ्जनम्।
अम्बष्ठां शाल्मली पिच्छां समङ्गां वत्सकत्वचम्
बाल्हीकबिल्वातिविषा लोध्रतोयदगैरिकम्।
शुण्ठीमधूकमाचीकं रक्तचन्दनकट्फलम् ॥
कट्वङ्गवत्सकानन्ता धातकीमधुकार्जुनम्।
पुष्ये गृहीत्वा सञ्चूर्ण्य सक्षौद्रं तण्डुलाम्बुना ।
पिबेदर्शस्त्वतीसारे रक्तंयच्चोपवेश्यते ।
दोषा जन्तुकृताये च बालानांतांश्चनाशयेत् ॥
योनिदोषं रजोदोषं श्यावश्वेतारुणासितम्।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥

पाठादिकमर्जुनान्तं पुष्ये गृहीत्वा संयोज्य पश्चाच्च सञ्चूर्ण्य क्षौद्रेणयुक्तं तण्डुलोदकेनार्शः प्रभृतिषु पिबेत् । एतच्च बालानां ये कृमिकृता दोषास्तान् योनिदोषं च श्यावाद्यन्यतमवर्णं रजोदोषं च नाशयेत् । एतच्चूर्णं नाम्ना पुष्यानुगम् । हितं पथ्यमात्रेयेण पुनर्वसुना पूजितम् । जम्बूफलस्याम्रफलस्यचास्थि । शिलोद्भेदं शिलाजतु । अम्बष्ठा साहस्री सैवबहुमूलिका । शल्मल्याः सम्बन्धिनी पिच्छा । समङ्गा मञ्जिष्ठा । बाल्हीकं कुङ्कुमम् । तोयदो मुस्तः । माचीकं कुटचफलम् । कट्वङ्गः स्योनाकः । अनन्ता यवाषकः । [पाठामित्यादि । शिलोद्भेदः पाषाणभेदकः । अम्बष्ठा दाक्षिणापथे प्रसिद्धैव । द्वितीयां पाठामपरे शाल्मलीवेष्टं खपुरमित्यर्थः । माचीकमुत्तरापथे प्रसिद्धमेव । कट्वङ्गोरलुः । वत्सक इन्द्रयवोभिप्रेतः फलशब्दलोपात् । अनन्ता उत्पलशारिबा । मधुकं द्वियष्टिमधुकं स्थलजजलजभेदेन द्विधेत्युक्तम् । पुष्ये गृहीत्वेत्यदृष्टानुग्रहार्थम् । योनिदोषं रजोदोषं रजोदोषा रजोविशेषाः श्वेतादयः प्रदरभेदाः योनिव्यापल्लिङ्गा एव । इति जर्जटः ॥ ]

सर्वेषु गर्भस्रावोक्तं प्रदरेषु प्रशस्यते ॥

शारीरे यत् गर्भस्राव उक्तं चिकित्सितं तत् सर्वं प्रदरेपि शस्यते । प्रदरमसृग्दरमतिरज इति पर्यायाः ॥

रक्तक्षयायां क्षीरं च जीवनीयश्रुतं पिबेत् ॥

रक्तक्षयायां व्यापदि जीवनीयाख्य महाकषायश्रृतं क्षीरं पिबेत् ॥

योन्यांबलासदुष्टायां वर्तिः संशोधने हिता।
वाराहे बहुशः पित्ते भावितैर्नक्तकैः कृता ॥

श्लेष्मयोन्याख्यायां वराहपित्तेन बहुशोभावितैर्नक्तकैर्वस्त्रखण्डैः कृता वर्तिर्योनौ धार्या शोधनी परं हिता च । [योन्याः श्लेष्मप्रदुष्टाया वर्तिः संशोधनी हिता व्रणप्रतिषेधोक्ता । अथवा वाराहे बहुशः पित्त इत्यादि । ततोनन्तरं स्वेद्या सुखाम्बुना । इति जर्जटः ॥ ]

भावितं पयसार्कस्य माषचूर्णं ससैन्धवम् ।
वर्तिःकृता क्षणं धार्या सेक्तव्यानुसुखाम्बुना ॥

अर्कक्षीरभावितं माषचूर्णं पश्चाच्च सैन्धवयोजितं तेन कृतावर्तिः श्लेष्मयोन्यां क्षणं धार्या । ततश्च श्लेष्मयोनिः सुखाम्बुना सेक्तव्या ॥

पिप्पलीमाषमरिच शताह्वाकुष्ठसैन्धवैः ।
प्रदेशिन्यङ्गुलीतुल्या वर्तिर्योनिविशोधनी ॥

पिप्पल्यादिभिरङ्गुष्ठनिकटाङ्गुलीतुल्या वर्तिर्योन्या विशोधनी ॥

उदुम्बरशलाटूनां द्रोणं द्रोणेम्भसः पचेत् ।
सपञ्चवल्कतिलकमालतीनिम्बपल्लवे ॥
निशास्थितेजलेतस्मिंस्तैलप्रस्थंविपाचयेत् ।
पलाशशाल्मलीलाक्षाधवनिर्यासवल्कलैः॥
पिष्टैर्युक्तं ततःस्नेहपिचुं योनौ निधापयेत् ।
सशर्करैः कषायैश्च शीतैः कुर्वीत सेचनम् ॥
पिच्छिलाविवृता योनिश्चिरदुष्टा तु दारुणा।
सप्ताहाच्छुध्यतिक्षिप्रमपत्यं च समश्नुते ॥

उदुम्बरशलाटूनां सूक्ष्माणां फलानां द्रोणं द्वादशाधिकानि पञ्चशतानि पलानि । द्रोणं जलस्य च तान्येव । शलाटूनां चार्द्राणामेव प्रयोगोन्याय्यः । किम्भूते अम्भसः द्रोणे । आह । सपञ्चवल्कलादिके । न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः सर्वैरेकत्रसंयुक्तैः पञ्चवल्कलमुच्यते । पल्लवशब्दस्य तिलकादिभिः सम्बन्धः । तिलको मुचुलिन्दः (മഞ്ചാടി). रात्रावुदुम्बराश्रिते प्रातः स्रुते तस्मिन् जले तैलप्रस्थं पलाशादीनां निर्यासैर्वल्कलैश्च पिष्टैर्युक्तं पचेत् । ततस्तैलात् स्नेहपिचुं योनौ निधापयेत् । कषायद्रव्यैः सेचनोपयोगिभिः सशर्करैः सेचनं कुर्वीत । अनेन स्नेहपिचुना सेचनान्ते सप्ताहं प्रयुक्ते न पिच्छिलादिगुणा योनिः क्षिप्रं शुध्यति अपत्यं च लभते । चिरदुष्टा चिरकालदुष्टा । पिच्छिलादित्वं कफादिकृतम् । इति जर्जटः ॥

उदुम्बरस्यदुग्धेन षट्कृत्वोभावितात्तिलात् ।
तैलं क्वाथेन तस्यैव कार्यं धार्यं च पूर्ववत् ॥

उदुम्बरस्रुतेषु क्षीरेषु षड्वारान् भावितात्तिलात् पीडितात्तैलं तस्यैवोदुम्बरस्यैव क्वाथेन कार्यमिति साध्यम् । धार्यं च पूर्ववदिति स्नेहपिचुं योनौ निधापयेत् कषायद्रव्यैः सेचनोपयोगिभिः सशर्करैः सेचनान्ते च स्नेहं पिचुना योनौ धार्यम् । [धार्यं च पूर्ववत् पिचुमित्यर्थः । इति जर्जटः ॥ ]

धातक्यामलकीपत्रस्रोतोजमधुकोत्पलैः ॥
जम्ब्वाम्रसारकासीसलोध्रकट्फलतिन्दुकैः ।
सौराष्ट्रिका डाडिमत्वगुदुम्बरशलाटुभिः ॥
अक्षमात्रैरजामूत्रे क्षीरे च द्विगुणे पचेत् ।
तैलप्रस्थंतदभ्यङ्ग पिचुवस्तिषु योजयेत् ॥
शूनोत्तानोन्नतास्तब्धापिच्छिलास्राविणीतथा।
विप्लुतोपप्लुतायोनिःसिध्येत्सस्फोटशूलिनी ।

धातकीपत्रादिभिस्तैलप्रस्थं पचेत् तच्च तैलमभ्यङ्गादिषु योजयेत् । तेन च शूनत्वादिगुणा योनिः सिध्येत् [सौराष्ट्रिका तुवरमृत्तिका । शूना उन्नता इति अन्तर्मुखी सूचीमुखीचोच्यते । अथवा दोषारब्धं शूनोन्नतत्वम् । इति जर्जटः । ] [ अक्षमात्रैरक्षप्रमाणैर्धातक्यादिभिरजामूत्रप्रस्थेन क्षीरद्विप्रस्थेन च सह तैलप्रस्थं पचेत् । तत्तैलमभ्यङ्गे पिचुनिक्षेपणे बस्तिकर्मणि च योजयेत् - तथा प्रयोजिते सति शूनत्वादियुक्ता योनिः सिध्येत् शमं प्राप्नोति ॥ ]

अर्कनिम्बाम्रकोशाम्र विल्वबूकधवोद्भवैः ।
करीराजिङ्गिणीजम्बू करञ्जार्जुनशिग्रुजैः ॥
पलाशसिध्रकोत्थैश्च कषायैर्धावनं परम् ।
शुक्तशीधुमधून्मिश्रैर्योनेःस्रावनिवारणम् ॥

अर्काद्युद्भवैर्यथालाभं कषायैस्तथा करीरादिजैस्तथा पलाशसिध्रकोत्थैश्च कषायैः सर्वैश्च

शुक्तादिभिश्रैर्योनेर्द्धावनं क्षालनं परं श्रेष्ठं स्रावनिवारणम् । कोशाम्रः क्षुद्राम्रनामकः । जिङ्गिणी मञ्जिष्ठा । मिध्रकः सिन्दुवारकः । बूकः ऊरुबूकः आदिलोपात् एरण्डः । पुल्लास उत्तरापथे । शुक्तं चुक्रम् । इति जर्जटः ॥ ]

**कुर्यात् सतक्रगोमूत्रशुक्तैर्वा त्रिफलारसैः ॥**

अथवा त्रिफलारसैस्तक्रादियुक्तैर्द्धावनं कुर्यात् । [योनिव्यापत्स्वनवरतशीलनीयान्याह ॥]

**यवान्नमभयारिष्टं शीधुं तैलं च शीलयेत् ।**
**पिप्पल्ययोरजःपथ्यां प्रयोगांश्च समाक्षिकान् ॥**

योनिव्यापत्सु यवान्नादिकं शीलयेत् । अभयारिष्टमर्शश्चिकित्सितोक्तम् । रसायनायुक्तांश्च पिप्पल्यादिप्रयोगान् समाक्षिकान् शीलयेत् । माक्षिकोपेतान् पिप्पलीप्रयोगा नयो रजःप्रयोगान् पथ्याप्रयोगांश्च शीलयेत् सर्वकालं भजेत् ॥ ]

**रोहीतकजटाकल्कं पाण्डुरेऽसृग्दरे पिबेत् ।**
**धात्रीमज्जोथवा कल्कं सितामाक्षिकसंयुतम् ॥**
**मधुनामलकीचूर्णं रसं वा प्राशयेत् सिते ।**
**सलोध्रवल्केन वटत्वक्कषायेण धावयेत् ॥**
**आस्रावेक्षौमपट्टान्वा भावितांस्तेन धारयेत्**
**प्लक्षत्वक्चूर्णपिण्डं वा धारयेन्मधुनाकृतम् ॥**
**योन्या स्नेहाक्तयालोध्र प्रियंगुमधुकस्य वा ।**
**धार्यामधुकृतावर्तिःकषायाणां च भूरिशः ॥**
**स्रावच्छेदार्थमभ्यक्तां धूपयेद्वा घृताप्लुतैः ।**
**सरळागुल्गुलुयवैः सतैलैः कटुमत्स्यकैः ॥**

सुबोधम् । रोहीतकजटाकुशाल्मलीमूलम् । सिते शुक्लेऽसृग्दरे आमलकाच्चूर्णं वा रसं वा मधुना सह प्राशयेत् । आमलकएवामलकी ।

तत्रैवास्रावे वटत्वचः कषायेण सलोध्रवल्केन प्रक्षाळनम् । अथवा तेनैव प्रक्षाळनकषायेण भावितान् क्षौम नक्तकान् योनौ धारयेत् । अथवा स्नेहेनाभ्यक्तया योन्याप्लक्षत्वक्चूर्णेन मधुना कृतं पिण्डं लोध्रादिकस्य चूर्णेन मधुना कृतं पिण्डं वा धारयेत् । सुबोधम् । अथवा कटुमत्स्यकैः सतैलैर्धूपयेत् ॥

[योनिव्यापत् प्रसङ्गात् बैभत्स्य जनकत्वेन तद्वत् पीडाकराणां पैच्छिल्यदौर्गन्ध्यादीनां चिकित्सामाह ॥ ]

**कासीसंत्रिफलाकाङ्क्षीसाम्रजंब्वस्थिधातकी ।**
**पैच्छिल्ये क्षौद्रसंयुक्तश्चूर्णोवैशद्यकारकः ॥**

कासीसादिभिर्द्धातक्यन्तैः कृतश्चूर्णः क्षौद्रेणयुक्तो योनौ पैच्छिल्ये युक्तो वैशद्यकारकः । काङ्क्षी सौराष्ट्री । आम्रजम्बुनोः फलास्थि ॥

**पलाशधातकी जम्बू समङ्गामोचसर्जजः ॥**
**दुर्गन्धे पिच्छिलेक्लेदे स्तम्भनश्चूर्ण इष्यते ।**
**आरग्वधादिवर्गस्य कषायः परिषेचनम् ॥**

दुर्गन्धादियुक्ते क्लेदे स्रवति पलाशादिजश्चूर्णः स्तम्भन इष्यते । तत्रैवाऽऽरग्वधादिवर्गस्य कषायः परिषेचनम् ॥

**स्तब्धानांकर्कशानां च कार्यं मार्दवकारकम् ।**
**धारणं वेशवारस्य कृसरा पायसस्यवा ॥**

स्तब्धानां योनीनां कर्कशानां च मार्दवकारकं कर्मकार्यम् । किं तदित्याह । वेशवारस्य कृसरायाः पायसस्य वा धारणम् । [स्तब्धानां पुंसङ्गमाद्यसमर्थानां कर्कशानां कठिनस्पर्शानां च योनीनां वेशवारस्य कृसरायाः । कृसरा सा तु विज्ञेया या कृता तिलतण्डुलैरित्युक्तलक्षणायाः पायसस्यपयस्संस्कृतान्नस्य च धारणं कार्यम् ॥

**दुर्गन्धानां कषायःस्यात्तैलं वा कल्क एव वा।**
**चूर्णो वा सर्वगन्धानां पूतिगन्धापकर्षणः॥**

दुर्गन्धानां योनीनां सर्वगन्धद्रव्याणां कषायः पूतिगन्धापकर्षणःस्यात्। एतेषामेव वा तैलमेतेषामेव वा कल्क एतेषामेव वा चूर्णः। दुर्गन्धयुक्तानां प्रकरणवशाद्योनीनां सर्वगन्धानां सर्वेषां कुष्ठचन्दनोशीरादिगन्धद्रव्याणां कषायः तेन परिषेकप्रक्षाळनादिकम्। तैलं सर्वगन्धानां कल्ककषायविपकं तेन सेकलेपादिकम्। वाशब्दो विकल्पार्थः। कल्कस्तेषां कल्केनैव प्रलेपो वा। चूर्णस्तेषामेव चूर्णेनावकिरणं वा पूतिगन्धस्य दुर्गन्धस्यापकर्षणो नाशनः स्यात्॥]

[सर्वेषां सामान्येन वस्तिसाध्यत्वात्तद्रव्याण्याह॥]

**श्लेष्मळानां कटुप्रायाःसमूत्रावस्तयो हिताः**
**पित्ते समधुकक्षीरा वाते तैलाम्लसंयुताः।**
**सन्निपातसमुत्थायाःकर्मसाधारणं हितम्॥**

श्लेष्मळानां योनीनां कटुकद्रव्यप्रायाः समूत्रावस्तयो हिताः। पित्ते मधुकक्षीरयुक्ता वस्तयः। वाते तैलेनाम्लैश्च मद्यादिभिः। सान्निपानिकीनाम या व्यापत् तस्याः सकलसाधारणं कर्म हितम्। [सन्निपातसमुत्थायाः कर्मसाधारणं यद्वातकफपित्तजासु योनिव्यापत्सु तत्समस्य सर्वम्। इति जर्जटः।] [श्लेष्मळानामिति। वस्तय उत्तरवस्तयः हिताः। एकस्मिन्नेवदिने द्वित्रिवारप्रयोक्तव्यत्वात् बहुवचनोक्तिः। सन्निपातदुष्टायां योनौ साधारणं सममलघ्नं कर्म हितम्। नहि वाताद्दते योनिर्वनितानां प्रदुष्यतीत्यादिवचनाच्चानिलस्य योनिव्यापदिविशेषेण प्राबल्ये सिद्धेप्यत्रस्तम्भकार्कश्यक्लेदपैच्छिल्यदौर्गन्ध्यप्रस्तावानन्तरमुत्तरवस्तिद्रव्यस्य कफादिक्रमकथनेनैतेषु काठिन्यविस्रादिगुणयुक्तयोः कफपित्तयोर्विशेषकारणत्वं द्योत्यते वस्तिकर्मसाध्यत्वं च॥]

[उपसंहरन्नाह॥]

**एवं योनिषु शुद्धासु गर्भं विन्दन्ति योषितः।**
**अदुष्टे प्राकृते बीजे बीजोपक्रमणे सति॥**

एवमनन्तरोक्तेन प्रकारेण योनिषु शुद्धासु योषितो गर्भं विन्दन्ति। कदेत्याह। अदुष्ट इति प्राकृते बीजे अदुष्टे अदुष्टस्वभावे सति बीजस्यचाद्यन उपक्रम आचरति सति। [एवमनन्तरोक्तेनोपचरणेन योनिषु शुद्धासु रोगशान्त्यानीरोगासु प्राकृते नैसर्गिके बीजे आर्तवाख्ये अदुष्टे वाताद्यदूषिते बीजोपक्रमणे आर्तवसामर्थ्यकरैः पूर्वोक्तैस्तैलेन नारीं पित्तळैश्च मांसैरित्याद्युपक्रमैरुपक्रान्ते सति योषितो नार्यः गर्भं विन्दन्ति लभन्ते। अदुष्ट इत्युक्त्या प्रकृत्या दुष्टस्य तु क्रियाभिरसाध्यत्वं द्योत्यते।] [अदुष्टे प्राकृते बीजे जीवोपक्रमणे सति। इति चरकपाठः। अदुष्टे बीजे प्राकृते प्रकृतिमापन्ने किमवश्यं गर्भसम्भव इत्युच्यते जीवोपक्रमणे सति। बीजशब्देन द्वयमङ्गीकृतं शुक्लं शोणितं च जीवश्चात्र कर्मपुरुष उक्तः शारीरेष्वस्ति च सत्वमौपपादिकं यज्जीवस्पृक्शरीरेणाभिसम्बध्नातीत्यादि। ततश्च सामग्रीजनकम्। नह्येकोवर्तते भावो वर्ततेनाप्यहेतुक इत्याम्नानात्। इति जर्जटः॥]

प्रसङ्गेनोच्यते। [रजश्शुद्धिर्योनिगर्भाशयशोधनादिना उक्ता शुक्लशोधनायाह इति

जर्ज्जटः । ] [पुंबजिस्याप्यवश्यमुपश्रमणीयत्व-माह ॥]

**पञ्चकर्मविशुद्धस्य पुरुषस्यापिचेन्द्रियम् ।**
**परीक्ष्यवर्णैर्दोषाणां दुष्टं तद्घ्नैरुपाचरेत् ॥**

पञ्चकर्मविशुद्धस्य पुरुषस्यापीन्द्रियं शुक्रं दुष्टं दोषाणां वर्णैः सूत्रोक्तैः परीक्ष्य तद्घ्नैः पुरुषबीजदोषघ्नैरुपाचरेत् । [इन्द्रियशब्दोऽत्रशुक्रे वर्तते शुक्रमपि दोषवर्णैः परीक्ष्य दुष्टं तद्वातादिघ्नैरुपाचरेत् । ननु शुक्रदोषभेषजं प्राक्शारीरेऽभिहितं येन पुनस्तद्घ्नैरुपाचरेदिति नाप्यनुक्तमवधारयितुं शक्यं चिकित्सितुं वा प्रधानश्चेदं कार्यसपत्यानिबन्धनत्वात् । उच्यते । उक्तमेव । परीक्ष्यवर्णैर्दोषाणामित्यनेनेन्द्रियस्य वेदनासंस्थानान्युक्तान्येव । पञ्चकर्मोपदेशेन च सकल—शरीरशुद्धिर्वाजीकरणानि च क्षीणदुष्टविशुष्कस्याप्यायनप्रसादनवर्द्धनान्युक्तान्येव । शारीरेषु च सूत्रमात्रेण दर्शितएव पन्थाः । इति जर्ज्जटः । ] [पञ्चकर्मविशुद्धस्य पञ्चभिर्वमनविरेचनवास्ति—नस्यासृङ्मोक्षैः कर्मभिर्विशुद्धस्य कृतविशोधनस्य पुरुषस्याऽपि न केवलं स्त्रिया एव इन्द्रियं शुक्राख्यं बीजं दोषाणां वर्णैरासितपीतपाण्डुत्वादिभिः परीक्ष्य यथावदवबुध्य तत्र दुष्टं वातादिदूषितं तद्घ्नैर्बीजदूषकदोषघ्नैरुपाचरेत् चिकि—त्सेत ॥ ]

[ इहोक्तयोः शुक्रार्तवोपक्रमयोरुभयोरपि साधारणं कञ्चित् घृतयोगमाह ॥ ]

**मञ्जिष्ठाकुष्ठतगर त्रिफलाशर्कराबचा ।**
**द्वे निशे मधुकं मेदा दीप्यकः कटुरोहिणी ॥**
**पयस्याहिंगुकाकोली वाजिगन्धाशतावरी ।**
**पिष्ट्वाक्षांशंघृतप्रस्थं पचेत् क्षीरचतुर्गुणम् ।**
**योनिशुक्रप्रदोषेषु तत्सर्वेषु प्रशस्यते ॥**
**आयुष्यं पौष्टिकं मेध्यं धन्यं पुंसवनं परम् ।**
**फलसर्पिरिति ख्यातं पुष्पे पीतं फलाय यत् ।**
**म्रियमाणप्रजानां च गर्भिणीनां च पूजितम् ।**
**एतत्परं च बालानां ग्रहघ्नं देहवर्द्धनम् ॥**

॥ इत्युत्तरे एकोनचत्वारिंशोऽध्यायः ॥

मञ्जिष्ठेत्यादिना फलसर्पिः सुबोधम् । तत्सर्वेषु योनिशुक्रप्रदोषेषु प्रशस्यते । आयुष्यादिगुणं च । फलसर्पिरिति ख्यातम् । फलसर्पिरित्यस्य नाम्नो भङ्ग्यार्थं उच्यते । पुष्पे पीतं यत्फलाय प्रजाख्याय भवतीति । [मञ्जिष्ठादीन् प्रत्येकमक्षांशमक्षप्रमाणं पिष्ट्वा कल्कीकृत्य चतुर्गुणक्षीरोपेतं घृतस्य प्रस्थं पचेत् । तत्सर्पिर्म्मात्रयोपयुक्तं सर्वेषु योनिशुक्रप्रदोषेषु विंशतिविधेषु योनिव्यापत्सु वातादिकुणपग्रन्थिपूयक्षीणमलाह्वयेषु शुक्रार्तवदोषेषु च प्रशस्यते । आयुष्यमायुष्करम् । पौष्टिकं देहपुष्टिकरम् । मेध्यं बुध्युन्मेषकरम् । धन्यं भाग्यकरम् । पुंसवनं पुरुषप्रजाकरणसमर्थम् । फलसर्पिरिति प्रसिद्धं पुष्पे आर्तवकाले पीतं फलाय सत्पुत्रजननाय भवति यस्मात् फलसर्पिरिति संज्ञेत्यर्थः । म्रियमाणप्रजानां पुनःपुनर्मृतप्रजानां गर्भिणीनां सञ्जातगर्भाणां च पूजितं श्रेष्ठम् । एतत् फलसर्पिः बालानां ग्रहघ्नं ग्रहपीडाहरं परमतिशयेन देहपुष्टिजनकं च ॥ ]

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे एकोनचत्वारिंशोऽध्यायः ॥

॥ इति शल्यतन्त्रंनाम पञ्चममङ्गं समाप्तम् ॥

# चत्वारिंशोऽध्यायः ।

## विषप्रतिषेधम् ॥

आगन्तुप्रसङ्गादुक्तशिष्टत्वाद्विषचिकित्साया अवसरस्तस्याश्चानेकप्रकारत्वेन वक्ष्यमाणत्वात् सामान्येन चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ॥

**अथातो विषप्रतिषेधं नामाध्यायं व्याख्यास्यामः इति यः ॥**

[अथात इत्यादि । विषप्रतिषेधं स्थावरजङ्गमादिभेदेनानेकविधस्य विषस्य प्रतिषेधं चिकित्सितं निदानाद्विना प्रतिषेधस्य दुष्करत्वात् स निदानमित्यर्थः । शेषं पूर्ववत् । तत्र पूर्वं विषस्योत्पत्तिं दर्शयति । ] इह हि विषचिकित्सा प्रस्तुता । विषस्य च स्वरूपे ज्ञाते तद्व्याधीनां हेत्वादिकं ज्ञेय मतः स्वरूपमेव प्रथममितिहासरूपणोच्यते ॥

**पुरा खल्वमृतार्थं सुरासुरैः सलिलनिधेर्विमथ्यमानात् क्रोध इव रूपवान् सत्वं समुद्बभूव कृष्णमनलनयनमूर्ध्वप्रदीप्तकेशं दंष्ट्राकराळं भैरवारावरूपम् । तद्दर्शनादेव यतो देवदानवाश्च विषण्णास्तस्मात्तद्विषसंज्ञामवाप॥**

पुरा खल्वित्यादि । पुरा कस्मिंश्चित् काले सुरैश्चासुरैश्चाऽमृतार्थं विमथ्यमानाज्जलनिधे रूपवानिव क्रोधः कृष्णत्वादिगुणं सत्वं समुद्बभूव । तस्य सत्वस्य दर्शनमात्रादेव देवा दानवाश्च यतो विषादं प्राप्तास्तस्मात्तत् सत्वं विषसंज्ञा मन्वर्थतां चा वाप प्राप ॥

**तत् सहसैव सर्वभूतानि निर्दग्धुकाममुपयोगविशेषैर्विषममृततां विनयमानो ब्रह्मानुनीयौषधिषु न्यस्तवान् ॥**

उद्भूतं तद्विषं सहसैव सर्वभूतानि निर्दग्धुकामं यदा तदैतदमृततां प्राप्नोतीत्युपयोगविशेषयोग्यतां तस्य कुर्वन् ब्रह्मा तद्विषमौषधिषु विशिष्टास्वेवन्यस्तवान् ॥

**ततस्तत् स्थावरासु मूर्त्तिष्वधिवसनात् स्थावरमित्युच्यते ॥**

ततस्तद्विषं स्थावरास्वौषध्याख्यासु मूर्त्तिष्वधिवसनात् स्थावरमित्युच्यते । इति स्थावरस्य विषस्य सम्भवः ॥

**जङ्गमं पुनः पृथिव्या भारावतारार्थमुरगादिरूपेण । विष्णुर्निर्ममे ॥**

जङ्गमं तु विषं भगवान् विष्णुर्निर्ममे निर्मितवान् । किमर्थमित्याह । पृथिव्या भारावतारार्थं पृथवीतो भारोवतरत्विति कृत्वा । अत्र भगवानेव प्रमाणम् ॥

**तयो स्थावरं मूल पत्र पुष्प फल त्वक्सारनिर्यासक्षीरधातुकन्द भेदाद्दशाधिष्ठानम् ॥**

तयोः स्थावरजङ्गमविषयोर्मध्ये स्थावरं विषं मूलादिभेदेन दशाश्रयम् ॥

**तत्र मूलविषाणि क्लीतनकाश्वमारकगुञ्जा सुगन्धकगर्गरककर्करकरघाटकादीनि । पत्रविषं काळपत्रिका लम्बा वरदकरम्भार्का-**

दीनाम् । पुष्पविषं वल्ली रेणुककरम्भ महाकरम्भादीनाम् । फलं कुमुद्वतीरेणुकाकरम्भमहाकरम्भमदनकतुवरकादीनाम् । त्वक्सारनिर्यासाः करककरघाटककरम्भमहाकरम्भनाराचकादीनाम् । क्षीरं कुमुद्वती दन्ती स्नुघर्कजालिनी व्याळादीनाम् । धातवो हरितालफेनाश्मभस्मरक्तप्रभृतयः । कन्दजानि तु हालाहलकाळकूटवत्सनाभश्रृङ्गीसार्षपजालककर्दमकवैराटकमुस्तकमुष्ककसाक्तुकक्रौञ्चकवाळकमहाविषपुण्डरीकगालवमूलकमर्कटकर्कटककरवीरकेन्द्रायुधसङ्कोचक लाङ्गलकतैलपेय कुशपुष्पके तु पुष्पकरोहिषाञ्जनाभकादीनि ॥

तत्र क्लीतनकादीनिमूलविषाणि । सुबोधम् । सर्वाणि पठिताऽपठितानि विषाश्रयाणि प्रसिध्यैव भारतदेशेषु ज्ञायन्ते । अस्माभिस्तु-त्वव्याप्तिबन्धनभयान्नलिख्यन्ते । शास्त्रकृता तु मूलादिमुद्रयैव तेषां जातिसंग्रहः कृतः । [मूलादिविषाणां यत्नपरैरपि ज्ञातुमशक्यत्वात्तानि हिमवत्प्रदेशे किरातशबरादिभ्यो ज्ञेयानीति निबन्धसंग्रहाख्यायां सुश्रुतटीकायाम् ॥ ]

तत्र मूलविषैरुपयुक्तैरुद्वेष्ट न प्रलापमोहाः प्रजायन्ते । पत्रविषैर्जृम्भोद्वेष्टनश्वासाः । पुष्पविषैश्छर्द्याध्मानमोहाः । फलविषैर्दाहमुष्कशोफौ । त्वक्सारनिर्यासविषैः प्रसेकास्यदौर्गन्ध्यपारुष्यशिरोवेदनाः । क्षीरविषैर्जिह्वागौरवं शकृत् भेदश्च । धातुविषैस्तालुदाहमूर्च्छा हृदयपीडाः । सर्वमेव च स्थावरं ज्वरहिध्मादन्तहर्षहनुस्तम्भगळग्रहफेनवमनारुचिश्वासमूर्च्छाः करोति विशेषेण कन्दजम् । तध्यति तीक्ष्णत्वादाशुकारितरम् । इतरत्तु-प्रायः कालान्तरप्राणहरम् ।'

तत्र मूलविषैरित्यादिना दशानामुपयोगक्रमेण व्याधिकीर्तनम् । सुबोधम् । उद्वेष्टनं वेष्टनमिवाङ्गानाम् । मुष्कशोफो वृषणशोफः । धातवस्तु रक्तादयः प्राणिविशेषेण विषं भवन्ति । सर्वमेव च दशविधमपि स्थावरं विषं ज्वरादिकं करोति । व्याख्यासमम् । इतरत्तु कन्दजाताद्न्यन्नवविधम् । [उपयोगादिवसादन्यो द्विव्रसपक्षमासादिः कालान्तरमिति निबन्धसंग्रहे ॥]

सर्वमपि चैतन्मौलमित्युच्यते मूलाश्रयत्वात् पत्रादीनाम् ॥

सर्वमपि चैतत् स्थावरं विषं मौलमित्युच्यते पत्रादीनां मूलाश्रयत्वात् । नहि यन्मूले नाश्रितं तत्पत्रादिषु भवति । इत्युक्तं स्थावरम् ॥

अनन्तरं जङ्गममुच्यते ॥

जङ्गमस्यत्वाश्रयाः षोडशदृष्टिनिश्वासस्पर्शदंष्ट्रा मुखनखास्थिमूत्रपुरीषशुक्रार्तव लालाशूकपित्तशोणितशवानि । तानि पुनः सर्पकीटकणभाद्याश्रितानि । तत्कृतान्यथास्वमामयान् साधनं चोत्तरत्रवक्ष्यति ॥

जङ्गमस्य विषस्य दृष्ट्यादीनि शवान्तानि षोडशाश्रयाः । तानि दृष्ट्यादीनि सर्पाद्याश्रयाण्येव विषाधिष्ठानानि विज्ञेयानि । तत्कृतान् जङ्गमाश्रय विषकृतान् । यथास्वमिति पृथग्भेदमामयांस्तत्साधनं चोत्तरत्राऽध्यायेषु वक्ष्यति ॥

सर्वं च प्रायशो जङ्गमं निद्रातन्द्राक्लमदाहरोमहर्षशोफपाकातिसारान् करोति ॥

सर्वं च जङ्गमं विषं प्रायशोनिद्रादीन् करोति॥

द्विविधमपिचैतद्विषं तीक्ष्णोष्णरूक्षविशदसूक्ष्मव्यवाय्याशुकारिविकाषिलघ्वव्यक्तरसत्वैर्दशभिर्गुणैर्युक्तमपाकि च ॥

द्विविधं स्थावरं जङ्गमं च विषं तीक्ष्णादिभिर्दशभिर्गुणैर्युक्तमपाकि च भवति । [अनेकरससम्भवादेकस्यापिरसस्याव्यक्तत्वमस्याऽव्यक्तरसत्वे हेतुः । अपाकित्वं तु मन्त्रतन्त्राभ्यामन्तरेण पाकाभावात् । पाको वीर्यहानिः । पक्वेप्यन्ने विषस्या पक्वस्यैवोपलब्धेः । मन्त्रतन्त्राभ्यामपाकएवास्यकारणान्तरे पुनः कोपहेतुः ॥ ]

एभिश्च गुणैर्यत् करोति देहे तत्तैक्ष्ण्यौष्ण्यात् पित्तमित्यादिना क्रमेणोच्यते ॥

तत्र तैक्ष्ण्यौष्ण्यात् पित्तं रक्तं च प्रकोपयति । रौक्ष्याद्वायुम् । वैशद्यादसक्तं वेगं प्रसरति । सौक्ष्म्याद्व्यवायित्वाच्च दोषधातु मलादीन् समस्तान् शरीरावयवाननुप्रविशति। आशुकारित्वादाशुव्यापादयति । विकाषित्वान्मर्मच्छेदेन मतिं व्यामोहयति । लाघवाद्दुर्निर्हरमव्यक्तरसत्वाच्छ्लेष्मप्रकोपनमन्नरसांश्च सर्वाननुवर्तते । अत एव च प्रयत्नेनान्नानि विषतोरक्षेदित्युक्तम् । अपाकित्वाज्जरां नो याति । तेनाभ्यवहृतमवश्यं मारयति । मन्त्रौषधबलेन चोपशमितमपि, प्रत्ययमासाद्य पुनः प्रकुप्यतीति । भवति चात्र ॥

तत्रेत्यादि सुबोधम् । अन्नस्यापि दुष्ट्या तैर्देहेन तथा वेदनात्तथा गुणत्वम् । अपाकित्वादेव च मन्त्रादिबलेनोपशमितमपि प्रत्ययं वक्ष्यमाणं कारणसामान्यमासाद्य प्राप्य पुनः प्रकुप्यतीति । गतानुगतिका ॥

[विषस्य कृत्रिमाकृत्रिमभेदं दर्शयति ॥ ]

स्थावरं जङ्गमंचेति विषं प्रोक्तमकृत्रिमम् ॥

स्थावरं जङ्गमं चेति द्विविधमपि विषमाचार्यैरकृत्रिमामिति प्रोक्तम् । [अकृत्रिमं केनाप्यनिर्मितं स्वतः सञ्जातं विषमित्यर्थः ॥ ]

कृत्रिमं गरसंज्ञं तु क्रियते विविधौषधैः ॥
हन्ति योगवशेनाशु चिराच्चिरतराच्च तत् ।
शोफपाण्डूदरोन्माददुर्नामादीन्करोतिवा ॥

कृत्रिमं तु विषं गरसंज्ञितं नानाविधैरौषधैः संयुक्तैः क्रियतेयत्तेन तच्च कृत्रिमं संयोगवशादाशु वा हन्ति चिराद्वा चिरतराद्वा । अथवा तन्न हन्ति अपि तु शोफादीन् करोति । [यद्विविधैरौषधैः क्रियते तत्तु कृत्रिमं कृत्रिमविषं गरसंज्ञं च । तत् योगवशेन तथाविधद्रव्ययोगवशात् आशु सद्य एव चिरात् चिरकालेन चिरतरादति चिरकालेन च हन्ति मारयति । शोफादीन् करोति वा ॥ ]

अपिचैतद्विषं सर्वं तीक्ष्णाद्यैरन्वितं गुणैः ।
वातपित्तोत्तरं नॄणां सद्यो हरति जीवितम् ॥

अपिचेत्यनुक्रान्त समुच्चये । व्याख्यासमम् । [ तीक्ष्णादिगुणयुक्तमुद्रिक्तवातपित्तमेतत् सर्वं विषं नराणां जीवितमाश्वेव हरति । तीक्ष्णादिगुणयोग एव वातपित्तोद्रेके हेतुः ॥

विषं हि देहं सम्प्राप्य प्राग्दूषयति शोणितम् ॥
कफपित्तानिलांश्चानुसमदोषंसहाशयान् ।
ततो हृदयमास्थाय देहोच्छेदाय कल्पते ॥

एतच्च विषं शोणिते दूषिते अनुसमदोषमन्यूनाधिक्यान्यतम विकारान् कृत्वा सहाशयान् कफादीन् दूषयति । आशयानपि तेषां तद्विषं दूषयतीत्यर्थः । तत इति पश्चात् । [विषं पीतजग्धदिग्धा हतान्यतमत्रेन देहं सम्प्राप्य प्राक्पूर्वं रक्तं दूषयति । अनन्तरं समदोषं तुल्यदोषं समबलदोषमित्यर्थः । सहाशयानाशयसहितान् आशयः कफाद्याशयः । कफपित्तानिलान् दूषयति । ननु तीक्ष्णादिगुणयुक्तस्य विषस्य पूर्वं रक्तकोपित्वं पश्चाद्युगपदेव त्रिदोषकोपित्वं चेति यदुक्तं तदयुक्तमिव मन्ये दोषा दुष्टा रसैर्धातून् दूषयन्तीत्यादिवचनात् । अत्रोच्यते । रक्तमण्वपितु प्राप्तं वर्द्धतेतैलमम्बुवदित्यादि वक्ष्यमाणत्वात् तद्गतं विषं वातपित्तकफजुष्टशुद्धभेदेन चतुर्विधं सर्वशरीरगं रक्तं द्रागेव दूषयति तस्माद्रक्तदुष्टेरनन्तरं युगपदेव दोषत्रयकोपो युज्यत एव । ततोनन्तरं हृदयमास्थाय सशोणितैर्दोषैः सह हृदयं प्राप्य सर्वस्रोतांसि बध्वा देहनाशाय प्रवर्तते ॥

शरीरं दूषिते रक्ते सर्वं चिमिचिमायते ।
कोठः समण्डलः स्वेदो रोमहर्षश्च जायते ॥
क्षुद्रकीटा इवाङ्गेषु विसर्पन्तीति मन्यते ।
विनामयति गात्राणि जृंभते शिशिरप्रियः ॥
व्यापिनस्तस्य दुष्टस्य द्रुतस्य विषतेजसा ।
वातादयो वशं यान्ति बलिनोप्यबला इव ॥

शरीरमित्यादिना रक्तादौ दूषिते क्रमेण लक्षणम् रक्ते दूषिते सर्वं शरीरं चिमिचिमायते कोठादिकं च जायते विषवांश्चाङ्गेषु सूक्ष्माः कीटा इव विसर्पन्तीति मनसा मन्यते । शीतप्रियश्च सन् गात्राणि विनामयति । जृम्भते च । तस्येति रक्तस्य व्यापिनो दुष्टस्य च सतो विषतेजसा च द्रुतस्य वेगवतो बलवन्तोपि वातादयोऽबला इव वशं यान्ति ॥

विषं यद्दोषभूयिष्ठं तं दोषं प्राक् प्रपद्यते ।
आशये यस्य यस्यैव ततस्तदवतिष्ठते ।
तज्जान् विकारान् कुरुते यान् सर्वेषूपदेक्ष्यति ॥

तच्च विषमाश्रयद्रव्यविशेषवशेन येन च दोषेण भूयिष्ठं सदृशं तमेव दोषं प्रथमं प्रपद्यते । तत एव च भूयिष्ठत्वाद्धेतोर्यस्य यद्विशिष्टस्य दोषस्याशयेऽवतिष्ठते तज्जानेव विकारान् कुरुते । कांस्तानित्याह । यान् सर्वेषु वातादिभेदेनोपदेक्ष्यति ॥

वाताशयस्थं कुरुते तथा श्लेष्मामयानपि ।
पित्तश्लेष्माशयगतंतद्वत् पित्तकफोद्भवान् ॥

वाताशयस्थं च विषं स्वानपि विकारान् कुरुते श्लेष्माशयगतानपि । तद्वदेव पित्तश्लेष्माशयगतं पित्तकफोद्भवान् विकारान् कुरुते । तेनैतदुक्तं भवति पित्ताशयस्थं पित्तोद्भवान् कफोद्भवांश्च करोति कफाशयस्थमपि कफोद्भवान् पित्तोद्भवांश्चेति ॥

तत्रापिचोत्तमाङ्गस्थे सकोठं शूयते शिरः ॥
विशेषादक्षिकूटौष्ठ नासास्यं हृष्टदन्तता ।
तालुशोषो रुजा मूर्ध्नि वक्त्रे चिमिचिमायनम् ॥

**अर्थेषु चक्षुरादीनामप्रवृत्तिर्हनुग्रहः ।**
**इत्यन्यत्रापि च विषं स्थितमङ्गेभिलक्षयेत् ॥**

तत्रापीतिविशेषेः । उत्तमाङ्गस्थे विषे कोठसहितं शिरः शूयते । तत्राप्यक्षिकूटादिकं विशेषाच्छूयते । हृष्टदन्ततादिकं च भवति । अर्थेषु विषयेषु रूपादिषु चक्षुरादीनामिन्द्रियाणामप्रवृत्तिः इत्यनयादिशा अन्यत्राप्यङ्गे तदाश्रयैरेव विकारैर्विषं स्थितमित्यभिलक्षयेत् ॥

**व्याप्यैवं सकलं देहमुपरुध्य च वाहिनीः ।**
**विषं विषमिव क्षिप्रं प्राणानस्य निरस्यति ॥**

एवमनन्तरोक्तप्रकारेण सकलं निश्शेषं देहं व्याप्य वाहिनीश्चसिरादोषादि वाहिनीरुपरुध्य विषं क्षिप्रमेवास्य प्राणान् निरस्यतिविषमिव आघ्रानमेव वर्जयित्वास्य क्षिप्रमारणे अन्यदुपमानं न विद्यत इत्यर्थः ॥

**पीतं मृतस्यहृदये जग्धदिग्धाभि विद्धयोः ।**
**दंशे तिष्ठति भूयिष्ठं सर्वतः पिण्डितं विषम् ।**
**नाद्यादतो विशेषेण तेषां मांसं तदाश्रयम् ॥**

तच्च विषं यदा पीतं निगीर्णं भवति तदा तेन मृतस्य हृदये भूयिष्ठं तिष्ठति । विषप्राणिना तु जग्धस्य भक्षितस्य मृतस्यापि विषं दंशे दंष्ट्राभिघाते भूयिष्ठं तिष्ठति । विषदग्धेन च शस्त्रेणाभिहतस्य मृतस्याभिघाते भूयिष्ठं तिष्ठति । सर्वतः शरीरात् प्रति निवृत्य तत्रैव पिण्डितम् । अतो हेतोस्तेषां पीतजग्धदिग्धविद्धानां प्राणिनां मृतानां मांसं नाद्यात् । तदाश्रयं हृदयदंशाभिघाताश्रयं मांसं विशेषेण नाद्यात् ॥

**यथास्वं भक्षिते पीडा यथास्वं च क्रियाक्रमः ॥**

यथास्वमित्यादेरयमर्थः । येनैव दोषेणाधिकं विषं भक्षितं तद्दोषजा एव पीडा भवन्ति तद्दोषानुगुण्येनैव क्रियाक्रमः ॥

**सप्तवेगान् विषस्याहुरष्टाविति पुनर्वसुः ॥**

सर्वे आचार्या विषस्य सप्तवेगान् प्रबलशक्त्युदयक्षोभानाहुः । पुनर्वसुनामा ऋषिस्तु अष्टाविल्याह ॥

**दुष्यति प्रथमे वेगे रसश्छर्दिप्रसेककृत् ।**
**द्वितीयेस्रंचिमिचिमाजृम्भावेपथुकारितन् ॥**
**तृतीयेपिशितंकण्डू कोठमण्डलशोफदम् ।**
**दोषाश्चतुर्थे तेषुस्युर्यथायथमुपद्रवाः ॥**
**पञ्चमे दर्शनभ्रान्तिः षष्ठे हिध्मा समुद्भवः ।**
**सप्तमे स्कन्धभङ्गोस्य जायते मृत्युरष्टमे ॥**

दुष्यतीत्यादिना क्रमेण वेगानां कीर्तनम् । प्रथमे वेगे रसाख्यो धातुर्दुष्यति । स च दुष्टः छर्दिं प्रसेककृत् भवति । द्वितीये वेगे अस्रं रक्तं दुष्यति । तद्रक्तं देहे चिमिचिमादिकारि भवति । तृतीये पिशितं मांसं दुष्यति तच्च कण्वादिदम् । चतुर्थे दोषा वातादयो दुष्यन्ति । तेषु दुष्टेषु यथास्वमुपद्रवाः स्युः । पञ्चमे वेगे दर्शनभ्रान्तिर्मिथ्यादर्शित्वम् । षष्ठे हिध्मा समुद्भवः । सप्तमे अस्य विषभुक्तस्य स्कन्धभङ्गः । अष्टमे मरणम् । एवं जातूकर्णकश्यपादीनां पुनर्वसोश्चापि प्रतिपत्तिः केवलमष्टमस्तैरनुपयोगान्नाङ्गीकृतः पुनर्वसुना तु विषकार्यत्वादङ्गीकृतः ॥

**दुष्यतिप्रथमेरक्तं द्वितीये श्वयथूद्भवः ।**
**तृतीयेङ्गेचिमिचिमा चतुर्थे ज्वरमूर्च्छना ॥**

**पञ्चमे पाण्डुजिह्वास्य शोषः षष्ठे हृदिव्यथा ।**
**सप्तमे मरणं वेग इति नग्नजितो मतम् ॥**

नग्नजितो दारुवाहिनोप्यत्र दुष्यति प्रथमे रक्तमित्यादिक्रमेण सप्तवेगा इति मतम् ॥

**मूर्च्छा हृदिपरं पीडा शिरोरुगपतन्त्रकः ।**
**हिध्मा च दारुणोमर्मच्छेदो जीवितसंशयः ।**
**सप्तेतिवेगामूर्च्छाद्या विदेहपतिना स्मृताः ॥**

विदेहपतिना जनकेन मूर्च्छाद्या जीवितसंशयान्ताः क्रमोद्भवाः सप्तवेगाः स्मृताः ॥

**रक्तमांसवसास्नायुतथास्थ्याद्यास्त्रयः क्रमात् ।**
**आश्रयाः सप्तसप्तानामित्यालम्बायनोब्रवीत् ॥**

आलम्बायननामर्षिः सप्तानां वेगानां क्रमादुक्तानां सप्त आश्रया इत्यब्रवीत् । अस्थ्याद्या स्त्रयोस्थिमज्जाशुक्राख्याः । तेन प्रथमो वेगो रक्तमाश्रिते विषे भवति । द्वितीयो मांसम् । तृतीयो वसाम् । चतुर्थस्नायुम् । पञ्चमोस्थि । षष्ठो मज्जानम् । सप्तमः शुक्रमित्यर्थः ॥

**वेगान् धन्वन्तरिस्तद्वत् सर्पदष्टस्यमन्यते ।**
**स्नाववर्जं तु तत्स्थाने दोषानिच्छतिकोष्ठगान् ॥**

तद्वदित्यालम्बायनोक्तविषवेगक्रमेण धन्वन्तरिः सुश्रुतोपदेष्टा सर्पदष्टस्य वेगान् मन्यते स्नाववर्जम् । तत्स्थाने स्नावस्थाने कोष्ठगान् दोषानिच्छति । तेनैतदुक्तं भवति । आलम्बायनः स्नावस्थे विषवेगे चतुर्थो वेगो भवतीति धन्वन्तरिस्तु सर्पदष्टस्य चतुर्थो वेगः कोष्ठस्थवाताद्याश्रिते विषे भवतीत्याहेति ॥

**धात्वन्तरेषुयाः सप्तकलाःपूर्वं प्रकीर्त्तिताः ।**
**अतीत्यतासामेकैकां वेगं प्रकुरुते विषम् ॥**

धात्वन्तरेष्वस्माभिर्याः कलाः प्राक्शारीरे प्रकीर्तिताः सप्त तासां सप्तानां क्रमेणैकैकां कलामतीत्यातिक्रम्य विषं कर्तृ वेगं प्रकुरुते । तेन प्रथमामतीत्य प्रथमं कुरुते । द्वितीयां द्वितीयमिति क्रमेण सप्तानां वाच्यम् ॥

**तत्कालकल्पं कालेन कलामभ्येतियावता ।**
**ऊह्यमानं समीरेण तावद्वेगान्तरं स्मृतम् ॥**

तच्च विषं कालकल्पमस्खलितवाहि यावता कालेन समीरणेन स्वशक्त्योह्यमानं कलातः कलान्तरमभ्येति तावद्वेगान्तरं स्मृतमिति धान्वन्तरीयाः ॥

शास्त्रकारस्त्वाह ॥

**मुनिनायेनयत्तूक्तं तत्सर्वमिहदर्शितम् ॥**

येन मुनिना यदुक्तं तत्सर्वमिह मया प्रदर्शितं एवं च मुनित्वे यच्चदाह ॥

यतः, स्मर्तारो वयमागमस्य न पुनः
कर्तुं व्यवस्थां क्षमाः
क्रान्ते वर्त्मनितैर्नभावगहने
बुद्धिः प्रविच्छत्यलम् ।
पारावारदृशः करामलकवत्
पश्यन्ति भावान् सुखं
ये तेषां रसनाप्रयातुगदितुं
यद्युक्तमत्रास्फुटम् ॥

[दुषीविषलक्षणमाह ॥]

**जीर्णविषघ्नौषधिभिर्हतं वा**
**दवाग्निवातातपशोषितं वा ।**
**स्वभावतो वा न गुणैः सुयुक्तं**
**दूषीविषाख्यां विषमभ्युपैति ॥**

जीर्णमि । तदेव च विषं जीर्णत्वादिगुणयुक्तं सत् दूषीविषाख्यामभ्युपैति दूषीविषमिति नाम प्राप्नोति । जीर्णं चिरकालातीतम् । अ-

थवा विषघ्नाभिरौषधीभिः संयोगादिना हतशक्तिः । अथवा दवादिभिः शोषितम् । दवो वनदहनः । अथवा स्वभावादे वाद्यैर्यैस्तीक्ष्णादिभिर्गुणैः संयुक्तं यन्न भवतीति । [विषघ्नाभिरौषधीभिः शिरीषादि विषहरद्रव्यैः । वाशब्दस्यान्तरान्तरा प्रयोगः प्रत्येकं दूषीविषकारणत्वज्ञापनार्थः अत्र विषस्या विशेषकथनात् स्थावरजङ्गमाद्यकं सर्वमपि विषं दूषीविषाख्यां दूषीविषसंज्ञामभ्युपैति प्राप्नोति ॥ ]

वीर्याल्पभावादविभाव्यमेतत् ।
कफावृतं वर्षगणानुबन्धि ॥

एतच्च दूषीविषमुपयुक्तमपि देहे अल्पवीर्यत्वाद विभाव्यमानं भवति । कफेन चावृतं सत् स्फुटमविभाव्यमानं वर्षगणमनुबध्नाति । [अभिभाव्यमलक्ष्यम् । वर्षगणानुबन्धि अनेकसंवत्सरस्थायिस्यात् इति शेषः ॥ ]

तेनार्दितोभिन्नपुरीषवर्णो
दुष्टास्ररोगीतृड्ररोचकार्तः ।
मूर्च्छन् वमन् गद्गदवाग्विमुह्यन्
भवेच्च दूष्योदरलिङ्गजुष्टः ॥

तेन च दूषीविषेणार्दितः पीडितो भिन्नपुरीषादिगुणो भवति । पुरीषं भिन्नमतिप्रवृत्तम् । वर्णात् भिन्नो वियुक्तः । दूष्योदरलिङ्गानि निदानोक्तानितैर्जुष्टः सहितः । [तेन वपुष्य नेकसंवत्सरस्थेन दूषीविषेण । भिन्नवर्णोव्यक्तशुक्लरक्तादिवर्णः । दुष्टास्ररोगी दुष्टासृङ्निमित्तानेकरोगयुक्तः । तृषा अरोचकेनचार्तः पीडितः । वमन् सदा वमनयुक्तः । गद्गदवागस्पष्टवचनः । विमुह्यन् मोहमुपगतः मोहं वैचित्यम् । दूष्योदरं सन्निपातोदरम् ॥ ]

[तस्य दूषीविषस्यान्तराधिष्ठानविशेषजनितं रोगविशेषं दर्शयति ॥ ]

आमाशयस्थेकफवातरोगी
पित्ताशस्थेनिलपित्तरोगी ।
भवेन्नरोध्वस्थशिरोरुहाङ्गो
विलूनपक्षः स यथा विहङ्गः ॥
स्थितंरसादिष्वथवाविचित्रान् ।
करोति धातुप्रभवान्विकारान् ॥

यदा आमाशये विषं तिष्ठति तदा कफवाताभ्यां रोगा भवन्ति । यदा पित्ताशये तिष्ठति तदा अनिलपित्ताभ्यां रोगा भवन्ति । सनरोध्वस्तशिरोरुहो ध्वस्ताङ्गश्च भवति यथा विलूनपक्षो विच्छिन्नपत्रो विहङ्गः पक्षी । अथवा कोष्ठाद्धातुषु सङ्क्रान्तं विचित्रान् धातुप्रभवान् विकारान् करोति ॥

[दूषीविषस्यान्वर्थतामाह ॥ ]

प्राग्वाताजीर्णशीताभ्र दिवा स्वप्नाहिता शनैः ।
दुष्टं दूषयते धातू नतो दूषीविषं स्मृतम् ॥

तच्च दूषीविषमिति नामतः स्मृतं यतस्तदेवं स्थितमपि प्राग्वातादिभिर्दुष्टं सद्धातून् दूषयतीति । विषं प्रग्वातादिभिर्दुष्टं धातून् रसादीन् दूषयते प्राग्वातः पुरोवातः । यतः अतोस्माद्धेतोर्दूषीविषमिति संज्ञितम् ॥ ]

पूर्वं हि मुनिमतानुसारेण सामान्येन विषमुक्त्वैकीयमतेन ग्रन्थकृत् स्थावरविषस्य सप्तसु वेगेषु लक्षणं चिकित्सार्थं चिकीर्षुरिदमाह ॥

**स्थावरस्योपयुक्तस्य पूर्वे वेगेथजायते ।**
**जिह्वायाःश्यावतास्तंभोमूर्च्छात्रासःक्रमोवमिः।**

स्थावरस्येत्यादि वम्यन्तं प्रथमे वेगे । [अथेत्यानन्तर्ये उपयुक्तस्य उपयोजितस्य अशितस्येत्यर्थः । स्थावरस्य स्थावरविषस्य पूर्वे प्रथमे वेगे जिह्वाश्यावत्वादिकं जायते । स्तम्भो गात्रस्तम्भः । मूर्च्छा मोहः । त्रासो भयाचकितत्वम् । क्लम इन्द्रियसादः वमिर्वमनम् ॥ ]

**द्वितीयेवेपथुः स्वेदो दाहः कण्ठे च वेदनाः ।**
**विषं चामाशयं प्राप्तं कुरुते हृदि वेदनाम् ॥**

हृद्वेदनान्तं द्वितीये वेगे । [द्वितीये वेगे वेपथ्वादिकं लिङ्गम् । विषं चामाशयं प्राप्य हृद्यति पीडां करोति । कण्ठे वेदना अन्नाभ्यवहारासहत्वादिकम् । चशब्दात् पूर्वोक्ता जिह्वाश्यावतादयश्च ॥ ]

**तालुशोषस्तृतीये तु शूलं चामाशये भृशम् ।**
**दुर्बले हरिते शूने जायेते चास्यलोचने ॥**

शूने लोचनइत्यन्तं तृतीये । [तृतीये विषवेगे तुशब्दो विशेषद्योतकः । आमाशये भृशमतिशयेन शूलं आमाशये भृशमित्युक्तत्वात् पक्वाशयेपि शूलं द्योत्यते । चशब्देन पूर्वोक्तानां ग्रहणम् । अस्योपयुक्त विषस्य पुरुषस्य लोचने नेत्रे दुर्बले बलहीने दर्शना समर्थ इत्यर्थः । हरिते हरितवर्णे । शूने शोफयुक्ते जायेते ॥ ]

**पक्वाशयगतेतोद हिध्मा कासान्त्रकूजनम् ।**
**चतुर्थे जायते वेगे शिरसश्चातिगौरवम् ॥**

चतुर्थे वेगे पक्वाशयगते सति विषे तोदादिकं शिरसश्चातिगौरवं जायते । [चशब्देनान्याङ्गेष्वपि गौरवं द्योत्यते । ] पूर्वोक्तसमुच्चयार्थश्चशब्दः ॥

**कफप्रसेकोवैवर्ण्यं पर्वभेदश्चपञ्चमे ।**
**सर्वदोषप्रकोपश्च पक्वाधाने च वेदना ॥**

कफप्रसेकादिपक्वाधानवेदनान्तं पञ्चमे । [अत्र पूर्वचकारः पूर्वोक्तानां समुच्चयार्थः ॥ ]

**षष्ठेसंज्ञाप्रणाशश्च सुभृशं चातिसार्यते ॥**

संज्ञाप्रणाशोतिसारश्च षष्ठे । [संज्ञाप्रणाशश्चेतनानाशः चशब्दः पूर्ववत् ॥ ]

**स्कन्धपृष्ठकटीभङ्गो भवेन्मृत्युश्च सप्तमे ॥**

स्कन्धादिभङ्गो मृत्युश्च सप्तमे । इति संप्तवेगाः ॥

[विषवेगलक्षणमुक्त्वानन्तरं तच्चिकित्सामाहः ॥]

**प्रथमेविषवेगेथवान्तं शीताम्बुसेचितम् ।**
**सर्पिर्मधुभ्यांसंयुक्तमगदं पाययेद्द्रुतम् ॥**

प्रथम इत्यादिना सप्तसु वेगेषु क्रमेण चिकित्सा । प्रथमे विषवेगे पूर्वं वमनं ततः शीताम्बुसेकस्ततो दोषाद्यपेक्ष्य मन्यतममगदं सर्पिर्मधुभ्यां संयुक्तं द्रुतं पाययेत् । [अथशब्दः प्रकरणान्तरद्योतनार्थः । प्रथमे जिह्वाश्यावतादिलक्षणलक्षिते विषवेगे वमितं शीताम्बुना परिषिक्तगात्रमातुरं घृतमाक्षिकोपेतमगदं विषघ्नौषधमाश्वेव पाययेत् भिषगिति शेषः ॥ ]

**द्वितीयेपूर्ववद्वान्तं विरिक्तं चानुपाययेत् ।**
**तृतीयेऽगदपानं च हितं नस्यं तथाञ्जनम् ॥**

द्वितीयादिषु सुबोधम् । पूर्ववदिति सूत्रोक्तप्रकारेण । अनुपाययेदिति प्रकरणादन्यतममगदम् । [द्वितीये विषवेगे वमनविरेचनानन्तरं पूर्ववत् प्रथमवेगवत् अगदं पाययेत् । पूर्ववदित्युक्तत्वात् शीताम्बुपरिषेकघृतमधूपे तत्वादिकं द्योत्यते । तृतीये वेगे अगदपानादिकं हितम् ॥ ]

**चतुर्थे स्नेहसंयुक्तमगदं प्रतिभोजयेत् ।**
**पञ्चमे मधुककाथ माक्षिकाभ्यांयुतं हितम् ॥**

चतुर्थे वेगे स्नेहान्वितमगदं प्रतिभोजयेत् । स्नेहस्या विशेषकथनान्महास्नेहइत्यर्थः । पञ्चमे वेगे मधुककाथमाक्षिकान्वितमगदं पिबेदातुर इति शेषः ॥ ]

**षष्ठेतिसारवत् सिद्धिरवपीडस्तु सप्तमे ।**
**मूर्ध्निकाकपदं कृत्वा सासृग्वा पिशितं क्षिपेत् ॥**

अवपीडः कल्कादि नस्यम् । अथवा सप्तमे वेगे मूर्ध्नि शिरसि तालुप्रदेशस्य काकपदं काकपदमुद्राकृति शस्त्रच्छेदं कृत्वा अन्यप्राणिसम्बन्धि पिशितं सास्रं रक्तसहितं क्षिपेत् । [षष्ठे विषवेगे अतिसारतुल्या चिकित्सा हिता । सप्तमे वेगे तुशब्देनास्यापि चिकित्सितव्यत्वं द्योत्यते । अवपीडः रोगानुत्पादनीयोक्तो घृतपानमात्रा विशेषः । मूर्ध्नि शिरसि काकपदं कृत्वा काकपदाकारेण छित्वा अन्यजन्तूनां सरक्तं मांसं विषसङ्क्रमणार्थं निक्षिपेद्वा । आमिषे विषसङ्क्रमणप्रकारं चोक्तमालम्बायनेन । मूर्ध्नि काकपदं चास्य मुण्डितेत्वथ कारयेत् । मांसं सशोणितं सद्यस्तस्मिन् काकपादे न्यसेत् । विषसङ्क्रमणान्ते तत्परमांसं परित्यजेत् । ऊर्ध्वमुत्क्रममाणं तु विषं मूर्ध्नि प्रतिष्ठति । निवर्तमानं तं हन्ति तस्मात् सङ्क्रामयेद्विषमिति ॥ ]

[ विषघ्नीं पेयामाह ॥ ]

**कोशातक्यग्निकः पाठा सूर्यवल्यमृताभयाः ॥**
**शेलुः शिरीषः किणिही हरिद्रेक्षुद्रसाह्वया ।**
**पुनर्नवौ त्रिकटुकं बृहत्यौ शारिबे बले ॥**
**एषां यवागूं निर्यूहे शीतां सघृतमाक्षिकाम् ।**
**युञ्ज्याद्वेगान्तरेसर्वविषघ्नीं कृतकर्मणः ॥**

वेगान्तर उक्तलक्षणेकोशातक्यादीनां निर्यूहे काथे कृतां शीतां सघृतमाक्षिकां यवागूं कृतकर्मणो विहितवमनादिकस्य सतो युञ्ज्यात् । सा हि सर्वविषघ्नी । अग्निकश्चित्रकः भल्लातकं च । सूर्यवल्ली अर्कः शेलुः श्लेष्मातकः । किणिही कटभी । क्षौद्रसाह्वया माक्षिकधातुः । [प्रकृताद्वेगादन्यो वेगो वेगान्तरम् । कोशातक्यादीनां काथे षडङ्गकल्पनाकल्पिते कृतां यवागूमिति निबन्धसंग्रहे । कोशातकी घोषकः । अग्निकोऽजमोदः । मोरट इत्यन्ये । सूर्यवल्ली पटोलसदृशपत्रा । यस्याः पत्ररसेनाक्तं मांसं क्लिन्नमिव भवति । ] [कृतकर्मणः कृतवमनादिकस्य कोशातक्यादीनां निर्यूहे काथे कृतां शीतां स्पर्शशीतळां घृतमाक्षिकोपेतां सर्वविषहरां यवागूं वेगान्तरे योजयेत् । ] [कोशातकी പട്ടൽ പീരം. अग्निकोग्निमन्थः । सूर्यवल्ली വെമ്പാട, करवीरमिति केचित् । किणिही കിലുകിലുപ്പ്. क्षौद्रसाह्वया മറക്കിരക്കല്ലു്. इति केरळभाषा ॥ ]

तद्वन्मधूकमधुकपद्मकेसरचन्दनैः ॥

मधूकादिभिस्तद्वदिति कोशातक्यादिविधानेन यवागूम् । [मधूकादीनां निर्यूहे कृता यवागूस्तत्तुल्यगुणा । मधूकादि सुबोधम् ॥]

अगदान् वक्ष्यते चातः सिद्धान् पूर्वर्षिनिर्मितान् ।
सर्वेषु सर्वावस्थेषु ये विषेषु परं हिताः ॥

अतोऽनन्तरं पूर्वर्षिनिर्मितान् दृष्टफलानगदान् वक्ष्यते । ये अगदाः सर्वेषु विषेषु सर्वावस्थेषु परमत्यर्थं हिताः ॥

चन्दनं कुंकुमं कुष्ठं काङ्क्षी लाक्षा प्रियङ्गवः ।
मुस्तस्थौणेयशैलेयरोचना मदनप्लवम् ॥
श्रीवेष्टकविळङ्गैला विशालालमनःशिलाः ।
सुरसप्रसवस्पृक्का रजनीद्वय वालकम् ॥
हिङ्गुसिद्धार्थकाः पद्मचारिणी पद्मकेसरम् ।
जात्याः पुष्पं प्रवाळश्च पुष्पमर्कशिरीषयोः ॥
द्विरोध्रबृहती कौन्ती मधुकं गन्धनाकुली ।
मुद्गपर्णीकणाश्यामा ध्यामकं नळदं नतम् ॥
सिन्दुवारकशम्याकदेवदारु मयूरकम् ।
पुष्ये समाहृतैः पिष्टैर्योज्यस्तैरगदोत्तमः ॥
सञ्जीवनः प्रागभूता द्विहितोऽयं स्वयम्भुवा ।
पाननस्याञ्जनाघ्राणधूमालेपनधारणैः ॥
जीवनो विषसुप्तानां राजद्वारे जयावहः ।
धन्यो धान्यधनायुःश्रीक्षेमपुष्टिसुखप्रदः ॥
गृहे स्थितो विषालक्ष्मी मन्त्रज्वरगरग्रहान् ।
कृत्याकार्मणकाखोर्दव्याळजन्तुसरीसृपान् ॥
स्वप्नोपघातदुःस्वप्नतोयाग्निरिपुतस्करान् ।
निहन्त्यकालमरणमारकाशानिविग्रहान् ॥

चन्दनकुंकुमादिभिः पुष्यदिने समाहृतैः सञ्जीवनो नामागदः संयोज्यः । अयमगदोऽमृतात् पूर्वमुत्पन्नोऽमृततुल्यकार्यकरः स्वयम्भुवा ब्रह्मणा विहितः । स्थौणेयः कृतबर्हाख्यः । प्लवं परिपेलवम् । सुरसस्य प्रसवमंकुरः । पुष्पं प्रवाळश्च जात्याः । प्रवाळः किसलयम् । श्यामा प्रियंगुः । नळदं मांसी । नतं तगरम् । शम्याक आरग्वधः । मयूरकोऽपामार्गः । एष च सञ्जीवनः पानादिभिर्जीवनादिगुणो धान्यादिप्रदश्च । गृहे स्थितो विषादीन् हन्ति । धन्यो मङ्गल्यः । मन्त्रोऽन्येनाभिचारप्रयुक्तः । कृत्या आभिचारदेवता । कार्मणं वशीकरणम् । काखोर्दो नाम भूतविशेषः । जन्तवः क्रिमयः । सरीसृपाः सर्पादयः । स्वप्नोपघातः स्वप्ने भयङ्करैरभिभवः । दुःस्वप्नं शारीरोक्तम् । विग्रहो द्वन्द्वः ॥

चन्दनं वालकं मुस्तं ध्यामकं कटुका नतम् ।
डाडिमं कुंकुमं शुण्ठी कपित्थं वत्सकात्फलम् ॥
करञ्जबीजं मारिचं मुस्तं कमलं दलम् ।
नळमूलमपामार्गं करवीरकमञ्जनम् ॥
लाक्षामालत्यहिच्छत्रं नागपुष्पाम्लवेतसम् ।
विशालारोचनाश्यामा शङ्खपुष्पीप्रियंगुकाः ॥
अजाजी शारिबाकुष्ठमजमोजः कुरण्डकः ।
वयस्था सिन्दुवारैला कायस्था चारटी वचा ॥
कर्कटी पूतना केशी श्वेता च गिरिकर्णिका ।
गोलोमी सिंहलोमी च वर्षाभूर्गजपिप्पली ।
अगदो यापनाख्योऽयं पूर्वेण सदृशो गुणैः ॥

चन्दनादिभिः पञ्चभिः श्लोकैर्यापनाख्य अगदः पूर्वेण सञ्जीवनेन गुणैः सदृशः । ध्या-

मकं श्यामकम् । कतृणमिति केचित् । वत्सकात्फल मिन्द्रयवः । दलं गन्धपत्रम् । अहिच्छत्रं कवकम् । तदेव भूस्फोटम् । छत्राकारमेतत् । (कुणम्° इति भाषा ।) श्यामा पिप्पली । शंखपुष्पी वीरटिः । कुरण्डकं पीताम्लायनकम् । वयस्था आमलकम् । कायस्था हरीतकी । चारटी स्थौणेयम् । कर्कटी बिल्वम् । पूतना मांसी । केशी निर्गुण्डी गोलोमी दूर्वा । वाशक इति च । सिंहलोमी (नि) सुरसा च सुपत्रा च बहुपत्री च तक्ला । वर्षाभूः पुनर्नवा ॥

श्रीवेष्टकं हरिद्रे द्वे कोविदारं मनश्शिलाम् ॥
पिप्पलीं पाटलीं पद्मां श्वेतां च गिरिकर्णिकाम् ।
मञ्जिष्ठां बृहतीं वक्रं यष्टीं मरिचकेसरम् ॥
फलिनीं किणिहीं चेति गवां पित्तेन भावयेत् ।
सूर्योदयो हन्ति विषं तमः सूर्योदयो यथा ॥

श्रीवेष्टकादिभिर्गोपित्तपिष्टैः सूर्योदयनामाऽगदो विषं हन्ति यथा सूर्योदयस्तमोन्धकारम् । श्रीवेष्टकः श्रीवासकः । श्वेता गिरिकर्णिका कटभी । वक्रं तगरम् । केसरं नागकेसरम् । फलिनी प्रियंगुः । किणिही गिरिकर्णिका ॥

निम्बपत्रं गृहाद्धूमं फाणितं बृहतीफलम् ।
गोपित्तयुक्तमगदः परमं मृतजीवनः ॥
गोपित्तकुष्ठसुरसं मधुकाद्विनिशं तथा ।
विशालारजनीकुष्ठ श्वपित्तव्योषतुम्बुरु ॥
वचाशिरीषपञ्चाङ्गी मृतसञ्जीवनो गदः ।
पञ्चाङ्गानिशिरीषस्य श्वपित्तं च वरोगदः ॥

निम्बपत्रगोपित्तविशालापञ्चाङ्गानीत्यादयः सुबोधाः । (गोपित्तं गोरोचनेति सुश्रुतटीका ।) तथेति परमं मृतजीवनः । शिरीषपञ्चाङ्गानि पत्रपुष्पफलत्वङ्मूलानि । वरः श्रेष्ठः ॥

प्रियङ्गुतगरंलाक्षा मञ्जिष्ठामधुकं मधु ।
हरिद्राचेत्ययं श्रेष्ठः कौटिल्यदयितोऽगदः ॥
विसंज्ञानां विषैर्घोरैः प्रहारैर्नष्टचेतसाम् ।
उद्बन्धानां जलौघे च मृतानां चेतनावहः ॥

प्रियङ्ग्वादिरयमगदः श्रेष्ठः । यः कौटिल्यस्यदयितः विसंज्ञादीनां चेतनावहश्च ॥

शिरीषफलकाकाण्ड सुरसाग्रपुनर्नवैः ।
कक्ष्या वायसिसंयुक्तैरगदःपूर्ववत् गुणैः ॥

शिरीषफलादिभिरगदो गुणैः पूर्ववत् प्रियङ्ग्वादिवद्विज्ञेयः । सुरसाग्रं तुळसीकुसुमम् । कक्ष्यावायसी काकोदुम्बरिका ॥

कटुकालाबुमूलानि गवां पित्तेनकल्कयेत् ।
ब्राह्मो धार्योयमगदः सर्वकर्मसु पूजितः ॥

कटुकालाबुमूलानि गोपित्तेन कल्कयेत् । ब्राह्मोयमगदो मणिवद्धार्यः । सर्वकर्मस्वभीष्टेषु पूजितः श्रेष्ठः । (कटुकालाबु पेचुरु ।)

अगारधूमस्त्रिवृता गोपित्तं त्र्यूषणं वचा ।
प्राजापत्योयमगदः सर्वरक्षो विषापहः ॥

अगारधूमादिभिः प्राजापत्यो नामा गदः सुबोधः ॥

श्वेतपुष्करतुल्यांशैर्जीवन्त्याः कुसुमैःकृतः ।
रुक्मपिष्टोमणिर्द्धार्यश्चाणक्येष्टोविषापहः ॥

श्वेतपद्मं जीवन्तीकुसुमं च समभागं कृत्वा रुक्मेन सुवर्णेन पेषयेदयं मणिश्चाणक्यस्य कौटिल्यस्य विषापह इष्टः ॥

मांसीत्वक्पत्रसुरस मनोह्वा शीतकुंकुमम् ॥
निशाव्याघ्रनखं शुण्ठी दशाङ्गोऽयं विषापहः ।
उल्पातगण्डपिटका दिग्धविद्ध विषापहः ॥

मांस्यादिभिर्दशाङ्गो नामा गदो विषापहः । विशेषत उल्पाताद्यापहश्च । शीतं चन्दनम् ॥

उदुम्बरत्वग्जम्ब्वास्थिमधुकोत्पलगैरिकैः ॥
चन्दनोशीरनळद नागकेसरपद्मकैः ।
विशेषाद्विषविस्फोट विसर्पज्वरदाहहा ॥

उदुम्बरत्वगादिभिरगदो विशेषाद्विषविस्फोटादिहा ॥

शिरीषोदुम्बरप्लक्ष न्यग्रोधाश्वत्थवल्कलैः ।
सघृतो दाहतृष्णास्र विषवीसर्पपित्तहा ॥

शिरीषादिवल्कलैः सघृतो गदो दाहादिहा ॥

गजपिप्पलिकासीसक्षारयष्टीमयूरकम् ।
रक्तानतंवचादन्ती शिवः शिवकृतो गदः ॥

गजपिप्पल्यादिभिर्भगवता शिवेनकृतोगदः । शिवः श्रेयस्करः । मयूरकमपामार्गः । रक्ता गुञ्जा । नतं तगरम् ॥

सुराळापावकीसोमा भोगवत्यमृतानतम् ।
आढकीकिणिहीसोमराजीचौशनसोगदः ॥

सुराळादिभिरौशनसोगदः । सुराळा (नि) सुलक्षणा सुराळाख्या ज्ञेया पुत्रवती परा । पूजा वृद्धाकरी ज्ञेया पत्रपुष्पफलैः शुभा । पावकी (नि) क्षुरधारा पावकाख्या ज्ञेया सस्यवतीति च । वीरणीवीरगुच्छोक्ता सैवारुणवचा मता । सोमा ब्राह्मी चन्द्रतरुर्वा । भोगवती समङ्गा । किणिही कटभी ॥

श्लेष्मातकार्ककुसुमं तण्डुलीयो मयूरकः ।
सुरसामञ्जरीकाकमाची पानेऽगदोवरः ॥

श्लेष्मातकादिभिरगदः पाने वरः श्रेष्ठः । (सुरसा निर्गुण्डी । मञ्जरी तुळसी ॥ )

दध्याज्यक्षौद्रलवणं पीतं मूलविषापहम् ॥

दध्यादिकं संयोज्य पीतं मूलविषापहं भवति ॥

हरिद्रा सैन्धवक्षौद्र घृतं संसृज्य पाययेत् ।
आर्तान् मूलविषैर्घोरैर्दिग्धविद्धान् विशेषतः ॥

घोरैर्मूलविषैरार्तान् हरिद्रादीनिसंसृज्य पाययेत् । विषदिग्धशस्त्रविद्धान् विशेषेण पाययेत् ॥

प्रसङ्गेनाह ॥

हरिद्रान्तर्बहिःशस्ता विषदोषातुरे परम् ॥

विषदोषैरातुरे पुरुषे अन्तः पानादिना बहिश्च लेपादिना हरिद्रैव परं शस्ता ॥

निशाश्वमारसुरस करञ्जव्योषदारुभिः ।
अञ्जनं बस्तमूत्रेण पिष्टैर्नेत्रोपरोधजित् ॥

निशादिभिर्बस्तमूत्रपिष्टैरञ्जनं विषातुरे नेत्रोपरोधजित् भवति ॥

कर्णाक्षिनासिकाकण्ठजिह्वारोगेषु नावनम् ।
बीजपूरार्यबृहतीफलज्योतिष्मतीकृतम् ॥

बीजपूरादिकृतं नावनं विषातुरे कर्णादिरोगेषु योज्यमिति शेषः । आर्यबृहतीस्थूलफला कण्टकारिका तस्याः फलानि ॥

श्वेता वचा हिङ्ग्वमृता सुगन्धा कुष्ठसैन्धवम् ।
शिरीषपुष्पाद्विनिशा व्योषडुण्डुकसर्षपाः ॥
कपित्थमध्यं लशुनं करञ्जोवंशलेखनम् ।
पिष्ट्वा गोबस्तमूत्रेण तत्पित्तेनैव भावयेत् ॥
दिनानि सप्तव्यत्यासा द्विनिहन्ति ततोऽञ्जनात् ।
विषं शिरस्थं मूर्द्धार्तिं ज्वराजीर्णं विषूचिकाः ॥
अपस्मारग्रहोन्माद पाण्डुमेहमदात्ययान् ।
शुष्कनेत्रामयशिरोरोगपैल्लिगळार्बुदान् ॥
काचान्धकारपटल कण्डूदौर्बल्ययक्ष्मणः ।
लेपात् पीतक्षतालीढदष्टदिग्धविषं जयेत् ॥
श्वित्रं कृच्छ्राणि कुष्ठानि दुष्टनाडी महाव्रणान् ।
आनाहार्शो गुदे लेपाल्ललाटे दुष्टपीनसम् ॥
योनिलेपेन नारीणां मूढगर्भानुलोमनः ।
उन्मूलयेत्येषविषं गन्धहस्तीव काननम् ॥

श्वेतादिकं गोबस्तमूत्रेण पिष्टं संशोष्य सप्तदिनानि तत् पित्तेन गोबस्तपित्तेन व्यत्यासात् पर्यायेण भावये॰ । पुनर्गोपित्तेन पुनर्बस्तपित्तेनेत्यर्थः । ततोनन्तरमञ्जनेन शिरस्थं विषं मूर्द्धार्त्यादींश्च विनिहन्ति । शुष्कनेत्रामयः शुष्काक्षिपाकः । अन्धकारं तिमिरम् । लेपात् पीतविषं क्षतविषमालीढविषं दष्टविषं दिग्धविषं च जयेत् । क्षतविषादीनां लक्षणं वक्ष्यति । श्वित्रपीडादींश्च लेपाज्जयेत् । गुदे लेपादानाहमर्शश्च । ललाटलेपाद्दुष्टपीनसम् । एव चागदो नारीणां योनिलेपनेन न मूढगर्भानुलोमनः । एष च विषमुन्मूलयति यथा गन्धहस्ती वनम् । [श्वेता श्वेतवचा । सुगन्धा गन्धनाकुली । डुण्डुकः स्योनाकः । वंशलेखनं वंशत्वक् ॥ ]

विळङ्गपाठा त्रिफलाजमोदा
हिङ्ग्वग्नित्रक्रं लवणस्यवर्गः ।
व्योषान्वितं स्थावरजङ्गमानां
जेताविषाणा मगदोऽजिताख्यः ॥

विळङ्गादिभिरजितनामागदः स्थावराणां जङ्गमानां च विषाणां जेता । लवणवर्गः सूत्रोक्तः ॥

मनोह्वा रोचना चण्डा त्वगेलासितसर्षपैः ।
स्पृक्काहिंगुळकाश्मीरकान्ताभिःकल्कितोऽगदः
विषघ्नो वालसूर्योयं श्रीरक्षा विजयर्द्धिदः ॥

मनोह्वादिभिः कल्कितोऽगदो नाम्ना वालसूर्यो विषघ्नः श्र्यादिप्रदश्च । मनोह्वा मनश्शिला । चण्डा चोरकम् । काश्मीरं कुंकुमम् । कान्ता प्रियङ्गुः ॥

अजगन्धा सगोमूत्रा गृहधूमः सगुल्गुलुः ।
एष माहेश्वरो योगो न क्वचित् प्रतिहन्यते ॥

अजगन्धादिभिर्माहेश्वर॰ योगः सुबोधः ॥
[अश्वगन्धा सगोमूत्रा इति च पाठः ॥ ]

[विषदिग्धास्त्रविद्धस्यलक्षणमाह ॥ ]

विषदिग्धेन विद्धस्तु प्रताम्यति मुहुर्मुहुः ।
विवर्णभावं भजते विषा॰ चाशुगच्छति ॥
कीटैरिवावृतंचास्य गात्रं चिमिचिमायते ।
श्रोणिपृष्ठशिरःस्कन्धसन्धयःस्युः सवेदनाः ॥
कृष्णदुष्टास्रविस्रावी तृण्मूर्च्छाज्वरदाहवान् ।
हृ॰कालुष्यवमथु श्वासकासकरः क्षणात् ॥
आरक्तपीतपर्यन्तः श्यावमध्योति रुग्व्रणः ।
शूयते पच्यते सद्यो गत्वा मांसं च कृष्णताम् ।
प्रक्लिन्नं शीर्यतेऽभीक्ष्णं सपिच्छिल परिस्रवम् ॥

प्रताम्यति मुहुर्मुहुरित्यादिकं विषदिग्धेन विद्धस्य लक्षणम् । तत्र व्रणः क्षणात् दृष्टिकालुष्यादिकर इति सम्बन्धः । आरक्ता ईषल्लोहिताः पर्यन्ता यस्मिन् व्रणे सतथोक्तः । शूयत इत्यादि व्रणविशेषणम् । [विषदिग्धेन शस्त्रेण विद्धो नरस्तु मुहुर्मुहुः पुनः पुनः प्रताम्यति ग्लानिं प्राप्नोति विवर्णभावं वैवर्ण्यं भजते । आश्वेव विषादं गच्छति । चशब्दः समुच्चये । अस्य विषदिग्धाहतस्य शरीरं कीटैः कृमिभिराचितं व्याप्तमिव चिमिचिमायते चिमिचिमावदाचरति । अणुप्राणि परिसर्पणप्रतीतिश्चिमिचिमा । अस्य श्रोण्यादयो वेदनान्विता भवन्ति । व्रणः कृष्णं दुष्टंचास्रं सदा स्रवति । तृडादियुक्तश्च भवति । मूर्च्छा वैचित्यम् । क्षणेन दृष्टिकालुष्यादिकरो भवति । वेधव्रण ईषद्रक्तपीतवर्णपर्यन्तः श्याववर्णमध्यः शोफं प्राप्नोति । सहसा पाकं च प्राप्नोति । तत्गतं मांसं कार्ष्ण्यमासाद्य अतिशयेन क्लिन्नं सत् पैच्छिल्ययुक्तपूयस्रावोपेत मनवरतं शीर्यते । चशब्दः समुच्चयार्थः ॥ ]

कुर्यादित्यादिना दिग्धविद्धस्य चिकित्सा ॥

**कुर्यादमर्मविद्धस्य हृदयावरणं द्रुतम् ।**
**शल्यमाकृष्य तप्तेन लोहेनानुदहेद्व्रणम् ॥**

अमर्मणि विद्धस्याशु हृदयावरणं कुर्यात् । हृदयावरणं तत् येन पीतेन हृदयप्राप्तेन विषमभिभवितुं न शक्नोति तच्च वक्ष्यते । व्रणाच्च विषदिग्धं शल्यमाकृष्यानुपश्चात्तप्तेन शस्त्रेण व्रणं दहेत् । [अमर्मविद्धस्य मर्मवेधस्यासाध्यत्वान्मर्मरहितप्रदेशे विद्धस्य द्रुतमाश्वेव हृदयावरणं घृतपानेन हृदयाच्छादनं कुर्यात् भिषगिति शेषः । हृदयस्य सर्वधातुमूलत्वादाहारमार्गत्वात् प्रधानमर्मत्वाच्च तस्मिन् विषघ्नघृतादिभिः प्रच्छादिते सति विषं सहसानातिविसर्पति । उक्तं चालम्बायनेन । याः सिराः सर्वगात्रेषु हृदये सम्प्रतिष्ठिताः । ताभिरस्य विषं सर्वं हृदयं सम्प्रधावति । घृतेन तु प्रतिच्छन्नं विषं नाति प्रपीडयेत् । निर्वाणजननं सर्पिः प्राणिनां प्राणवर्द्धनम् । हृदयावरणास्तद्वत् भक्ष्याभोज्याश्च सागदाः इति । अनुहृदयावरणादनन्तरं शल्यं विषदिग्धशिलीमुखादिकं सूत्रोदितेन विधिनाऽऽहृत्य अग्निना तप्तेन लोहमयेन जाम्बोष्ठादिना वेधव्रणं दहेत् ॥ ]

**अथवा मुष्ककश्वेता सोमत्वक् ताम्रवल्लितः ।**
**शिरीषात् गृध्रनख्याश्च क्षारेण प्रतिसारयेत् ।**
**शुकनासा प्रतिविषा व्याघ्रीमूलैश्च लेपयेत् ॥**

अथवानैव दहेदपि तु मुष्ककादीनां क्षारेण प्रतिसारयेत् । शुकनासादिभिर्व्रणं लेपयेत् । [अथवा अदाह्यस्य चेत मुष्ककादिभवेन क्षारेण व्रणं प्रतिसारयेत् । मुष्ककः काळमुष्ककः । श्वेता श्वेतवचा । सोमत्वक् कट्फलत्वक् । ताम्रवल्ली (ചെമ്പുള്ളിക്കൊടി.) शिरीषं प्रसिद्धं लोके । गृध्रनखी (കാരത്തൊട്ടി.) विरळेति पाठ्यकारः । पिष्टैः शुकनासादिभिर्वेधव्रणं लेपयेच्च । शुकनासा स्योनाकः । प्रतिविषातिविषा व्याघ्री बृहती ॥ ]

**पीतदष्टचिकित्सां च कुर्यात्तस्य यथार्हतः ।**
**व्रणे तु पूतिपिशिते क्रिया पित्तविसर्पवत् ॥**

तस्य विषदिग्ध शस्त्रविद्धस्य पीतदष्टचिकित्सां स्थावरजङ्गमविषचिकित्सां यथार्हतो दो-

षाद्यपेक्षया योजयेत् । सुबोधम् । पूतिपिशिते क्लिन्नमांसे । [तस्य विषदिग्ध शस्त्रविद्धस्य यथायोग्यं पीतदष्टचिकित्सां पीतचिकित्सां विषपीताय सूत्रोदितां वमनादिकां दष्टचिकित्सामुपरि वक्ष्यमाणां सर्पादिदष्टक्रियां च कुर्यात् । व्रणे विद्धव्रणे पूतिपिशिते दुर्गन्धयुक्तामिषे सति तुशब्देन दुष्टीभूतेपि कारणविशेषात् शीतोपचार एव कर्तव्य इति द्योत्यते । पित्तविसर्पवत् पित्तविसर्पे इव शतधौतघृताप्लुतन्यग्रोधगणाद्यालेपनादिका क्रिया चिकित्सा कार्येतिशेषः ॥ ]

इत्यकृत्रिममुक्त्वाक्रमप्राप्तं कृत्रिमं निर्णेतुमाह ॥

**सौभाग्यार्थं स्त्रियो भर्त्रे राज्ञे वारातिचोदिताः।**
**गरमाहारसम्पृक्तं यच्छन्त्यासन्नवर्तिनः ॥**

सौभाग्यार्थं भर्तृराहारसम्प्रयुक्तं गरं स्त्रियो यच्छन्ति ददति । राज्ञे चासन्नवर्तिनो यच्छन्ति किम्भूता अरातिचोदिताः राजशत्रुप्रयुक्ताः । स्त्रियः सौभाग्यार्थं भर्त्रे आसन्नवर्तिनः अरातिचोदिताः वैरिजनप्रेरिताः राज्ञे नृपाय वाशब्दो विकल्पार्थः । गरं वक्ष्यमाण विशेषविषं आहारसम्पृक्तं आहारेण संयुक्तं आहारशब्देनाद्यमानं सकलमपि वस्तुजातं गृह्यते यच्छन्ति प्रयच्छन्ति ॥ ]

ननु गरशब्देन किमुच्यत इत्याह ॥

**नानाप्राण्यङ्गशमल विरुद्धौषधिभस्मनाम् ।**
**विषाणांचाल्पवीर्याणां योगो गर इति स्मृतः॥**

नानाविधप्राण्यङ्गशमलानां देहविरुद्धौषधिभस्मनामल्पवीर्याणां विषाणां च य एकत्रयोगः स गर इति स्मृतः । [नानाप्राण्यङ्गशमलविरुद्धौषधिभस्मनां नानाविधप्राणिनामङ्गाना मवयवानां शमलानां मूत्रपुरीषादिमलानां च अथवा नानाप्राणीनां अङ्गमलानां मनुष्यदेहमलानां च प्राणिनामेवाङ्गमलानां वा विरुद्धौषधिभस्मनां विरुद्धवीर्यद्रव्यभस्मनां अल्पवीर्याणां मन्दवीर्याणां वत्सनाभादि विषद्रव्याणां च योगः एकीकरणं गर इति गरसंज्ञः स्मृतः मुनिभिरिति शेषः ॥ ]

[गरोपयुक्तस्यलक्षणमाह ॥ ]

**तेन पाण्डुः कृशोल्पाग्निः कासश्वासज्वरार्दितः।**
**वायुना प्रतिलोमेन स्वप्नचिन्तापरायणः ॥**
**महोदरयकृत् प्लीहो दीनवाग्दुर्बलोलसः ।**
**शोफवान् सतताध्मातः शुष्कपादकरः क्षयी ॥**
**स्वप्ने गोमायुमार्जार नकुलव्यालवानरान् ।**
**प्रायः पश्यति शुष्कांश्च वनस्पति जलाशयान् ॥**
**मन्यते कृष्णमात्मानं गौरो गौरं च काळकः ।**
**विकर्णनासानयनं पश्येत्तद्विहतेन्द्रियः ॥**
**एतैरन्यैश्च बहुभिः क्लिष्टो घोरैरुपद्रवैः ।**
**गरार्तोनाशमाप्नोतिकश्चित्सद्योऽचिकित्सितः॥**

तेन गरेणोपयुक्तेन पुरुषः पाण्ड्वादिगुणो भवति । अर्दितशब्दस्य कासादिभिः सम्बन्धः । प्रतिलोमो वायुर्विपरीतवाही । महच्छब्दस्य प्लीहान्तैः सम्बन्धः स्वप्ने च गोमाय्वादीन् जलाशयान्तान् प्रायः पश्यति । यश्च स्वभावा देवगौरः सकृष्णमात्मानं मन्यते काळश्चगौरम् । तेन च गरेण विहतेन्द्रियः सर्वं कर्णादिरहितं पश्यति गरार्तश्च पुरुषः एतैरन्यैश्च

घोरैर्बहुभिरुपद्रवैः क्लिष्टो नाशमाप्नोति । कश्चित् सद्य एवाचिकित्सितः सन् ॥

**गरार्तोवान्तवान्भुक्त्वा तत्पथ्यंपानभोजनम् ।**
**शुद्धहृच्छीलयेद्धेम सूत्रस्थानविधेः स्मरन् ॥**

गरार्त इत्यादिनो चिकित्सा । योगरार्तः सः प्रथममेव वान्तवान् गरे पथ्यं पानभोजनं भुक्त्वा शुद्धहृत् सन् हेमसुवर्णं सूत्रस्थानोक्तविधिना शीलयेत् । [गरार्तः गरपीडितो नरः वान्तवान् कृतवमनः तत्पथ्यं गरहितं पानभोजनं भुक्त्वा सूत्रस्थानविधेः स्मरन् अन्नसंरक्षायां विषपीताय दद्यादित्यादि सूत्रस्थानोक्तं निरूपयन् शुद्धहृत् सक्षौद्रताम्ररजसा शुद्धहृदयः हेम हेमचूर्णं शीलयेदभ्यसेत् ॥ ]

**शर्कराक्षौद्रसंयुक्तश्चूर्णस्ताप्यसुवर्णयोः ।**
**लेहः प्रशमयत्युग्रं सर्वं योगकृतं विषम् ॥**

शर्करादिलेहः सुबोधः । ताप्यं माक्षिकधातुः । ताप्य सुवर्णयोश्चूर्णः शर्करया क्षौद्रेण च संयोजितो लेह उग्रमुत्कृष्टवीर्यं योगकृतं सर्वं विषं प्रशमयति नाशयति । अत्र सर्वशब्देन गरस्य नानात्वं द्योत्यते ॥

**मूर्वामृतानतकणा पटोलीचव्यचित्रकान् ॥**
**वचामुस्तविलङ्गानि तक्रकोष्णाम्बुमस्तुभिः ।**
**पिबेद्रसेनचाम्लेन गरोपहत पावकः ॥**

यस्य गरेण पावक उपहतः समूर्वादिचूर्णं तक्रादिभिरम्लेन काञ्चिकाद्यम्लद्रव्येण मांसरसेन च पिबेत् ॥

**पारावतामिषशटी पुष्कराह्वश्टृतं हिमम् ।**
**गरतृष्णारुजाकासश्वासहिध्मा ज्वरापहम् ॥**

पारावतमांसादिकं रसविधानेन शृतं पक्वं पश्चाच्च हिमं गराद्यपहरम् । [पारावतामिषादिभिः शृतं अत्र श्रपणोक्त्या द्रवद्रव्यत्वात्तोयमित्यर्थः ॥ ]

**वायसी श्वासकासघ्नी भृष्टाज्यत्रिफलारसे ।**
**भार्ङ्गी नागरनिर्यूहः शिशिरश्च समाक्षिकः ॥**

आज्यत्रिफलारसयोर्भृष्टा वायसी गरार्तस्य श्वासकासघ्नी । वायसी काकोदुम्बरिका । भार्ङ्गीनागरयोः क्वाथः शीतो माक्षिकयुक्तश्चशब्दाच्छ्वासकासघ्नः ॥

**हरेणुचन्दनंश्यामा नळदं श्लक्ष्णपेषितम् ।**
**विलेपनं प्रयोक्तव्यं गरेणोपहतत्वचः ॥**

येषां गरेण त्वगुपहता तेषां हरेण्वादिकं श्लक्ष्णपिष्टं विलेपनं प्रयोक्तव्यम् ॥

**माञ्जिष्ठा किणिहीनिम्ब रजन्यश्वत्थचन्दनैः ।**
**प्रघर्षणंकृशानां तु गरेण क्षपितौजसाम् ॥**

ये गरेण क्षपितौजसः कृशाश्च तेषां मञ्जिष्ठादिभिर्देहे प्रघर्षणं हितम् ॥

**पथ्यं परममुद्दिष्टं शीलनं क्षीरसर्पिषोः ॥**

पथ्यमित्यादि गरे विज्ञेयम् ॥

**वृषनिम्बपटोलीनां क्वाथेन विपचेत् घृतम् ।**
**अभया गर्भिणं श्रेष्ठं तत् गरस्यनिबर्हणम् ॥**

वृषादिक्वाथे हरीतकीगर्भं घृतं पचेत् तत् घृतं श्रेष्ठं गरनिबर्हणम् ॥

**हरिद्रां नाकुलीं जातीं पृथक्पिष्ट्वा विपाचयेत् ।**
**घृतत्रयं विषार्तानां मेतदारोग्यदं परम् ॥**

हरिद्रादिकं पृथक्पिष्ट्वा घृतत्रयं विपाचयेत् । तेनैकं घृतं हरिद्रया द्वितीयं नाकुल्या तृतीयं जात्या ॥

तण्डुलीयकमूलेन गृहधूमेनचैकतः ।
क्षीरेण च घृतं सिद्धं समस्तविषरोगजित् ॥

तण्डुलीयकमूलादावेकत इति मिश्रीकृत्य ॥

नागदन्ती त्रिवृद्दन्ती द्रवन्ती स्नुक्पयः पलैः ।
साधितं माहिषं सर्पिः सगोमूत्राढकं हितम् ।
सर्पकीटविषार्तानां गरार्तानां च शान्तये ॥

नागदन्त्याद्यं सर्पिर्व्याख्यासमम् । शान्तये रोगोपशमाय ॥

मधुकं तगरं कुष्टं भद्रदारु हरेणवः ।
मञ्जिष्ठैलैलवालूनि नागपुष्पोत्पलं प्लवम् ॥
विळङ्गं चन्दनं पत्रं प्रियंगुर्ध्यामकं बला ।
अंशुमत्यौ हरिद्रे द्वे बृहत्यौ शारिबाद्वयम् ॥
एषां कल्कैर्घृतंसिद्धमजेयं नामविश्रुतम् ।
विषाणि हन्ति सर्वाणि शीघ्रमेव प्रयोजितम् ॥

मधुकादिकल्कैरजेयं नाम घृतं सुबोधम् । प्लवं परिपेलवम् । पत्रं गन्धपत्रम् । ध्यामकं कर्तृणम । अंशुमत्यौ सालपर्णी पृश्निपर्ण्यौ ॥

श्वेते कपोते बीजानि प्रत्यक्पुष्पी शिरीषयोः ।
गोमूत्रपिष्टैस्तैः सर्पिः सिद्धं विषहरं परम् ।
अमृतंनामविख्यातमपि सञ्जीवयेन्मृतम् ॥

श्वेतादिभिर्गोमूत्रपिष्टैः सर्पिः सिद्धं नाम्नामृतं परं विषहरम् । मृतं सञ्जीवयेदिति सम्भाव्यते । श्वेते द्वे वचा कटभी च । प्रत्यक्पुष्पी शिरीषयोर्बीजानि । प्रत्यक्पुष्प्यपामार्गः ॥

शिरीषत्वक् त्रिकटुकं विदारी चन्दनोत्पलम् ।
द्वेबले शारिबास्फोत बृहती निम्बपल्लवाः ॥
बन्धुजीवाढकी मूर्वा वाशा सुरसवल्लकाः ।
पाठाङ्कोलाश्वगन्धार्कमूलयष्ट्याह्वपद्मकम् ॥
विशाला बृहती लाक्षा कोविदारशतावरीः ।
कटभीदन्त्यपामार्ग पृश्निपर्णी रसाञ्जनम् ॥
श्वेतौ बाणाश्वखुरकौ कुष्ठदारुप्रियङ्गुकाः ।
सारं मधूकात्रिफलां करञ्जस्यफलं वचाम् ॥
रजन्यौ लोध्रमक्षांशं पिष्ट्वासाध्यं घृताढकम् ।
तुल्याम्बुछागगोमूत्रत्र्याढके तद्विषापहम् ॥
अपस्मारक्षयोन्माद भूतग्रहगरोदरान् ।
पाण्डुरोगक्रिमिप्लीह गुल्मोरुस्तम्भकामिलाः ॥
हनुस्तम्भग्रहादींश्च पानाभ्यञ्जननावनैः ।
हन्ति सञ्जीवयति च विषोद्बन्धमृतान् नरान् ॥

शिरीषत्वगादिकमक्षांशं पिष्ट्वा गोच्छागयोर्मूत्रात् त्र्याढके तुल्याम्बु घृताढकं साध्यम् । तत्पानादिभिर्विषापहमपस्मारादींश्च हन्ति । विषमृतानुद्बन्धमृतांश्च नरान् सञ्जीवयति । आस्फोतोर्कः । सुरभिः सल्लकी । बन्धुजीवो बन्धूकः । आढकी तुवरी ; अङ्कोल अङ्कोलकः । बाणोश्वखुरश्च श्वेतः । बाणः सहचरः । अश्वखुरो गिरिकर्णिका ॥

भक्षित इत्यादिना हरितालादीनां क्षुद्रविषाणां निर्णयः ॥

भक्षिते हरिताले तु हृदिदाहोरसाग्रहः ।
आनाहोम्ळस्रवमनं पीतहारिद्रविट्स्रुतिः ।
तथा मण्डलिसर्पोक्ता विकारास्तच्चभेषजम् ॥
विभज्य योजयेत्—

हरिताले भक्षिते हृद्व्यथादिकं भवति । मण्डलिसर्पभक्षिते चये रोगा वक्ष्यमाणास्ते च भवन्ति । तत्र तदेव मण्डलीसर्पोक्त भेषजमौषधं दोषादीन् विभज्य योजयेत् ॥

—ऊर्ध्वमधः संशोधितं च तम् ॥
**अङ्कोलजालिनीबीज शुकनासा प्रियङ्गुकाः ।**
**लोध्रध्यामकतालीसनतयष्ट्याह्वगुल्गुलु ॥**
**ह्रीबेरंभद्रकाष्ठं च लेहयेन्मधुसर्पिषा ।**
**दद्यान्नकुलगोपित्तयुक्तं नस्येञ्जने च तत् ॥**

तं च हरितालभोजिन मूर्ध्वमधश्च वमनाविरेचनाभ्यां संशोधितमङ्कोलादिकं मधुसर्पिषा सह लेहयेत् । तच्चाङ्कोलादिकं नकुलस्य गोश्चपित्तेनयुक्तं नस्येञ्जने च दद्यात् । जालिनीबीजं गरागरीबीजम् । शुकनासा स्योनाकः । ध्यामकं सौगन्धिकम् । ह्रीवेरं वाळकम् । भद्रकाष्ठं देवदारु । इति हरितालविषे ॥

**धुर्धूरकोपयोगेन सर्वं पश्यति पीतकम् ।**
**कम्पलालामदच्छर्दिस्मृतिभ्रंशभ्रमान्वितः ।**
**तं वामयेत मधुरैः पाययेद्वा सिता पयः ॥**

धुर्धूरकस्य धत्तूरस्योपयोगेन कम्पान्वितः सन् पुरुषः सर्वं पीतकं पश्यति । तमुपयुक्त धुर्धूरं मधुरैर्वामयेत् । शर्कराक्षीरं वा पायये दिति धुर्धूरविषे ॥

**कोरदूषैर्मदनकैः प्रायो धुर्धूरवत् गदाः ।**
**उन्मादोक्षिविनाशश्च तत्रापि वमनं हितम् ।**
**कूश्माण्डकं च सगुडं बहुशस्तत्र भक्षयेत् ॥**

कोरदूषैः कोद्रवैरुपयुक्तैस्तथा मदनकैः प्रायेण धुर्धूरवत् गदा भवन्ति । अत्र तु विशेष उन्मादाक्षिनाशौ । व्याख्यासमम् ॥

**नानाप्रकारैः संयोगैः कोद्रवा मदहेतवः ।**
**तान्विभज्ययथादोषं चिकित्सेदविरोधिभिः ॥**

कोद्रवाः कोरदूषा नानाविधैः संयोगैर्मदहेतवो भवन्ति । तान् मदान् दोषादिभिर्विभज्या विरोधेन चिकित्सेत् ॥

गरं निर्णीयक्रमप्राप्तं दूषीविषं निर्णेतुमाह ॥

**दूषीविषार्तंसुस्विन्नमूर्ध्वंचाधश्चशोधितम् ।**
**दूषीविषारिमगदं लेहयेन्मधुनाप्लुतम् ॥**

दूषीविषार्तमित्यादि । दूषीविषेणार्तं मादावेव स्विन्नं कृत्वोर्ध्वमधश्च वमनविरेचनाभ्यां शोधितं दूषीविषारिनामानमगदं मधुनाप्लुतं लेहयेत् ॥

**पिप्पल्योध्यामकं मांसी लोध्रमेला सुवर्चिका ।**
**कुटन्नटं नतं कुष्ठं यष्टीचन्दनगैरिकम् ।**
**दूषीविषारिर्नाम्नायं नचान्यत्रापिवार्यते ॥**

पिप्पल्य इत्यादिना स एव दूषीविषारिरुच्यते । अयमगदो नाम्ना दूषीविषारिरन्यत्रापि विषे न निवार्यते ॥

**हरीतकीसलवणा मागधीमरिचानि च ।**
**एतदूषीविषार्तानां काश्यपोक्तं विरेचनम् ॥**

हरीतक्यादि काश्यपोक्तं विरेचनम् । मागधी पिप्पली ॥

**युञ्ज्याद्वा विषरोगेषुरेकेव्योषादिकं भिषक् ॥**

व्योषादिर्नामकल्पोक्तं व्योषत्रिजातकेत्यादि विरेचनं सर्वेषु विषरोगेषु युञ्ज्यात् ॥

तरुणस्य पलाशस्य स्रुतं क्षारोदकं पचेत् ।
क्वाथे तत्र प्रतीवापं प्रक्षिपेच्छ्लक्ष्णचूर्णितम् ॥
व्योषं शिरीषकुसुमं मधुकं शारिबे मिसिम् ।
कुष्ठं वेल्लनिशे लाक्षां शुक्लां सुरसमञ्जरीम् ॥
सिन्धूत्थं रक्तमृन्मांसीं रेणुकां हिंगुबाल्हिकम् ।
दर्वीप्रलेपितज्जातं गोविषाणे निधापयेत् ॥
क्षयगुल्मोदरार्शांसि मेहं मन्दाग्नितां ज्वरम् ।
त्वग्दोषकासापस्मारग्रहोन्मादभगन्दरान् ॥
पाण्डुं कण्ठस्वरगदान् प्लीहानं श्वयथुं कृमीन् ।
कोलमात्रमतः खादन् जयेत् सर्वविषाणि च ॥

तरुणपलाशस्य क्षारेण स्रुतमुदकं पचेत् । तस्मिन् क्वाथे पच्यमाने व्योषादिकं श्लक्ष्णचूर्णितं प्रतीवापं प्रक्षिपेत् । तच्च पाकेन दर्वीप्रलेपि जातं गोश्रृङ्गे निधापयेत् । अतः प्रत्यहं कोलमात्रं खादन् क्षयादीनि सर्वविषाणि च जयेत् । शुक्लामिति सुरसमञ्जर्या विशेषणम् । रक्तमृत् गैरिकम् । रेणुका हरेणुः । बाल्हीकं कुङ्कुमम् ॥

विषं तेजोमयं मन्त्रैः सत्यब्रह्मतपोमयैः ।
यथा निवार्यते शीघ्रं प्रयुक्तैर्न तथौषधैः ॥
न तु सर्वमनुष्याणां सन्ति भेषजसम्पदः ।
अज्ञातरोगसद्भावे योग्यताचातिदुर्लभा ॥
प्रकुप्यति विषं भूयः केवलैश्चौषधैर्जितम् ।
अवाप्तौ सिद्धमन्त्राणां यतेतातश्चिकित्सकः ॥
तेपि च व्रतहीनस्य हीना वा स्वरवर्णतः ।
यस्मान्नसिद्धिं मा यान्ति तस्माद्योज्योऽगद-
[ क्रमः ॥

विषमित्यादिश्लोकचतुष्टयेना गदानां प्रभावातिशयकीर्तनम् । विषाणां विषरोगाणां च औषधेभ्यो मन्त्राः परमौषधम् । ते च व्रतादिसापेक्षत्वात् सर्वस्य च न सिद्धिदाः तस्मात्तत्कार्ये अगदक्रमो योज्य इति पिण्डार्थः । विषं हि तेजोमयं तच्च यथा सत्यादिमयैर्मन्त्रैः प्रयुक्तैः शीघ्रं निवार्यते तथानौषधैः । नचापि सर्वेषां मनुष्याणां भेषजसम्पदो विद्यन्ते । सतीष्वपि वातासु विषस्यक्षिप्रकारित्वाद् विज्ञातरोगसद्भावे विषभुक्ते पुरुषे भेषजयोग्यतैवातिदुर्लभा । न केवलमेतावानेवयावदौषधैर्जितमपि विषं भूयः प्रकुप्यति । यत एवमतश्चिकित्सकः सिद्धमन्त्राणामवाप्तौ यतेत । एतावतौषधस्या प्राधान्यमुक्तम् । सम्प्रति मन्त्राणां दुर्लभत्वमुच्यते । त इति । ते पि च मन्त्रा व्रतहीनस्य भिषजोऽथवा स्वरेण वर्णेन वा हीनानैव सिद्धिं मा यान्ति तस्माद्धेतोरगदक्रमएव योज्यः ॥

[विषसमान प्रकृत्यादिसंयोगस्य संज्ञाविशेषं दर्शयति ॥ ]

विषप्रकृतिकालान्नदोषदूष्यादिसङ्गमे ।
विषसङ्कटमुद्दिष्टं शतस्यैकोत्रजीवति ॥

विषादीनामर्थात् सदृशानां सङ्गमएकत्र सन्निपाते विषसङ्कटमुद्दिष्टमाचार्यैः । अत्र विषसङ्कटे शतस्यैको जीवति जीवितं दुर्लभमिति तात्पर्यार्थः । [विषप्रकृतिः तीक्ष्णादिगुणसाम्यात् पित्तप्रकृतिः । विषकालोम्बुयोनित्वात् वर्षाकालः । विषान्नं कटुतीक्ष्णादिसाम्यात् सर्षपादि । दोषो गुणसाम्यात् पित्तम् । एवं

दूष्यं तदाश्रयत्वाद्रक्तम् । आदिशब्देनान्यदपि तत्सदृशगुणं क्षुत्पिपासाद्यपतर्पणं च गृह्यते ॥ ]

[विषवृद्धिप्रसङ्गात्तत्कारणमन्यदप्याह ॥ ]

क्षुत्तृष्णाघर्मदौर्बल्य क्रोधशोकभयश्रमैः ।
अजीर्णवर्चोद्रवता पित्तमारुतवृद्धिभिः ॥
तिलपुष्पफलाघ्राणभूबाष्पघनगर्जितैः ।
हस्तिमूषिकवादित्र निस्वनैर्विषसङ्कटैः ।
पुरो वातोत्पलामोद मदनैर्वर्द्धते विषम् ॥

क्षुदादिभिर्विषं वर्द्धते । निस्वनशब्देन हस्त्यादीनां प्रत्येकं सम्बन्धः । विषसङ्कटमुक्तलक्षणम् । मदनो हर्षः । [तिलपुष्पफलाघ्राणं तिलस्य पुष्पफलयोराघ्राणम् । तिलपुष्पस्य मदनफलस्य चेति केचित् । भूबाष्पः प्रथमजलसिक्ताया भूमेर्धूमाकार ऊष्मा । घनगर्जितं मेघध्वनिः । हस्तिनिस्वनादीनां प्रत्येकमेकैकस्य बहुत्वेपि विषसङ्कटसंज्ञास्तीति बोध्यम् । उत्पलस्यामोद उत्पलामोदः । मदनेन कामवृध्या ॥]

[वर्षासु विषवृद्धेः कारणमाह ॥ ]

वर्षासुचाम्बुयोनित्वात् सङ्क्लेदं गुडवद्गतम् ।
विसर्पति घनापाये तदगस्त्योहिनास्ति च ।
प्रयाति मन्दवीर्यत्वं विषं तस्मात् घनात्यये ॥

वर्षासु च विषमम्बुकारणत्वस्वभावत्वात् गुडवत् सङ्क्लेदं गतं विसर्पति विस्तीर्यते । तच्च विषं घनापायेशरद्यगस्त्योहिनस्ति । तस्माद्धेतोर्घनात्ययेशरदि विषं मन्दवीर्यत्वं याति । [अम्बुयोनित्वात् सागरोद्भवतया वर्षासु वर्षाकाले गुड इव सङ्क्लेदं गतं प्राप्तं घनापाये शरदिचः समुच्चये विसर्पति सर्वतः सञ्चरति । अगस्त्यः नक्षत्ररूपेण तत्कालोदितोगस्त्योनाममहर्षिः तद्विषं हिनस्ति नाशयति । मन्दवीर्यत्वमल्पबलत्वम् ॥ ]

इति प्रकृतिसात्म्यर्तु स्थानवेगबलाबलम् ।
आलोच्य निपुणं बुध्या कर्मानन्तरमाचरेत् ॥

इत्यनन्तरोक्तप्रकारेण प्रकृत्यादिकं विशिष्टया बुध्या निपुणमालोच्य विकल्प्यानन्तरमव्यवहितं कर्माचरेत् । [प्रकृतिर्विषप्रकृतिः । सात्म्यं परिचितवस्तु । ऋतुर्वर्षादिः । स्थानं विषस्थानम् । वेगो विषवेगः । बलाबलं द्रव्यविशेषजनितम् ॥ ]

[कफानुपूर्व्या विषस्य चिकित्सामाह ॥ ]

श्लैष्मिकं वमनैरुष्णरूक्षतीक्ष्णैः प्रलेपनैः ।
कषायकटुतिक्तैश्च भोजनैः शमयेद्विषम् ॥
पैत्तिकंस्रंसनैः सेकप्रदेहैर्भृशशीतळैः ।
कषायतिक्तमधुरैर्घृतयुक्तैश्च भोजनैः ॥
वातात्मकंजयेत्स्वादु स्निग्धाम्ललवणान्वितैः ।
सघृतैर्भोजनालेपैस्तथैव पिशिताशनैः ॥

श्लैष्मिकमित्यादिना कफस्थानक्रमेण चिकित्सा सुबोधा । वमनैरुष्णादिगुणैः प्रलेपनैः कषायादिरसैर्भोजनैश्च श्लेष्मात्मकं विषं शमयेत् । पित्तात्मकं स्रंसनादिभिः । वातात्मकं स्वाद्वादिगुणैर्भोजनैरालेपैस्तथा पिशिताशनैश्च जयेत् ॥

[विषहरणे घृतस्य वैशिष्ट्यमाह ॥ ]

नाघृतं स्रंसनं शस्तं प्रलेपो भोज्यमौषधम् ।
सर्वेषु सर्वावस्थासु विषेषु न घृतोपमम् ।
विद्यते भेषजं किञ्चिद्विशेषात् प्रबलानिले ॥

सर्वत्र च विषे स्रंसनादिचतुष्टयं घृतरहितं नैवशस्तम् । कुत इत्याह सर्वेष्विआदि व्याख्यासमः श्लोकः । [सर्वेषु स्थावरजङ्गमाघ्रकेषु विषेषु सर्वावस्थासु वमनविरेचनास्राप्राचालेपसेकभोजनागदपानप्रभृतिषु घृतोपमं घृततुल्यमन्यदौषधं किञ्चिदपि न विद्यते किमपि नास्तीत्यर्थः । प्रबलानिले वातोल्बणे विषे विशेषात् तत्र घृतमेव विशेषेण शस्तमित्यर्थः ।]

**रक्तगे स्रावयेद्रक्तं पित्तवच्च क्रियाक्रमः ।**
**दूषीविषे पुनस्तत्स्थे पञ्चकर्माणि चाचरेत् ॥**

रक्तगे विषे रक्तं स्रावयेत् पित्तप्राप्तवच्च क्रियां कुर्यात् । दूषीविषे पुनस्तत्स्थ इति रक्तस्थे पञ्चकर्माणि वमनादीनि चाचरेत् ॥

**गण्डूषैः कबळैः प्राशैस्तीक्ष्णैः प्रधमनाञ्जनैः ।**
**शिरोगतं प्रशमयेद्विषसंक्रमणैस्तथा ॥**

शिरोगतं विषं गण्डूषादिभिस्तीक्ष्णैर्जयेत् विषसंक्रमणैश्च ॥

**विषदुष्टकफस्रोतोरुद्धवायुर्मृतोपमः ।**
**यः स्यादसाध्यलिङ्गैश्च रहितस्तस्य योजयेत् ॥**
**मूर्ध्नि काकपदं कृत्वा कल्कं चर्मकसोद्भवम् ।**
**ध्मापनं चास्य कटभीजालिनी कटुकैर्हितम् ॥**

विषदुष्टेन कफेन स्रोतस्सुरुद्धो वायुर्यस्य स तथाविधो मृतोपमोयः स्यादसाध्य विषलिङ्गरहितश्च तस्य शिरसि शस्त्रेण काकपदं कृत्वा चर्मकसोद्भवं कल्कं योजयेत् । चर्मकसा कटुकरोहणी । अस्य च मृतोपमस्य कटभ्यादिभिर्नासायां ध्मापनं च हितम् ॥

**आशये यस्य दोषस्य विषं तिष्ठति तं पुरः ।**
**आश्रयाश्रयिणोर्विद्वानविरोधेन साधयेत् ॥**

यस्य च दोषस्य वाताद्यन्यतमस्याशये स्थाने विषं तिष्ठति तं दोषं विद्वान् भिषक् पुरः प्रथमं साधयेत् । कथमित्याह । आश्रयाश्रयिणो रविरोधेन यथा चिकित्सयोभौ न विरुध्यतः ॥

**क्षारागदः कफस्थानस्थिते स्वेदः सिराव्यधः ।**
**पित्ते क्षौद्रपयोम्लाज्यपानसेकावगाहनम् ॥**
**स्वेदो वाताशये दध्नापानं च नत कुष्ठयोः ।**

कफस्थानस्थिते विषे चिकित्सितोक्तः क्षारागदः स्वेदः सिराव्यधश्च प्रयोज्यः । पित्ते पित्ताशयस्थे विषे क्षौद्रादिकमवगाहनान्तम् । वाताशये वाताशयस्थे विषे स्वेदस्तथानत कुष्ठयोर्दध्ना पानम् ॥

**क्षीरेणागदगर्भेण मदनस्य फलेन च ।**
**आस्थापनं प्रयुञ्जीत वाताशयगते विषे ॥**

अन्यतमागदगर्भेण क्षीरेण मदनफलयुक्तेना स्थापनं च वाताशयगते विषे प्रयुञ्जीत ॥

**पचेद्यष्टीमधुक्वाथे तैलं क्षीरचतुर्गुणम् ।**
**त्रिफला सर्पवेताळी शतपुष्पेन्दु राजिभिः ॥**
**अनन्तया च तत्पाननावनाभ्यङ्गवस्तिषु ।**
**भोजने च प्रणिहितं हन्ति वाताशया द्विषम् ॥**

मधुयष्टीक्वाथे क्षीरचतुर्गुणं तैलं त्रिफलादिभिः कल्कीकृतैः पचेत् । तत्तैलं पानादिषु प्रणिहितं वाताशयाद्विषं हन्ति । सर्प (नि) सर्पमञ्जरिसंज्ञायां केसरी तु समञ्जरी । वे-

ताळी (नि) वेताळीतालपर्णी च ताली च परिकीर्तिता । अनन्तादूर्वा ॥

**बलया सोमराज्या वा पचेत् पाटलयाथवा ।**
**घृतमण्डसमं तैलमानुवासनिकं परम् ॥**

बलादित्रयादन्यतमेन घृतमण्डसमं तैलं पचेत् तत्परमानुवासनिकं प्रकरणाद्वाताशयगते विषे ॥

**विषोपद्रवपथ्यं च वीक्ष्ययुञ्ज्याद्यथामयम् ॥**

विषोपद्रवं पथ्यं च वक्ष्यमाण विषोपद्रवप्रतिषेधाध्यायविहितं वीक्ष्य यथामयं रोगाननतिक्रमेण युञ्ज्यात् ॥

[ विषस्य दोषभेदजनितं सुसाध दुस्साधत्वमुपसंहरणमुखेन दर्शयति ॥ ]

**अयत्नाच्छ्लेष्मगंसाध्यंयत्नात्पित्ताशयाश्रितम्**
**सुदुस्साधमसाध्यं वा वाताशयगतं विषम् ॥**

इत्युत्तरे चत्वारिंशोध्यायः ॥

अयत्नादित्यादिना साध्यासाध्यनिरूपणं सुबोधम् । [ श्लेष्मगं श्लेष्माशयगतं विषं अयत्नात् यत्नेन विना साध्यम् । पित्ताशयाश्रितं पित्ताशयगतं यत्नात् प्रयत्नेन साध्यम् । वाताशयगतं सुदुस्साधं सुतरां दुस्साधं दुःखेन साधयितुं शक्यम् । असाध्यं साधयितुमशक्यं वाशब्दो विकल्पार्थः । क्षारागदः कफस्थानस्थित इत्यादिक्रियाकथनादाश्रयाश्रयिणोः क्रियासाम्यतैवात्र श्लेष्माशयगतस्या यत्नसाध्यत्वे हेतुः । एवं पित्ताशयाश्रितस्य स्वेदनादिद्रव्योपयोगाद्यसमक्रियतया यत्नसाध्यत्वम् । वाताशयगतस्याश्रयाश्रयिणोः क्रियासाम्येपि यस्मादत्यर्थगुष्णं विषमतः सर्वविषेषूक्ताः परिषेकास्तु शीतळा इत्यादि विषक्रियायाः शीतळत्वेन वातळत्वान्महात्ययतयास्य दुस्साधत्वम् ॥ ]

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्याया-
मुत्तरे चत्वारिंशोऽध्यायः ॥

# एकचत्वारिंशोऽध्यायः ।

## सर्पविषविज्ञानीयम् ॥

स्थावरं विषमुक्त्वा जङ्गममुच्यते । तत्रापि सर्पाणां प्राधान्यात्तद्विज्ञानार्थमध्याय आरभ्यते ॥

**अथातः सर्पविषविज्ञानीयं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥**

**दिव्यभौमविभागेन द्विविधाः पन्नगाः स्मृताः ।**
**वासुकिस्तक्षकोनन्तः सगरः सागरालयः ॥**
**तथा नन्दोपनन्दाद्याः समिद्धाग्निसमप्रभाः ।**
**दिव्यागर्ज्जन्तिवर्षन्ति द्योतन्ते द्योतयन्तिते ॥**
**धारयन्ति जगत्कृत्स्नं कुर्युःक्रुद्धाश्च भस्मसात् ।**
**दद्भिनश्वासैर्न्नमस्तेभ्यो नतेष्वास्ति चिकित्सितम् ॥**

द्विविधाः पन्नगाः सर्पाः केचित् दिव्याः केचित् भौमाः । सुबोधम् । तेभ्यो दिव्येभ्यो नमोस्तु तेषु क्रुद्धेषु चिकित्सा नास्ति ॥

[भौमानां सर्पाणां वैविध्यं दर्शयति ॥ ]

**दर्वीकरा मण्डलिनो राजीमन्तश्च पन्नगाः ।**

**त्रिधा समासतो भौमा भिद्यन्ते तेत्वनेकधा ।**
**व्यासतो योनिभेदेन नोच्यन्तेऽनुपयोगतः ॥**

भौमास्तु पन्नगा दर्वीकरादिभेदात् त्रिधा समासतः सङ्क्षेपेण । ते तु दर्वीकरादयो व्यासतो विस्तरतो योनिभेदेन जातिविशेषेणानेकधा बहुप्रकारेण भिद्यन्ते भिन्ना भवन्ति तथा-नोच्यन्तेऽनुपयोगतः प्रयोजनभावात् ॥

[दर्वीकरादीनां विषस्य वातादिकोपकारणत्वं दर्शयति ॥]

**विशेषाद्रूक्षकटुकमम्लोष्णं स्वादुशीतलम् ।**
**विषं दर्वीकरादीनां क्रमाद्वातादिकोपनम् ॥**

एषां च दर्वीकरादीनां विषं क्रमादेव च वातादिकोपनम् । दर्वीकराणां विषं रूक्षकटुकं वातकोपनं च । मण्डलिनामम्लोष्णं पित्तकोपनं च राजीमतां स्वादुशीतलं कफकोपनं चेति क्रमार्थः । [विषस्य तीक्ष्णादिगुणयोगे सत्यपि विशेषकथनमत्र रूक्षादीनां द्वयाना मेतेषामाधिक्य द्योतनार्थम् ॥]

[एषां विषवृद्धिकालमाह ॥]

**तारुण्यमध्यवृद्धत्वे वृष्टिशीतातपेषु च ।**
**विषोद्धणा भवन्त्येते व्यन्तरा ऋतुसन्धिषु ॥**

एते च दर्वीकरादयस्तारुण्यादिषु वृष्ट्यादिषु चतुर्षु विषोद्धणा भवन्ति । दर्वीकरास्तारुण्ये वृष्टिकाले च विषोद्धणा भवन्ति । मण्डलिनो मध्यवयसि शीतकाले च । राजीमन्तो वृद्धत्वे आतपकाले च । व्यन्तराः सङ्करजातयः येषां विजातीयौ पितरौ ते व्यन्तरास्ते ऋतुसन्धिषु क्रमेणैव विषोद्धणा भवन्ति । ऋतुसन्धिः स्वाभविकारम्भात् पूर्वम् । [वृष्टिः श्रावणादिमासचतुष्कम् । शीतं मार्गशीर्षादिकम् । आतपं चैत्रादिकम् ॥]

[दर्वीकरादीनां विशेषः कथं ज्ञायत इत्यत्राह ॥]

**रथाङ्गलाङ्गलच्छत्र स्वस्तिकांकुशधारिणः ।**
**फणिनः शीघ्रगतयः सर्पा दर्वीकराः स्मृताः ॥**

रथाङ्गादिचिह्नधारिणः फणावन्तः शीघ्रगमनाश्च सर्पा दर्वीकराः स्मृताः । रथाङ्गं चक्रम् । लाङ्गलो हलः । अन्यत् सुबोधम् । [रथाङ्गादिरेखाकारेण फणमध्ये धारयन्तीत्यर्थः ॥]

**ज्ञेया मण्डलिनोऽभोगा मण्डलैर्विविधैश्चिताः ।**
**प्रांशवो मन्दगमनाः—**

ज्ञेया इति । ते मण्डलिनो ज्ञेयाः ये अभोगाः फणरहिताः विविधैर्नानाप्रकारैर्मण्डलैर्मण्डलाकारैर्वर्णविशेषैश्चिता व्याप्ताः प्रांशवो दीर्घाकृतयः मन्दगमना अल्पवेगाश्च भवन्ति ॥

**—राजीमन्तस्तु राजिभिः ॥**
**स्निग्धाविचित्रवर्णाभिस्तिर्यगूर्ध्वं च चित्रिताः ।**

ये स्निग्धास्तिर्यगूर्ध्वं च विचित्रवर्णाभीराजिभिर्लेखाभिश्चिता श्चिह्नितास्ते राजीमन्तः ॥

[विजातीयानाह ॥]

**गोधासुतस्तु गौधेरो विषे दर्वीकरैः समः ॥**
**चतुष्पात्—**

गोधायाः सुतश्चतुष्पान्नाम्ना गौधेरः स दर्वीकरसमविषःप्रसङ्गादुक्तः । [गौधेरशब्देनैव गोधासुतत्वे सिद्धे पुनरपि गोधासु तत्वकथनं

जात्यन्तरशङ्कापनोदनार्थम् । तुशब्देन कीटानां मध्ये वक्ष्यमाणाया गोधाया अत्र विजातीयप्रसङ्गोक्त्या तद्विषस्य दर्वीकरविषसाम्यकथनाच्च गोधायां दर्वीकरेणोत्पादित इति च द्योत्यते । विषे दर्वीकरैःसमः जात्यन्तरत्वेपि विषेण दर्वीकरतुल्यः दर्वीकर इत्युपलक्षणं मण्डलिराजिलयोरप्येवमूह्यम् ॥ ]

—व्यन्तरान् विद्यादेतेषामेव सङ्करात् ॥
व्यामिश्रलक्षणास्ते हि सन्निपातप्रकोपनाः॥

एतेषामेव दर्वीकरादीनां सङ्करात् स्त्रीपुंसमिश्रीभावात् व्यन्तरान् विद्यात् । ते हि व्यन्तरा यथासङ्करं व्यामिश्रलक्षणाः सन्निपातप्रकोपनाश्च ॥

दिव्यकोजगरः सर्पः पताको वृक्षशायिकः ।
शष्कुलीपुष्पकः क्षीरी लासिनी सारसाहिकः ॥
वर्षाहिकोज्योतिरथः शुकवक्त्रो बलाहकः ।
गजभक्षःप्लवोद्वाही निर्विषाः षोडशा ह्यः ॥

दिव्यकादिनामभिः षोडशाहयः सर्पा निर्विषा भवन्ति ॥

प्रायेणर्तुमतीमासं ज्येष्ठं तिष्ठति पन्नगी ।
आषाढे सर्पसंयोगा दण्डानां मासिकार्तिके ॥
द्वेशतेविंशतीद्वे च सा सूते—

प्रायेणेत्यादिना जन्मादिक्रमेण सर्पा उच्यन्ते । पन्नगी सर्पिणी ज्येष्ठं मासं प्रायेणर्तुमती गर्भाधानयोग्या तिष्ठति । तत आषाढे मासि सर्पसंयोगात् सा पन्नगी कार्तिके मास्यण्डानां चत्वारिंशदधिकं शतद्वयं सूते ॥

—तत्र जायते ॥
कर्केतनसवर्णेऽण्डे समुद्भिन्ने भुजङ्गमः ।
दीर्घलोहितराजीभिश्चित्रे योषिन्नपुंसकम् ॥
शिरीषपुष्पसदृशे—

तत्रचाण्डेषु कर्केतनाख्यमणि सवर्णेण्डे समुद्भिन्ने भग्ने भुजङ्गमः सर्पो जायते । दीर्घाभिर्लोहिताभिश्च रेखाभिश्चित्रेऽण्डे योषित् सर्पिणी जायते । समुद्भिन्न इति सर्वत्र योज्यम् । शिरीषपुष्पसदृशेऽण्डे नपुंसकं जायते ॥

—दंष्ट्राः सर्पस्य सप्तमे ॥
चतस्रः सम्भवन्त्यह्नि विषं तासु चतुर्दशे ॥

सर्वस्य च सर्पस्य जन्मनः सप्तमेह्नि च तस्रो दंष्ट्राः सम्भवन्ति । अधो द्वे उपरि च द्वे इति च ताः स्मृताः । जन्मन एव चतुर्दशेह्नि तासु दंष्ट्रासु विषं सम्भवन्ति ॥

वामाधराऽसिता पीता तदूर्ध्वा दक्षिणात्वधः ।
रक्ताश्यावोत्तरैकद्वित्रिचतुर्विषबिन्दुकाः ॥
ताः क्रमान्मुद्गमात्रोत्रविन्दुः—

तत्राधोभवयोर्वामा असितवर्णा तदूर्ध्वा उपरिभवा वामा पीतवर्णा अधोभवा तु दाक्षिणा रक्ता लोहि । उत्तरातूपरिभवा दक्षिणा श्यावबर्णा । नीलपीतलोहितश्यावाश्च ता दंष्ट्रा उक्तक्रमेणैकादि विषबिन्दुकाः । तेनाधोवामायामेको विषबिन्दुर्भवति । ऊर्ध्ववामायां द्वौ बिन्दू । अधो दक्षिणायां त्रयो बिन्दवः । ऊर्ध्वदक्षिणायां चत्वार इति क्रमार्थः । अत्र तु विषे बिन्दोः प्रमाणं मुद्गमात्रम् ॥

—एष हि भोगिनाम् ॥
विषे विकल्पानान्येषां—

एष त्वनन्तरोक्तो नानाविधो भोगिनां सर्पाणामेव विषे विकल्पः न त्वन्येषां जङ्गमविषाश्रयाणाम् ॥

प्रकृतमुच्यते ॥

**—विद्यादंष्ट्रास्तथापराः ॥**
**चत्वारिंशद् भुजङ्गस्य निर्विषाश्चतुरुत्तराः ॥**

भुजङ्गस्यापराश्चतुरुत्तराश्चत्वारिंशद्दंष्ट्रा विद्यात्ता निर्विषाः ॥

**आयुर्वर्षशतं विंशं पञ्चवर्षशतायुषः ।**
**गोनसा घर्मतप्तानां गवां नासासमुद्भवाः ॥**

सर्पाणां चायुर्विंशं शतं विंशत्यधिकं वर्षशतम् । गोनसास्तु पञ्चवर्षशतायुषो भवन्ति । ते च गोनसा घर्मतप्तानां गवां नासिकात उद्भवन्ति ॥

**ततोर्ध्वदृग्महाकायनेत्रजिह्वाशिरःस्वरः ।**
**व्यक्तभोगःपुमानधीरः स्त्रीस्यात्तस्माद्विपर्यये ॥**
**आयता चपला क्लीबः सुकुमारो जडाकृतिः ।**
**मन्दवेगस्वनक्रोधः सिताभास्तिर्यशीर्षकः ॥**

तत्र गोनसेषु य ऊर्ध्वदृक्त्वादियुक्तः स पुमानिति विज्ञेयः । एतल्लक्षणविपर्यये आयता चपला च स्त्री विज्ञेया । महच्छब्दः कायादिभिः स्वरान्तैः सम्बध्यते । व्यक्तः स्फुटो भोगो यस्य स तथोक्तः । क्लीबो नपुंसको गोनसः सुकुमारत्वादिगुणो भवति ॥

**दिनात्रियामासन्ध्यासु प्रबलास्ते यथाक्रमम् ।**
**तदैव चापराध्यन्ति सर्वदैव तु पन्नगी ॥**

ते च त्रयो गोनसाः क्रमेण दिनादिषु प्रबला भवन्ति । पुमान् दिने स्त्री त्रियामायां रात्र्यां क्लीबः सन्ध्यास्विति क्रमार्थः । क्रमेण च ते तदैव च दिनादावपराध्यन्ति भक्षयन्ति । पन्नगी तु सर्पिणी सर्वदैवापराध्यति । एतत् प्रसङ्गेनोक्तम् ॥

ब्राह्मणादिभेदेन सर्पाणां लक्षणमुच्यते ॥

**ब्राह्मणाः क्रोधनानीलकपिलाः श्वेतलोहिताः ।**
**रक्तास्याः पिङ्गनयना मेध्यदेशविचारिणः ॥**
**भोगे यज्ञोपवीतादिद्विजचिह्नोपचिह्निताः ।**
**विल्वपुष्पहिमोशीरपद्मगुल्गुलुगन्धयः ॥**

ब्राह्मणा इत्यादि । सुबोधम् । रक्तास्या लोहितमुखाः । मेध्यो देशः शुचिः प्रदेशः । द्विजचिह्नं यज्ञोपवीतादिब्राह्मणचिह्नम् ॥

**क्षत्रिया मानिनो धीरा रक्ताक्षा भृशकोपनाः ।**
**पक्वजाम्बवखर्जूरद्राक्षाभिन्नाञ्जनप्रभाः ॥**
**भोगेर्द्धचन्द्रश्रीवत्सशङ्खचक्रहलाङ्किताः ।**
**जातीचम्पकपुन्नागपत्रजोङ्गकगन्धयः ॥**

क्षत्रिया इति । भोगेर्द्धचन्द्रादिलाञ्छनं चिह्नं येषां ते तथोक्ताः ॥

**वैश्याः पारावताभासा वज्रगोमेदकप्रभाः ॥**
**विन्दुमण्डलचित्राङ्गा धूम्रपाटललोहिताः ।**
**बस्तकुष्ठाविकक्षीरसर्पिषां गन्धतः समाः ॥**

वैश्या इति । वज्रं हीरम् । गोमेदको नाम मणिविशेषः । विन्दवो वर्तुलाश्छेदाः । बस्तादीनां गन्धतः समा इति सम्बन्धः ॥

**शूद्राः सवर्णा गोधूममहिषद्विपकर्दमैः ।**
**बिन्दुरेखाचितारूक्षाः सुरा शोणितगन्धयः ॥**

शूद्रा इति । कर्दमान्तैः सवर्णा इति सम्बन्धः ॥

**पूर्वमध्यापराह्णेषु चरन्ति ब्राह्मणादयः ।**
**अस्तंगते रवौ शूद्राः—**

पूर्वाह्णे ब्राह्मणाश्चरन्ति दशनाय । मध्याह्ने क्षत्रियाः । अपराह्णे वैश्याः । शूद्रास्तु रवावस्तमिते चरन्ति ॥

**—दशन्ति ब्राह्मणाः पुरः ॥**
**संस्थिता दक्षिणे पार्श्वे क्षत्रिया वामतो विशः ।**
**शूद्रास्तु पृष्ठतो—**

ब्राह्मणाः पुरोऽग्रतोवस्थितादशन्ति । क्षत्रिया दक्षिणे पार्श्वे । वैश्या वामे । शूद्रास्तु पृष्ठे ॥

**—विप्रास्त्रीनप्यनिलपूर्वकान् ॥**
**कोपयन्ति क्रमाद्दोषांस्त्रींस्त्रयः क्षत्रियादयः ।**

ब्राह्मणास्त्रीनपि दोषान् कोपयन्ति । क्षत्रियादयस्त्रयः त्रीन् दोषान्यथासंख्येनानिलपूर्वकान् कोपयन्ति । क्षत्रियोऽनिलं वैश्यः पित्तं शूद्रः कफमिति क्रमार्थः ॥

**दंशगन्धोऽङ्गगन्धेन ज्ञेयस्तेषां यथायथम् ॥**

तेषां च ब्राह्मणादीनां यथायथं यथास्वं दंशगन्धो दष्टस्याङ्गगन्धेन ज्ञेयः ॥

**वायुमूषिकमण्डूकसर्वभक्षाः क्रमेण ते ॥**

ते च ब्राह्मणादयः क्रमेण यथासंख्येन वाय्वादिभक्षा भवन्ति ॥

**आहारार्थं भयात् पादस्पर्शादतिविषात् क्रुधः ।**
**पापवृत्ततया वैरादेवर्षियमचोदनात् ।**
**दशन्ति सर्पास्तेषूक्तं विषाधिक्यं यथोत्तरम् ॥**

आहारार्थमित्यादिना दशविधं सर्पाणां दंशकारणम् । तेषु च दशसु कारणेषु यथोत्तरं विषाधिक्यमुक्तम् । पाठक्रमेण यो यस्मादुत्तरस्तत्र तस्मादधिकं विषं भवति ॥

**आविष्टात् कारणंज्ञात्वा प्रतिकुर्याद्यथायथम् ॥**

आविष्टादाशु १मन्त्रेणाहूतात् सर्पात् दंशेषु दशकान्यतमं कारणं ज्ञात्वा यथायथं प्रतीकारमौषधमन्त्रादिकं कुर्याद्वा न वा । (उक्तं च सूत्रे ॥ मन्त्रदेवतया हूताना चक्षीरन् महाहयः । विषसुप्तप्रबुद्धस्था भावाभावौ तदायुष इति) । [आविष्टात् सर्पदष्टाद्दूताद्वा दूतमेव दष्टकं मन्यन्ते तल्लक्षणविदः । दूतस्याकृत्यवस्थानचेष्टाव्यवहृतिवर्णसंख्यादिलक्षणविशेषेण सर्पाणां सविषनिर्विषत्वविशेषं जातिकारणदंशस्थानविशेषं तुण्डाहतव्यालीढव्यालुप्तदष्टकदष्टानिपीडितं दंष्ट्रापदविशेषं च बुध्वा यथायथं प्रतिकुर्यात् ॥]

**व्यन्तरः पापशीलत्वान्मार्गमावृत्य तिष्ठति ॥**

व्यन्तरस्तु सर्पः पापस्वभावत्वान्मार्गं पन्थानमावृत्य रुध्वा तिष्ठति ॥

**यत्र लालापरिक्लेदमात्रं गात्रे प्रदृश्यते ।**
**न तु दंष्ट्राकृतं दंशं तत्तुण्डाहतमादिशेत् ॥**
**एकं दंष्ट्रापदं द्वे वा व्यालीढाख्यमशोणितम् ।**
**दंष्ट्रापदे सरक्ते द्वे व्यालुप्तं त्रीणि तानि तु ॥**
**मांसच्छेदादविच्छिन्नरक्तवाहीनि दष्टकम् ।**
**दंष्ट्रापदानि चत्वारि तद्वद्दष्टनिपीडितम् ॥**

यत्रेत्यादिना दंष्ट्रासंयोगविशेषक्रमेण दंशलक्षणम् । यत्र दंष्ट्राक्षतेन विनाङ्गे लालादिमात्रं दृश्यते तद्दंशं नाम्ना तुण्डाहतमादिशेत् । यत्र त्वेकं दंष्ट्रापदं द्वे वा दंष्ट्रापदे दृश्येते तं दंश-

१. मन्त्रेणावेशितसर्पाद् दष्टादित्यर्थः ॥

मशोणितं सन्तं व्यालीढमादिशेत् । सरक्ते तु द्वे दंष्ट्रापदे नाम्ना व्यालुप्तमादिशेत् । तानीति दंष्ट्रापदानि त्रीणि मांसच्छेदाद्धेतोरविच्छिन्नरक्तवाहीनि नाम्ना दष्टकम् । चत्वारि दंष्ट्रापदानि तद्वदिति मांसच्छेदादविच्छिन्नरक्तवाहीनि नाम्ना दष्टनिपीडितं भवति ॥

**निर्विषं द्वयमत्राद्यमसाध्यं पश्चिमं वदेत् ॥**

अत्र तुण्डाहतादिपञ्चके आद्यं द्वयं तुण्डाहतं व्यालीढं च निर्विषम् । पश्चिमं तु द्वयं दष्टकं दष्टनिपीडितं च असाध्यं वदेत् । पारिशेष्याद्व्यालुप्तं सविषं साध्यं च ॥

**विषं नाहेयमप्राप्य रक्तं दूषयते वपुः ।**
**रक्तमण्वपि तु प्राप्तं वर्द्धते तैलविन्दुवत् ॥**

आहेयमहिसम्बन्धि सार्पं विषमप्राप्य रक्तं वपुर्न दूषयते । अण्वपि स्वल्पमपि विषं तु रक्तं प्राप्तं तैलविन्दुवद्वर्द्धते ॥

**भीरोः सर्पाङ्गसंस्पर्शाद् भयेन कुपितोनिलः ।**
**कदाचित् कुरुते शोफं सर्पाङ्गाभिहतं तु तत् ॥**

भीरोस्तु पुंसो विनैव दंशं सर्पस्याङ्गस्पर्शमात्रेण भयेनानिलः कुपितः कदाचिच्छोफं कुरुते सर्पाङ्गाभिहतं नाम्ना तद् भवति ॥

**दुर्गान्धकारे विद्धस्य केनचिद्दष्टशङ्कया ॥**
**विषोद्वेगोज्वरश्छर्दिर्मूर्च्छा दाहोपि वा भवेत् ।**
**ग्लानिर्मोहोतिसारो वा तच्छङ्काविषमुच्यते ॥**

दुर्गान्धकारे केनचित् कण्टकादिना विद्धस्य पुंसो दष्टशङ्कया विषोद्वेगादिकं भवेत् ग्लान्यादिकं च तन्नाम्ना शङ्काविषमुच्यते ॥ [शङ्कया विषं शङ्काविषम् । अविषमपि शङ्कया विषं जायते । यथा अगर्भेपि रक्तगुल्मिन्या दोहदसम्भवः । इति जर्जटः ॥]

**दंशस्तु सविषः सर्वः सशोफो वेदनान्वितः ।**
**तुद्यते ग्रथितःकिञ्चित् कण्डूमान् दह्यते भृशम् ॥**
**निर्विषो विपरीतोस्मात्—**

सशोफादिकः सर्वो दंशः सविषो विज्ञेयः । अस्माद्विपरीतस्तु निर्विषः ॥

**—तत्र दंशः फणावताम् ॥**
**कूर्मपृष्ठोन्नतो रूक्षः सूक्ष्मदंष्ट्रापदान्वितः ।**
**विकाराः श्यावतावक्त्रनखमूत्राक्षिविट्त्वचाम् ।**
**शीतज्वरः सन्धिरुजा निद्रानाशो विजृम्भिका ।**
**मन्यास्तंभःसिराध्मानं पृष्ठकट्यस्थिवाग्ग्रहाः ॥**
**शिरोगुरुत्वमरुचिः कासश्वासौ हनुग्रहः ।**
**शूलमुद्वेष्टनं कोष्ठे शोषरोधौ मलाश्रयौ ॥**
**सन्दिग्धवाक्त्वं नैश्चेष्ट्यं मृतस्येव विसंज्ञता ।**
**फेनलालोद्गमौ हिध्मा कण्ठे घुरुघुरायणम् ।**
**शुष्कोद्गारो मुहुस्तेते वातजाश्चापरे गदाः ॥**

तत्र फणावतां दर्वीकराणां दंशः कूर्मपृष्ठोन्नतत्वादिगुणो भवति । तत्र च वक्त्रश्यावतादयो विकाराः । श्यावताशब्दस्य विट्त्वचामित्यन्तेन सम्बन्धः । ग्रहशब्दस्य पृष्ठकट्यादिभिः । मलाश्रयः शोषो रोधश्च । मलं पुरीषम् ॥

**दंशो मण्डलिनां सोष्मा सशोषः पीतलोहितः ।**
**पृथुर्विसर्पदाहोषाक्लेदकोथैर्विशीर्यते ॥**

विकारा वक्त्रदन्तादिपीतता तृट्श्रमो भ्रमः ।
दाहो मूर्च्छा ज्वरास्तिक्तवक्त्रत्वं पीतदर्शनम् ॥
रक्तागमनमूर्ध्वाधःशीतेच्छा धूमको मदः ।
आशुसर्वाङ्गविसृतिर्गदास्ते ते च पित्तजाः ॥

मण्डलिनां दंशः सोष्मादिगुणो भवति । तत्र च विकारा वक्त्रदन्तादिपीततादयः । सर्वेष्वङ्गेष्वाशु विषस्य विसृतिः ॥

दंशो राजीमतां स्निग्धःस्थिरपिच्छिलशोफकृत्
सान्द्रास्रःशिशिरः पाण्डुस्तद्विकाराःशिरोव्यथा
अरुचिश्छर्दिरालस्यं हृल्लासो मधुरास्यता ।
कण्ठे घुरुघुरः पाको कण्डूरक्ष्णोर्हिमो ज्वरः ॥
कृच्छ्रादुच्छ्वसनं निद्रा कासः श्वेतनखादिता ।
स्तंभो गुरुत्वं चाङ्गानां नासिकाक्षिमुखस्रुतिः ।
रोमहर्षस्तमश्वासो रोगाश्चान्ये कफोद्भवाः ॥

राजीमतां दंशः स्निग्धत्वादिगुणः । अत्र च विकाराः शिरोव्यथादयः । पाकः कण्ठ एव । हिमो ज्वरः शीतज्वरः । श्वेतनखादितेत्यादिशब्देन नयनत्वगादीनां ग्रहणम् । तमश्वास उक्तलक्षणस्तमकश्वासः ॥

व्यन्तरे मिश्रलिङ्गत्वं—

व्यन्तरसर्पदंशेषु यथासङ्करं मिश्रलक्षणम् ॥

—दष्टः पुंसोर्ध्वमीक्षते ॥
प्रक्षिपेद्दक्षिणं पादं पूर्वकायसमुद्यतः ।
धीरोल्पवेगः शर्वर्यां विपरीतस्तु योषिता ।
हीनस्वरोतिसारार्तः कम्पते त्रस्यते ज्वरी ॥

दष्ट इत्यादिना सर्पलिङ्गविशेषेण दष्टलक्षणम् । व्याख्यासमम् । पुंसो दंशः रात्रावल्पवेगो भवति । ऊर्ध्वेक्षणादिलक्षणेभ्यो विपरीतो हीनस्वरत्वादियुक्तश्च योषिता दष्टो विज्ञेयः ॥

नपुंसकेन तिर्यग्दृगधीरः प्रियमैथुनः ।
बहुवादी च वृद्धेन चिरान्मन्दाश्च वेदनाः ॥
बालेन शीघ्रं तीक्ष्णाश्च —

तिर्यग्दृगादिरूपो नपुंसकेन दष्टः स्यात् । वृद्धेन दष्टे चिराद्वेदना भवन्ति ताश्च मन्दाः । बालेन दष्टे शीघ्रं वेदना भवन्ति ताश्च वेदनास्तीक्ष्णाः ॥

—कुमारेणाक्ष्णि दक्षिणे ॥
रोगी कुमार्या वामेतु—

कुमारेण त्वदृष्टसर्पिणीसम्बन्धेन दष्टो दक्षिणाक्षिरोगी स्यात् । कुमार्या त्वनासादितसर्पसंयोगया तु यो दष्टः स वामेक्ष्णिरोगीस्यात् ॥

—गर्भिण्या कृष्णजिह्वदृक् ॥
जृम्भा क्रोधो पजिह्वार्तःस शूनोष्ठःसितानन ॥
गुरूदरःशिरोरोगी सूतादष्टस्तुमेहति ।
शोणितं कृच्छ्रशूलार्तः सूचीभिरिव भिद्यते ॥

गर्भिण्या तु दष्टः कृष्णया जिह्वया दृशा च युक्तो जृम्भादियुक्तश्च स्यात् । यः सूतया दष्टः स कृच्छ्रेण शूलेनार्तः सन् शोणितं मेहति रक्तं मूत्रयति सूचीभिरिव भिद्यते च ॥

वेगानां रक्तमांसाद्याः सप्तोक्ताः पूर्वमाश्रयाः॥

सर्पस्य विषं यानाश्रित्य क्रमेण वेगान् कुरुते ते रक्तमांसाद्याः पूर्वं धन्वन्तरिमते वेगानां सप्त आश्रया उक्ताः ॥

दर्वीकरादीनां क्रमेण सप्त वेगा उच्यन्ते ॥

दर्वीकृताथदष्टस्य दुष्टं श्यावीभवत्यसृक् ।
श्यावता तेन वक्त्रादौ सर्पन्तीव च कीटकाः ॥
द्वितीये ग्रन्थयो वेगे तृतीये मूर्द्धगौरवम् ।
दृग्रोधो दंशविक्लेदश्चतुर्थे ष्ठीवनं वमिः ॥
सन्धिविश्लेषणं तन्द्रा पञ्चमे पर्वभेदनम् ।
दाहो हिध्मा च षष्ठे तु हृत्पीडा गात्रगौरवम् ॥
मूर्च्छाऽविपाकोऽतीसारः प्राप्य शुक्रन्तु सप्तमे ।
स्कन्धपृष्ठकटीभङ्गः सर्वचेष्टानिवर्तनम् ॥

दर्वीकृतेत्यादि । सर्पन्तीव च कीटका इत्यन्तं प्रथमे वेगे लक्षणम् । वक्त्रादावित्यादिशब्देन नखविण्मूत्रनेत्रत्वचां परिग्रहः । द्वितीये वेगे ग्रन्थयः स्युः । दंशविक्लेदान्तं तृतीये । तन्द्रान्तं चतुर्थे । हिध्मान्तं पञ्चमे । अतीसारान्तं षष्ठे । सप्तमे वेगे विषं शुक्रं प्राप्य स्कन्धादिभङ्गः सर्वचेष्टानिवर्तनं च भवति । इति दर्वीकरेषु ॥

अथ मण्डलिदष्टस्य दुष्टं पीतीभवत्यसृक् ।
तेन पीताङ्गता दाहो द्वितीये श्वयथूद्भवः ॥
तृतीये दंशविक्लेदः स्वेदस्तृष्णा च जायते ।
चतुर्थे ज्वर्यते दाहः पञ्चमे सर्वगात्रगः ॥

अथेत्यादिना मण्डलिनां वेगाः । दाहान्तं प्रथमे वेगे । श्वयथूद्भवो द्वितीये । तृष्णान्तं तृतीये । चतुर्थे ज्वरः । पञ्चमे सर्वगात्रगो दाहः । शेषयोः पूर्ववद्वदेदिति राजीमत उक्तमपेक्ष्यत इति मण्डलिषु ॥

दष्टस्य राजिलैर्दुष्टं पाण्डुतां याति शोणितम् ॥
पाण्डुता तेन गात्राणां द्वितीये गुरुतातिं च ।
तृतीये दंशविक्लेदनासिकाक्षिमुखस्रवाः ॥
चतुर्थे गरिमा मूर्ध्नो मन्यास्तम्भश्च पञ्चमे ।
वाक्यसङ्गो ज्वरः शीतः शेषयोः पूर्ववद्वदेत् ॥

दष्टस्येत्यादिना राजीमतां वेगकीर्तनम् ॥ प्रथमे वेगे रक्तस्य पाण्डुत्वाद् गात्राणां पाण्डुता । द्वितीये गात्राणामतिगुरुता । मुखस्रावान्तं तृतीये । मन्यास्तम्भान्तं चतुर्थे । शीतज्वरान्तं पञ्चमे । शेषयोः षष्ठसप्तमयोः पूर्ववद्दर्वीकरवद्वदेत् । इति राजीमत्सु ॥

कुर्यात् पञ्चसु वेगेषु चिकित्सां न ततः परम् ॥

सर्वसर्पविषेषु च पूर्वेषु पञ्चस्वेव वेगेषु चिकित्सां कुर्यात् ॥

जलाप्लुतारतिक्षीणा भीता नकुलनिर्जिताः ।
शीतवातातपव्याधिक्षुत्तृष्णाश्रमपीडिताः ॥
तूर्णं देशान्तरायाता विमुक्तविषकञ्चुकाः ।
कुशौषधीकण्टकवद्ये चरन्ति च काननम् ॥
देशं च विद्याध्युषितं सर्पास्तेऽल्पविषा मताः ।

जलाप्लुतादिस्वरूपाः सर्पा अल्पविषा मता आचार्याणाम् । रतिः स्त्रीसंयोगस्तया क्षीणास्तथोक्ताः । अचिरं विमुक्तविषकञ्चुकाः । विद्याध्युषितं च देशं ये चरन्ति ते च । विद्याध्युषितं देशं यत्र विषघ्नी विद्या यन्त्रादिस्था प्रतिवसति ॥

श्मशानचैत्यवल्मीकयज्ञाश्रयसुरालये ॥
चतुष्पथे जलस्थाने जीर्णोद्यानेषु कोटरे ।
क्षीरिद्रुमे निम्बतरौ निर्झरे गिरिगह्वरे ॥
चक्रवज्रगदाकुन्तत्रिशूलाङ्कजटाधराः ।

रक्तास्यनयना ये च ते स्युराशीविषोपमाः ॥
न तेषां कालनियमो न च वेगेष्वनुक्रमः ।
मन्त्रतन्त्रबलान्नापि प्रसह्य विनिवर्तनम् ॥
उपहारनमस्कारजपशान्तिपरायणः ।
कश्चिज्जीवति तैर्दष्टो विरूपो विकलोऽपि वा ॥

श्मशानादिषु सर्पा ये वसन्ति चक्राद्यङ्का जटाश्च ये धारयन्ति ते आशीविषोपमाः स्युः। आशीविषं मूलविषम् । (दर्वीकरविशेष इति सुश्रुते । आशीविषा दिव्याः । आशीविषा भुजङ्गस्य परमाशासनेन वा । इच्छामात्रेण वा नाशादित्थमाशीविषा मता इति जर्ज्झटः ।) तेषां च कालनियमादिकं न विद्यते । तैश्च दष्ट उपहारादिपरायणः सन् यदि कश्चिदेव जीवति । प्रायेण तत्र न जीव्यत इत्यर्थः । यश्च जीवेत् स विरूपो वा विकलो वा भूत्वा ॥

श्मशानचितिचैत्यादौ पञ्चमीपक्षसन्धिषु ।
अष्टमीनवमीसन्ध्यामध्यरात्रिदिनेषु च ॥
याम्याग्नेयमघाश्लेषाविशाखापूर्वनैरृते ।
नैरृताख्ये मुहूर्ते च दष्टं मर्मसु च त्यजेत् ॥

श्मशानादिषु देशकालेषु दष्टं मर्मसु दष्टं च परित्यजेत् । चितिर्याज्ञिकानामग्निचयनस्थानम् । पक्षसन्धी अमवास्यापौर्णमास्यौ । मध्यशब्दो रात्रिदिनशब्दाभ्यां सम्बध्यते । याम्यादिकं नक्षत्रं गृह्यते । याम्या भरणी । आग्नेयं कृत्तिका । नैरृतं मूलम् । नैरृताख्यो द्वादशो मुहूर्तः ॥

दष्टमात्रे सितास्याक्षः शीर्यमाणशिरोरुहः ।
स्तब्धजिह्वो मुहुर्मूर्च्छन् शीतोच्छ्वासो न जीवति ॥

दष्टमात्र एव यः सितास्याक्षत्वादियुक्तः स न जीवति ॥

हिध्मा श्वासो वमिः कासो दष्टमात्रस्य देहिनः।
जायते युगपद्यस्य स हृच्छूली न जीवति ॥

यस्य देहिनो दष्टमात्रस्य युगपद्धिध्मादयो जायन्ते स हृच्छूलेन युक्तः सन् न जीवति। [दंष्ट्रिणा येन दष्टश्च तद्रूपं यस्तु पश्यति । अप्सु वादर्शबिम्बे वा तस्य रिष्टं विनिर्दिशेत् । इति जर्ज्झटः ॥]

वेपथुर्वेदनास्तीव्रा ग्रीवाभङ्गोऽक्षिरक्तता ।
मूर्च्छा गळग्रहश्छर्दिः प्रेतराजस्यकिङ्कराः ॥

वेपथ्वादयः प्रेतराजस्य किङ्करा आज्ञाकारिणः । मरणकाल एते भवन्तीत्यर्थः ॥

जाम्बवप्रतिमो दंशः कूर्मपृष्ठवदुन्नतः ।
रक्तं खेभ्यः समस्तेभ्यो वर्तते न तु दंशतः ॥
रोम्णां न शीतलैर्हर्षः श्वयथुर्लोहितासितः।
हृष्टमेहनता वक्रवक्त्रत्वं यस्य तं त्यजेत् ॥

जाम्बवप्रतिमत्वादिकं यस्य भवति तं त्यजेत् । दंशतो रक्तं नैव प्रवर्तते । सर्वेभ्यश्च सूक्ष्मसूक्ष्मेभ्यः स्रोतोभ्यः प्रवर्तते ॥

फेनं वमति निस्संज्ञः श्यावपादकराननः ।
नासावसादो भङ्गोऽङ्गे विड्भेदः श्लथसन्धिता ॥
विषपीतस्य दष्टस्य दिग्धेनाभिहतस्य च ।
भवन्त्येतानि रूपाणि सम्प्राप्ते जीवितक्षये ॥

फेनं वमतीत्यादीनिरूपाणि विषपीतादेर्जीवितक्षये सम्प्राप्ते भवन्ति ॥

न नस्यैश्चेतना तीक्ष्णैर्न क्षतात् क्षतजागमः।
दण्डाहतस्य नो राजिः प्रयातस्य यमान्तिकम् ॥

तथा यमान्तिकं वैवस्वतनिकटं प्राप्तस्य मृतस्य सुतीक्ष्णैरपि नस्यैश्चेतना न भवति । तत्कालं च शस्त्रादिना क्षतादङ्गात् क्षतजस्य रक्तस्यागमो न भवति । दण्डेन चाभिहतस्य देहे राजी न दृश्यते ॥

अतोन्यथा तु त्वरया प्रदीप्तागारवद् भिषक्।
रक्षन् कण्ठगतान् प्राणान् विषमाशु शमं नयेत् ॥

॥ इत्युत्तर एकचत्वारिंशोऽध्यायः ॥

अतोनन्तरोक्तेभ्यः सर्वेभ्योऽसाध्यलक्षणेभ्योऽन्यथा वैपरीत्ये भिषक् कण्ठगतान् प्राणानातुरस्य रक्षन् प्रदीप्तवेश्मवदाशु विषं शमं नयेदिति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तर एकचत्वारिंशोऽध्यायः ॥

—०:०:०—

# द्विचत्वारिंशोऽध्यायः।

## सर्पविषप्रतिषेधम् ॥

उक्तक्रमेण सर्पाणां विग्रहेतूपचारेण चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ॥

अथातः सर्पविषप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

शीघ्रं चिकित्साकरणे हेतुरुच्यते ॥

मात्राशतं विषं स्थित्वा दंशे दष्टस्य देहिनः।
देहं प्रक्रमते धातून् रुधिरादीन् प्रदूषयन् ॥
एतस्मिन्नन्तरे कर्म दंशस्योत्कर्तनादिकम्।
कुर्याच्छीघ्रं यथा देहे विषवल्ली न रोहति ॥

मात्राशतमित्यादि । दष्टस्य देहिनो विषं दंशे मात्राशतं स्थित्वा रुधिरादीन् धातून् प्रदूषयद्देहे प्रक्रमेत। एतस्मिन् मात्राशताख्येऽन्तरेऽवसरे दंशस्योत्कर्तनप्रक्षाळनालेपनबन्धनादिकं कर्म शीघ्रं कुर्याद्यथा देहे विषवल्ली न रोहति । वल्लिर्हि रूढा सत्यसंशयं सफला सुदूरविस्तारा भवति ॥

दष्टमात्रो दशेदाशु तमेव पवनाशिनम्।
लोष्टं महीं वा दशनैश्छित्वा वाऽसुसंभ्रमम् ॥
निष्ठीवेन समालिम्पेद्दंशं कर्णमलेन वा।
दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले।
क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित् ॥

दष्टमात्रस्तु पुरुषो हि तत्कालमेव पवनाशिनं येन सर्पेणासौ दष्टस्तं दन्तैर्दशेत् । तदप्राप्तौ तु लोष्टं दशेत् भूमिं वा । व्याख्यासमम् । अरिष्टेति मन्त्रसूत्रवेणिकाया नाम । [दंशाद्विषं यावन्न क्रामति शरीरं तावदित्यर्थः । इति जर्झटः ॥]

बन्धो देशानुसारेण नातिगाढश्लथो हितः ॥
दंशपूतित्वशोफादीन् कुरुते ह्यतिपीडितः।
अशक्तः शिथिलो रोद्धुं विषं देशान्तरं व्रजत् ॥

बन्धश्च देह देशानुसारेण हितो यो ना-

तिगाढश्लथः । देशानुसारग्रहणं विना अशक्तो भवति ॥

**अम्बुवत् सेतुबन्धेन बन्धेन स्तभ्यते विषम् ।**
**न वहन्ति सिराश्चास्य विषं बन्धाभिपीडिताः ॥**

बन्धेन च विषं तथा स्तभ्यते यथा सेतुबन्धेन सलिलम् । अस्य च दष्टस्य बन्धेनाभिपीडिताः सत्यः सिरा विषं न वहन्ति ॥

**निष्पीड्य चोद्धरेद्दंशं मर्मसन्ध्यगतं तथा ।**
**न जायते विषावेगो बीजनाशादिवाङ्कुरः ।**
**मर्मगे प्राप्नुयान्मृत्युं सन्धिस्थे विकलाङ्गताम् ॥**

एवं च बन्धयित्वा सर्वतः पारिमाण्डल्येन दंशं निष्पीड्य शस्त्रेण दंशमुद्धरेत् । तच्चोद्धरेद्यन्मर्मणि सन्धौ वा न गतम् । तथा दंशोद्धरणेन प्रथम एव विषवेगो न जायते यथा बीजनाशादङ्कुरः । मर्मगे दंश उद्धृते आतुरो मृत्युं प्राप्नुयात् । सन्धिस्थे तूद्धृते विकलाङ्गतां प्राप्नुयात् । [यत्र प्रदेशे बन्धो न युज्यते तत्र छिन्द्यादिति जर्ज्जटः ॥ ]

**दंशं मण्डलिनां मुक्त्वा पित्तळत्वादथापरम् ॥**
**प्रतप्तैर्हेमलोहाद्यैर्दहेदाशूल्मुकेन वा ।**
**करोति भस्मसात् सद्यो वह्निः किन्नाम न [क्षणात् ॥**

अथवोत्कर्तनस्य चिरसाध्यत्वाद्दंशं प्रतप्तैर्हेमादिभिर्दहेदुल्मुकेन वा ज्वलत्काष्ठेन दहेत् । किं सर्वं दंशं दहेदित्याह । अपि तु मण्डलिनां सम्बन्धिनं दंशं मुक्त्वा वर्जयित्वा । तद्वर्जने हेतुः पित्तळत्वम् । पित्तं ह्यग्निना विरुध्यते । अथापरं शेषं दहेत् । करोतीत्यादिना अग्निना दंशदाहस्यातिशयप्रदर्शनम् ॥

**आचूषेत् पूर्णवक्त्रो वा मृद्भस्मागदगोमयैः ।**
**प्रच्छायान्तररिष्टायां मांसळं तु विशेषतः ॥**

अथवा दंशं नोद्धरेन्नापि दहेदपि तु मृदादिभिः पूर्णमुखः सन् वैद्य आचूषेत् । कथमित्याह । अरिष्टाया अन्तर्बन्धस्यान्तरतो दंशभागे प्रच्छाय शस्त्रेण प्रच्छानं कृत्वा । मांसळं तु दंशं विशेषेण प्रच्छाया चूषेत् ॥

**अङ्गं सहैव दंशेन लेपयेदगदैर्मुहुः ।**
**चन्दनोशीरयुक्तेन सलिलेन च सेचयेत् ॥**

सर्वं चाङ्गं सहैव दंशेन मुहुरगदैरालेपयेत् । चन्दनादियुक्तेन जलेन सेचयेच्च ॥

**विषे प्रविसृते विध्येत् सिरां सा परमा क्रिया ॥**

अरक्षया देशान्तरं प्रविसृते विषे सिरां विध्येत् सा परमा क्रिया । सिरावेधक्रियोत्कृष्टा चिकित्सेत्यर्थः ॥

कुत इत्याह ॥

**रक्ते निर्ह्रियमाणे हि कृत्स्नं निर्ह्रियते विषम् ।**
**दुष्टे हि व्याप्नुयादङ्गं ध्रुवं मृत्युर्भवत्यतः ॥**

रक्त इत्यादि । यस्माद्दुष्टे रक्ते निर्ह्रियमाणे कृत्स्नं सर्वं विषं निर्ह्रियते । रक्ते दुष्टे विषमङ्गं व्याप्नुयादतो ध्रुवमवश्यं मृत्युर्भवति । विषदुष्टस्यरक्तस्या निर्हरणे विषस्य देहव्याप्त्या मृत्युर्भवतीत्यर्थः ॥

**सिराव्यधोदितैरस्रमप्रवृत्तं प्रवर्तयेत् ।**

स्तम्भयेदतिवृत्तं च तैरेव प्राणरक्षया ॥

सिराव्यधोदितैरित्यादि । सुबोधम् । [सिरेत्यादि । अप्रवृत्तं रक्तं सिराव्यधोदितैस्तगरादिभिः सिरामुखावचूर्णितैः प्रवर्तयेत् स्रावयेत् । अतिवृत्तमतिप्रवृत्तमस्रं तैरेव अस्रस्तम्भनाय सिराव्यधोक्तैर्लोध्रादिभिः प्राणरक्षया स्तम्भयेन् स्कन्नत्वं प्रापयेत । प्राणरक्षया इति हेतौ तृतीया । प्राणरक्षाफलकमित्यर्थः । अध्ययनेन वसतीतिवत् ॥]

रक्तस्य सविषनिर्विषत्वविशेषमाह ॥

दुर्गन्धं सविषं रक्तमग्नौ चटचटायते ।
यथादोषं विशुद्धं च पूर्ववल्लक्षयेदसृक् ॥

दुर्गन्धमित्यादि । पूर्ववदिति सिराव्यधोक्तेनप्रकारेण । [विषसहितं रक्तं दुर्गन्धयुक्तं भवति अग्नौ निक्षिप्तं चटचटायते चटचटाशब्दं करोति । यथादोषमिति त्रिदोषजुष्टं विशुद्धं तैरजुष्टं च रक्तं पूर्ववन् सिराव्यधविध्युक्तलक्षणेन लक्षयेज्जानीयात् ॥]

सिरास्वदृश्यमानासु योज्याः शृङ्गजलौकसः ॥

[सिरास्वदृश्यमानासु शोफादिना अनुपलभ्यमानासु ।]

शोणितं स्रुतशेषं च प्रविलीनं विषोष्मणा ।
लेपसेकैः सुबहुशः स्तम्भयेद् भृशशीतलैः ॥

शोणितमिति । स्तम्भयेत् सौम्यत्वमापादयेत् । [स्रुतशेषं प्रस्थानात् परमनिर्हरणीयत्वात् स्रुतावशिष्टं विषोष्मणा प्रविलीनं शोणितं सुबहुशः पौनःपुन्येन प्रयुक्तैर्भृशशीतलैरत्यन्तशीतलैर्लेपसेकैः स्तम्भयेत् ॥]

अस्कन्ने विषवेगाद्धि मूर्च्छायमदहृद्द्रवाः ।
भवन्ति तान् जयेच्छीतैर्वीजेच्चा रोमहर्षनः ॥

अस्कन्न इत्यादि । अस्कन्ने प्रविलीनरूपे । [अस्कन्ने अस्थानेस्थे रक्ते विषवेगान्मूर्च्छायादयो भवन्ति यस्मात्तस्मात्तात् शीतैर्लेपादिभिर्जयेत् । आरोमहर्षतः यावद्रोमाञ्चोत्पत्तिस्तावद्वीजेत् वीजनं च कुर्यात् ॥]

विषं कर्षति तीक्ष्णत्वाद्धृदयं तस्य गुप्तये ।
पिबेद् घृतं घृतक्षौद्रमगदं वा घृताप्लुतम् ॥

विषमिति । कर्षति हिनस्ति । तस्येति हृदयस्य गुप्तये रक्षार्थम् । [विषं तीक्ष्णत्वाद्धृदयं कर्षति विलिखति तस्य हृदयस्य गुप्तये रक्षार्थं घृतं वा घृतयुक्तं मधु वा घृतालोडितमगदं विषघ्नौषधं वा पिबेत् ॥]

मज्जानं गोमयरसं भस्माम्भः कृष्णमृज्जलम् ।
ऐकध्यं पञ्चगव्यं वा दधि गैरिकवारि वा ॥
खादेद्वा कोविदारार्कशिरीषकटभीच्छदान् ।
छागमेषवराहास्रक्शिशुस्थविरयोषितः ॥
पिबेयुर्गर्भिणी शीतमधुरान् पयसा गदान् ।
तथा मूर्च्छादयो न स्युर्विषं चाश्वेतिनानिलम् ॥

[मज्जानमित्यादि । मज्जादिकमथ वैकध्यमेकतः कृत्वा पञ्चगव्यं दध्यादि वा पिबेत् अथवा कोविदारादिच्छदान् खादेत् । कोविदारः काञ्चनारः । शिशुस्थविरयोषितो यथाक्रमं छागाद्यसृक् पिबेयुः । गर्भिणी तु पयसा शीतादिगुणानगदान् पिबेत् । तथेत्यादि सुबोधम् ॥]

**हृदयावरणेनास्य श्लेष्मा हृद्युपचीयते ।**
**प्रवृत्तगौरवोत्क्लेशहृल्लासं वामयेत्ततः ॥**
**द्रवैः काञ्चिककौलत्थतैलमद्यादि वर्जितैः ।**
**वमनैर्विषहृद्भिश्च नैवं व्याप्नोति तद्वपुः ॥**

हृदयावरणेनेत्यादि सुबोधम् । तत इत्युपचिते श्लेष्मणि । [हृदयावरणेन घृतादिपानाद्धृदयाच्छादनेनास्य विषार्तस्य हृदये श्लेष्मा विषस्य रक्तदूषणानन्तरं कफदूषकत्वात्तेन दूषितः कफ उपचीयते आच्छादितहृदयत्वाद्देहोच्छेदासमर्थतया केवलं वृद्धिमेव प्राप्नोति । ततः सविषस्य श्लेष्मण उपचयाद्धेतोरुद्भूतगौरवादिकं नरं काञ्चिकादिवर्जितैर्द्रवैः काञ्चिकादीनां तीक्ष्णादिगुणतया विषसाम्यात्तद्वर्जितैरन्यैर्द्रवैर्विषहरैर्वमनद्रव्यैश्च वामयेत् । एवं कृते सति तद्विषं वपुः शरीरं न व्याप्नोति सन्धिविश्लेषसंज्ञानाशादिविषोपद्रवं न गच्छतीत्यर्थः ॥ ]

[सर्पविषाणां सामान्यक्रियामुपसंहरन्नाह: ॥ ]

**भुजङ्गदोषप्रकृति स्थानवेगविशेषतः ।**
**सुसूक्ष्मंसम्यगालोच्यविशिष्टांचाचरेत्क्रियाम्॥**

[भुजङ्गेति । भुजङ्गानां सर्पाणां दोषादिविशेषान् सुसूक्ष्मं सम्यगालोच्य सूक्ष्मया बुध्या पुनःपुनर्विचार्य ज्ञात्वा विशिष्टां दोषप्रकृत्यादिसाधारणीं क्रियां चिकित्सां चाचरेत् । चः समुच्चये दोषो वातादिः प्रकृतिर्विषप्रकृतिः । स्थानं दंशस्थानम् । वेगो विषवेगः ॥ ]

[दर्वीकरादीनां प्रत्येकं चिकित्सामाह ॥ ]

**सिन्दुवारकमूलानि रसेन स्वेन पेषयेत् ।**
**मधुयुक्तोयमगदः पानं दर्वीकृतां विषे ॥**

[सिन्दुवारकस्यमूलानि स्वेन रसेन सिन्दुवारकरसेन पेषयेत् मधुना युक्तोयमगदो दर्वीकृतां दर्वीकरसर्पाणां विषे पानं हितम् ॥ ]

**सिन्दुवारकमूलानि श्वेता च गिरिकर्णिका।**
**पानं दर्वीकरैर्दष्टे नस्यं मधु सपाकलम् ॥**

सिन्दुवारको निर्गुण्डी । श्वेता श्वेतवचा । मधु माक्षिकम् । पाकलं कुष्ठम् । दर्वीकरसर्पैर्दष्टे सति सिन्दुवारकमूलादिकं पानं हितम् । अनुक्तद्रवत्वाज्जलालोळितम् । कुष्ठसहितं माक्षिकं नस्यं च ॥ ]

**कृष्णसर्पेण दष्टस्य लिम्पेद्दंशं हृतेऽसृजि ।**
**चारटीनाकुलीभ्यां वा तीक्ष्णमूलविषेण वा ॥**

चारटी पद्मचारिणी । नाकुली सर्पसुगन्धा । तीक्ष्णमूलविषेण वा तीक्ष्णं यन्मूलविषं वत्सनाभादि तेनेत्यर्थः । [कृष्णसर्पो दर्वीकरविशेषस्तेन दष्टस्य दंशं दंशव्रणं असृजि रक्ते जळूकादिना हृतेऽपनीते सति चारटीनाकुलीभ्यां वाथवा तीक्ष्णमूलविषेण वा लिम्पेत् । चारटी गुञ्जा । नाकुली चविका रास्ना वा । तीक्ष्णमूलविषं वत्सनाभादि ।]

**पानं च क्षौद्रमञ्जिष्ठागृहधूमयुतं घृतम् ॥**

[क्षौद्राद्यन्वितं घृतं पानं च पानविषये हितमित्यर्थः ।]

**तण्डुलीयककाश्मर्यकिणिहीगिरिकर्णिकाः ।**
**मातुलुङ्गी सिता शेलुः पाननस्याञ्जने हितः ।**
**अगदः फणिनां घोरे विषे राजीमतामपि ॥**

तण्डुलीयक इति । किणिही कटभी ।

गिरिकर्णिका गिरिकदम्बः । सिता श्वेतवचा । शेलुः । श्लेष्मातकः । [तण्डुलीयकादिभिः कृतोऽगदः फणिनां दर्वीकराणां राजीमतामपि घोरे विषे पानादौ हितः । अगदो गुळिकाद्यन्यतमो योगविशेषः ॥ ]

समाःसुगन्धामृद्वीकाश्वेताख्यागजकर्णिकाः ।
अर्द्धांशं सौरसं पत्रं कपित्थं विल्वडाडिमम् ।
सक्षौद्रो मण्डलिविषे विशेषादगदो हितः ॥

समा इति । सुगन्धा गन्धनाकुली । श्वेताख्या श्वेतवचा । गजकर्णिका कुमारी सल्लकी वा । सुगन्धादिकं परस्परं समम् । अर्द्धांशेन सुरसपत्रादिचतुष्टयमिति यावत् । सुरसस्तुळसी । [सुगन्धादयः समाः समांशाः । सौरसपत्रादिकमर्धांशं सुगन्धादिभ्योऽर्धप्रमाणम् । पालिकेषु सुगन्धादिषु सुरसपत्रादिकमर्धपलप्रमाणमित्यर्थः । एभिः कृतः क्षौद्रसहितोऽगदो विशेषेण मण्डलिविषे हितः ॥ ]

पञ्चवल्कवरायष्टीनागपुष्पैलवालुकम् ।
जीवकर्षभकौ शीतं सिता पद्मकमुत्पलम् ॥
सक्षौद्रो हिमवान् नाम हन्ति मण्डलिनां विषम् ।
लेपाच्छ्वयथुवीसर्पविस्फोटज्वरदाहहा ॥

पञ्चवल्क इति । पञ्चवल्कं सल्लकीझिञ्झिणीजम्बूधवशल्मलीनां त्वचः । शीतं चन्दनम् । सिता श्वेतवचा कटभी वा । [पञ्चवल्कादिको माक्षिकसहितो हिमवानिति प्रसिद्धोऽयमगदो मण्डलिनां विषं हन्ति । लेपाच्छोफादिहृच्च भवति । पञ्चवल्कोऽत्र सल्लक्यादयः । सल्लकी झिञ्झिणीजम्बूधवशल्मलिका त्वचः । पञ्चवल्कलसञ्ज्ञोयं मुनिभिः परिकीर्तितः । ]

काश्मर्यं वटशृङ्गाणि जीवकर्षभकौ सिताम् ।
मञ्जिष्ठां मधुकं चेति दष्टो मण्डलिना पिबेत् ॥

वटशृङ्गाणि वटाङ्कुराणि । सिता श्वेतवचा । [मण्डलिनादष्टो नरः काश्मर्यादिमधुकान्तमित्युक्तमगदं अनु कद्रवत्वाज्जले समालोड्य पिबेत् ॥ ]

वंशत्वग्बीजकटुका पाटलीबीजनागरम् ।
शिरीषबीजातिविषे मूलं गावेधुकं वचाम् ॥
पिष्टो गोवारिणाष्टाङ्गो हन्ति गोनसजं विषम् ॥

वंशत्वग्बीज इति । त्वग्बीजे वंशस्य । कटुकातिक्तालाबुनी । गोवारिणा गोमूत्रेण । गोनसा घर्मतप्तानां गवां नासिकोद्भवाः (वंशत्वगादिर्गोवारिणा गोमूत्रेण पिष्टोऽष्टाङ्गोऽष्टद्रव्यकृतत्वादष्टाङ्गाख्योयमगदो गोनसजं विषं हन्ति ।) (वंशत्वक्कटुकाबीजमिति च पाठः ॥ )

कटुकातिविषाकुष्ठगृहधूमहरेणुकाः ।
सक्षौद्रव्योषतगरा घ्नन्ति राजीमतां विषम् ॥

कटुकेति । कटुका लम्बा । (क्षौद्रायुपेताः कटुकादयः पानादिना राजीमतां विषं घ्नन्ति । कटुका कटुकरोहणी ॥ )

निखनेत्काण्डचित्राया दंशं यामद्वयं भुवि ।
उद्धृत्य प्रच्छितं सर्पिर्द्धान्यमृद्भ्यां प्रलेपयेत् ॥
पिबेत् पुराणं च घृतं वराचूर्णावचूर्णितम् ।
जीर्णे विरिक्तो भुञ्जीत यवान्नं सूपसंस्कृतम् ॥

निखनेदिति । काण्डचित्रायाः सर्पवि-

शेषस्य दंशं दंष्ट्राग्रगम् । (काण्डचित्राराजिलविशेषः तस्य दंशं दंष्ट्राप्रदेशं भुवि भुवं खनित्वा तत्र निखनेत् निक्षिप्य मृदा पूरयित्वा याममद्वयं प्रतिपाल्य पश्चादुद्धृत्य प्रच्छितं सूत्रोदितविधानेन प्रच्छानं कृत्वा सर्पिर्धान्यमृद्भ्यां प्रलेपयेत् । धान्यमृत् धान्यमूलमृत्तिका । ततो वराचूर्णावचूर्णितं त्रिफलाचूर्णयुक्तं पुराणं घृतं पिबेच्च । घृते जीर्णे विरिक्तः कृतविरेचनः सूपसंस्कृतं सूपोपेतं यवान्नं भुञ्जीत । सूपस्तक्रादिभिः सिद्ध उपदंशविशेषः । (सर्पिर्धान्यमृद्भिः प्रलेपयेत् । यवान्नं यूषसंस्कृतम् । इति पाठभेदः ।)

व्यन्तरदष्टचिकित्सामाह ॥

करवीरार्ककुसुममूललाङ्गलिका कणाः ।
कल्कये दारनालेन पाठामरिचसंयुताः ।
एषव्यन्तरदष्टानामगदः सार्वकार्मिकः ॥

(करवीरार्कयोः कुसुमं मूलं चलाङ्गलिकादि चारनालेन काञ्चिकेन कल्कयेत् पेषयेत् । एषोऽगद औषधयोगो व्यन्तरसर्पदष्टानां सार्वकार्मिकः सर्वकर्मोपयोगी पाननस्याञ्जनालेपादौ हित इत्यर्थः । ]

शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम् ।
भावितं सर्पदष्टानां पाननस्याञ्जने हितम् ॥

सितं मरिचं शिग्रुबीजम् । मरिचावान्तरजातिर्वा । (शिरीषकुसुमरसे सप्ताहं सप्तवासरान् भावितं पेषितं सितं मरिचं शिग्रुबीजं सर्पदष्टानां सर्वेषां पानादौ हितम् ।)

द्विपलं वक्रकुष्ठाभ्यां घृतक्षौद्रं चतुष्पलम् ।
अपि तक्षकदष्टानां पानमेतत् सुखप्रदम् ॥

वक्रकुष्ठे मिश्रीभूते द्विपलम् । तथैव घृतक्षौद्रं चतुष्पलम् । (तगरकुष्ठयोरेकैकं पलं चूर्णयित्वा प्रत्येकं द्विपलप्रमितयोर्घृतक्षौद्रयोः समालोड्य पीतं तक्षकदष्टानामपि सुखकरम् । अत्रापिशब्देन तक्षकाविषस्य दुर्निवार्यत्वमस्यागदस्य प्रभावाधिक्यं च द्योत्यते ।)

गृहधूमं हरिद्रे द्वे समूलं तण्डुलीयकम् ।
अपि वासुकिना दष्टः पिबेन्मधुघृताप्लुतम् ॥

वासुकिना दष्टोऽपि गृहधूमादिकं मधुघृताप्लुतं पिबेत् ॥

रक्तं मांसं च गोधायाः शुष्कं चूर्णीकृतं हितम् ।
विषे रसगते पानं कपित्थरससंयुतम् ॥
शेलुमूलत्वगग्राणि बादरोदुम्बराणि च ।
कटभ्याश्च पिबेद्रक्तगते मांसगते पुनः ॥
सक्षौद्रं खादिरारिष्टं कौटजं मूलमम्भसा ।
सर्वेष्वपि बलायुग्मं मधुकं मदनं नतम् ॥

विषे रसगते सति गोधाया रक्तं मांसं च शुष्कं चूर्णीकृतं कपित्थरससंयुतं पानं हितम् । रक्तगते सति शेलुमूलादीनि कपित्थरससंयुतानि पिबेत् । मांसगते खादिरादिमूलं सक्षौद्रं क्षौद्रसहितमम्भसा पिबेत् । सर्वेषु रसादिधातुत्रयगतेष्वपि बलायुग्मादिकमम्भसा पिबेत् । मदनं मदनफलम् ॥

शिरोगते विषे मूलं नस्यकर्मणि योजयेत् ।
बन्धुजीवस्य भार्ग्याश्च सुरसस्यासितस्य च ॥
अथवा पिप्पलीहिङ्गु वृश्चिकालीमनश्शिलाः ।

शिरीषबीजापामार्गलवणं चेतनाकरम् ।
कल्कश्चूर्णोथवा कृष्णाक्षवकातिविषोषणात् ॥

शिरोगते विषे बन्धुजीवादिमूलं पृथक् नस्यकर्माणि योजयेत् । अथवा पिप्पल्यादि मनश्शिलान्तम् । शिरीषादिकं चेतनाकरं भवति । कृष्णादीनां कल्कश्चूर्णो वा ॥

पिप्पली मरिचक्षारवचासैन्धवशिग्रुकाः ।
पिष्टारोहितपित्तेन घ्नन्त्यक्षिगतमञ्जनात् ॥
चन्दनं मधुकं मांसी पिप्पलीमरिचोत्पलम् ।
सैन्धवं चाञ्जनं श्रेष्ठं गवां पित्तेन कल्कितम् ॥

रोहितपित्तेन पिष्टाः पिप्पल्यादयोऽञ्जनादक्षिगतं विषं घ्नन्ति । रोहितो मत्स्यविशेषः । गोपित्तेन पिष्टं चन्दनादिकं श्रेष्ठमञ्जनम् ॥

नक्तमालफलं व्योषं बिल्वमूलं निशाद्वयम् ।
पुष्पं च सौरसं पिष्टमञ्जनं बस्तवारिणा ॥
भोजवैतरणोदिष्टं विषसुप्तप्रबोधनम् ।

बस्तवारिणाजामूत्रेण पिष्टं नक्तमालफलादिकं भोजवैतरणेनोदिष्टं कल्पितमञ्जनं विषसुप्तानां प्रबोधनम् ॥

वारिगुञ्जाफलोशीरं नेत्रयोर्विषदुष्टयोः ।
अञ्जनं वारिणा पिष्टं गारुडं गरुडोपमम् ॥

वारिणा पिष्टं वारिगुञ्जाफलादिकं विषदुष्टयोर्नेत्रयोर्गारुडं नामाञ्जनं गरुडोपमं च ॥

समुद्रफेनं मरिचं कणासौवीरकाञ्जनम् ।
चूर्णाञ्जनं ससिन्धूत्थं विषोपहतचक्षुषाम् ॥

सिन्धूत्थसहितं समुद्रफेनादिकं विषोपहतचक्षुषां चूर्णाञ्जनं हितमिति शेषः ॥

कपित्थमांसं ससिताक्षौद्रं कण्ठगते विषे ।
लिह्यादामाशयगते ताभ्यां चूर्णपलं नतात् ॥

विषे कण्ठगते सति ससिताक्षौद्रं कपित्थमांसं लिह्यात् । आमाशयगते सतिताभ्यां सिताक्षौद्राभ्यां सह नताद्वक्रात् चूर्णपलं लिह्यात् । लिह्यादित्युभयत्रापि सम्बध्यते ॥

विषे पक्वाशयगते मञ्जिष्ठारजनीद्वयम् ।
पिप्पलीं च समं पिष्ट्वा गव्यपित्तेन पाययेत् ॥

पक्वाशयगते विषे मञ्जिष्ठादि पिप्पल्यन्तं समं समांशं गव्यपित्तेन पिष्ट्वा पाययेत् ॥

पिप्पलीनागरक्षारं नवनीतेन मूर्च्छितम् ।
प्रवृद्धे कण्ठगे दद्याच्छ्लेष्मणि प्रतिसारणम् ॥

विषवतः कण्ठगते श्लेष्मणि प्रवृद्धे पिप्पल्यादि नवनीतमिश्रं प्रतिसारणं दद्यात् ॥

जयेत् सङ्क्रामणैराशु विषं शिरसि संश्रितम् ।
दद्यादधस्ताद्दष्टस्य मूर्ध्नि काकपदे कृते ॥
काकदक्षशिखिच्छागगव्यमाहिषकौक्कुटम् ।
बिल्वप्रमाणं मांसास्रमूर्ध्वदष्टस्य पादयोः ।
विषं सङ्क्रमते तत्र निहन्याच्छीघ्रमन्यथा ॥

शिरःस्थितं विषं संक्रामणैराशु शीघ्रं जयेत् । अधःकाये दष्टस्य मूर्ध्नि काकपदं काकपदाकृति छेदं कृत्वा तत्र काकाद्यन्यतमं बिल्वप्रमाणं पलमात्रं मांसास्रं दद्यात् क्षिपेत् । तत्र मांसासृजि विषं संक्रमत इति शरीरे च लाघवं याति । अन्यथा शरीर एव तिष्ठन् शीघ्रं हन्यात् । एवमूर्ध्वकाये दष्टस्य पादयोरपि ॥

तीक्ष्णनस्याञ्जनान्ते च भूरिमात्रं पिबेत् कृतम् ।
विषं हि नेत्रं रूक्षस्य तीक्ष्णैर्हन्ति समीरितम् ॥

**वामयेत ततश्चैनं विषशेषोपशान्तये ।**
**श्लेष्मळं श्लेष्मळैर्दष्टं नाभेरूर्ध्वं विशेषतः ॥**

अत्र च विषे तीक्ष्णयोर्नस्याञ्जनयोः प्रयोगान्ते भूरिमात्रं बहुमात्रं घृतं पिबेत्। यस्मान्नेत्रस्थितं विषं रूक्षस्य सतस्तीक्ष्णैरञ्जनैः समीरितं नेत्रं हन्ति। ततोऽनन्तरमेनं विषशेषोपशान्तये वामयेत। श्लेष्मळं पुरुषं श्लेष्मळैः शूद्रैर्दष्टं विषोपशान्त्यर्थं वामयेत्। नाभेश्चोर्ध्वं दष्टं विशेषतो वामयेत् ॥

[तदेव वमनमाह।]

**धामार्गवः शक्रयवाः सर्षपा मदनं मधु ।**
**सैन्धवं वमनं कोष्णं विषे श्लेष्माश्रयाश्रिते ॥**
**सुरसं सर्पवेताळी मीश्वरां गौरसर्षपम् ।**
**पटोलनिम्बपत्रं च पिबेत् सक्षौद्रसैन्धवम् ॥**
**शुकाह्वाजालिनीदन्तीमदनेक्ष्वाकुकौटजम् ।**
**काळा लाङ्गलिका तिक्ता वमनं तण्डुलांबुना ॥**

धामार्गवादि वमनं सुबोधम्। सुरसादिकं सक्षौद्रसैन्धवं वमनं पिबेत्। सर्पवेताळी मञ्जर्याख्या महावेताळी च। शुकाह्वादिभिस्तण्डुलाम्बुना वमनम्। इति श्लेष्माणि ॥

**पैत्तिकं पैत्तिकैर्दष्टमधो नाभेर्विशेषतः ।**
**विषे पित्ताशयगते पाययेत विरेचनम् ॥**
**सनीलीफलदां दन्तीं पयसा मस्तुनाथवा ।**
**श्लक्ष्णचूर्णीकृतं कुम्भं क्वाथेन त्रैफलेन वा ।**
**क्षीरेण वा त्रिवृच्छ्यामासुरसानीलिनीरजः ॥**

पैत्तिकं पुरुषं पैत्तिकैर्दष्टं विरेचनं पाययेत्। अधोनाभेर्दष्टं पित्ताशयगते च विषे विशेषेण पाययेत च नीलिनीफलैर्युक्तां दन्तीं पयसा क्षीरेणाथवा मस्तुना। अथवा त्रिफलाक्वाथेन द्रवन्तीचूर्णम्। अथवा त्रिवृतादीनां रजश्चूर्णं क्षीरेण ॥

**पिण्डीतकफलं व्योषं त्रिवृद्देहं हरीतकी ।**
**विरेचनं कफप्राये लवणं मूत्रसम्प्लुतम् ॥**

पिण्डीतकफलादिकं लवणान्तं मूत्रसम्प्लुतं श्लेष्मप्राये पित्ते विरेचनं पाययेत्। पिण्डीतकफलं मदनफलम् ॥

**घृताप्लुतं सलवणं मारुते नीलिनीफलम् ॥**

मारुतेऽधिके नीलिनीफलं घृताप्लुतं विरेचनम् ॥

**शयानः शयने छिद्रे विरेच्यो विषपीडितः ।**
**मुहुरुत्तिष्ठतो ह्यस्य विषं दूषयतेनिलम् ।**
**पिबेद्वान्तो विरिक्तो वा यवागूं विषनाशिनीम् ॥**

विषपीडितः सर्वः शयने छिद्रे सच्छिद्रे शयानो विरेच्यः। छिद्रं शय्यायां गुदप्रदेशे कार्यम्। यतो विरेचनार्थं मुहुरुत्तिष्ठतो विषं कर्तृ अनिलं दूषयते। सुबोधम्। विषनाशिनी यवागूः पूर्वोक्ता ॥

**विषे वाताशयगते सर्पिषः पानमिष्यते ।**
**आद्यपश्चिमयोर्यच्च प्रोक्तं विषनिषेधयोः ॥**

वाताशयगते व्याख्यासमम्। आद्यपश्चिमौ विषनिषेधौ स्थावरविषप्रथमसप्तमवेगौ ॥

**अथ दर्वीकृतां वेगे पूर्वे विस्राव्य शोणितम् ।**
**अगदं मधुसर्पिर्भ्यां संयुक्तं त्वरितं पिबेत् ॥**

द्वितीये वमनं कृत्वा तद्वदेवागदं पिबेत् ।
विषापहे प्रयुञ्जीत तृतीयेऽञ्जननावने ॥
पिबेच्चतुर्थे पूर्वोक्तां यवागूं वमने कृते ।
षष्ठपञ्चमयोः शीतैर्दिग्धसिक्तमभीक्ष्णशः ॥
पाययेद्वमनं तीक्ष्णं यवागूं च यथोदिताम् ।
अगदं सप्तमे तीक्ष्णं युञ्ज्यादञ्जननस्ययोः ॥
कृत्वावगाढं शस्त्रेण मूर्ध्नि काकपदं ततः ।
मांसं सरुधिरं तस्य चर्म वा तत्र निक्षिपेत् ॥

अथेत्यादिना वेगक्रमेणोच्यते । व्याख्यासमम् । अवगाढमन्तःप्रविष्टम् । [अथ वेगलक्षणदर्शनानन्तरं दर्वीकरसर्पाणां प्रथमे वेगे जळूकादिना रक्तमपनीय मधुघृतोपेतं विषघ्नमौषधं शीघ्रं पिबेत् । द्वितीये वेगे कृतवमनः सन् तद्वत् सर्पिर्मधूपेतमेवागदं पिबेत् । तृतीये वेगे तण्डुलीयकादि विषहरद्रव्यैरञ्जननावने युञ्ज्यात् । चतुर्थे वेगे वमनानन्तरं पूर्वोक्तां कोशातक्यादिना कृतां यवागूं पिबेत् । षष्ठपञ्चमवेगयोः शीतैश्चन्दनोशीरादिशीतद्रव्यैर्दिग्धं पुनः पुनः प्रलिप्तं दूर्वागोजिह्वादिस्वरसशीतोदकादिभिस्तद्वदेव सिक्तं परिषिक्तं च तीक्ष्णं तीक्ष्णद्रव्यकृतं वमनौषधं तण्डुलीयककोशातक्यादिभिः सिद्धां यवागूं च पाययेत् । सप्तमे वेगे अञ्जननस्ययोस्तीक्ष्णमगदं युञ्ज्यात् । मूर्ध्नि शस्त्रेणावगाढं काकपदं कृत्वा काकपदाकृत्यावगाढं छित्वानन्तरं तस्य दष्टस्य तत्र काकपदे सरक्तं मांसं चर्म वा निक्षिपेत् निक्षिप्य विषं तस्मिन् सङ्क्रामयेदित्यर्थः ।]

तृतीये वामितः पेयां वेगे मण्डलिनां पिबेत् ।
अतीक्ष्णमगदं षष्ठे गणं वा पद्मकादिकम् ॥

तृतीयात् षष्ठाच्च शेषेषु मण्डलिनां सामर्थ्यात् पूर्ववत् । [मण्डलिसर्पाणां तृतीये वेगे कृतवमनः सन् विषघ्नीं पेयां पिबेत् । षष्ठे वेगे अतीक्ष्णं मृदुद्रव्यकृतमगदमौषधयोगं शोधनादिगणोक्तं पद्मकादिगणं वा पिबेत् ॥ ]

आद्ये वगाढं प्रच्छाय वेगे दष्टस्य राजिलैः ।
अलाबुना हरेद्रक्तं पूर्ववच्चागदं पिबेत् ॥
षष्ठे वेगेऽञ्जनं तीक्ष्णमवपीडं च योजयेत् ।
अनुक्तेषु च वेगेषु क्रियां दर्वीकरोदिताम् ॥

अवगाढं घनम् । राजीमतां शेषेषु वेगेषु पूर्ववत् दर्वीकरवत् । एतदेवोच्यते अनुक्तेष्वित्यादिना । [आद्य इति । राजिलसर्पैर्दष्टस्य आद्ये प्रथमे वेगे अवगाढं सम्यग्रक्तापनयनार्थमामांसमित्यर्थः । प्रच्छाय प्रच्छानं कृत्वा अलाबुना रक्तं हरेत् । पूर्ववन्मधुसर्पिःसंयुक्तं विषघ्नमौषधं पिबेच्च । षष्ठे वेगे तीक्ष्णतममतिशयेन तीक्ष्णमञ्जनमवपीडनस्यं च योजयेत् । अत्रानुक्तेषु मण्डलिनां प्रथम,द्वितीय,चतुर्थ,पञ्चम,सप्तमवेगेषु । राजीमतां द्वितीय,तृतीय,-चतुर्थ,पञ्चम,सप्तमवेगेषु च दर्वीकरवेगोक्ताचिकित्सामेव योजयेत् ॥]

गर्भिणीबालवृद्धेषु मृदु विध्येत् सिरां न ॥

गर्भिण्यादिषु सर्वं मृदु शस्यते । सिरां च न विध्येत् । [गर्भिण्यादिषु मृद्वतीक्ष्णमञ्जनादिकं युञ्ज्यात् ।सिरावेधं तु न कुर्यात्॥]

सर्पविषाणां सामान्यचिकित्सामाह ॥

त्वञ्जनोह्वा निशे वक्रं रसः शार्दूलजो नखः ।
तमालः केसरं शीतं पीतं तण्डुलवारिणा ।
हन्ति सर्वविषाण्येतद्वज्रं वज्रमिवासुरान् ॥

त्वगादिचूर्णं नाम्ना वज्रम् । सुबोधम् । वक्रं तगरम् । शीतं चन्दनम् । [त्वगादिशीतान्तमौषधं पिष्टं तण्डुलवारिण्यालोड्य पीतं वज्रसंज्ञितमेतदौषधं सर्वसर्पविषाणि नाशयति । शक्रेण प्रेरितं कुलिशमसुरानिव ॥ ]

प्रपौण्डरीकं कटुका देवदारुसुवर्चिका ।
काळानुसारी स्थौणेयशैलेयघनपद्मकम् ॥
कुटन्नटैलापुन्नागनतकुष्ठप्रियङ्गुकम् ।
लोध्रगुल्गुलुतालीसपिप्पलीस्वर्णगैरिकम् ॥
सिन्दुवारः सितः शुण्ठी ध्यामकं लवणोत्तमम् ।
श्लक्ष्णचूर्णीकृतं शृङ्गे निदध्यान्माक्षिकद्रुतम् ॥
तार्क्ष्यस्तार्क्ष्योपमः पाननावनाभ्यञ्जनाञ्जनैः ।
अगदस्तक्षकस्यापि विषवेगं निवर्तयेत् ॥

प्रपौण्डरीकादिभिस्तार्क्ष्यनामागदः सुबोधः । शृङ्गं गोः । [प्रपौण्डरीकमित्यादि । काळानुसारी काळानुसारिबा । कुटन्नटः स्योनाकः । सितः सिन्दुवारः श्वेतानिर्गुण्डी । ध्यामकं कत्तृणम् । इति सुश्रुतटीका ॥ ]

लोध्रं शिरीषपुष्पाणि समङ्गा हिङ्गु रेणुकाः ।
कणोषणैलानेपाळी वचा यष्टी मधूत्पलम् ॥
सिन्दुवारकमन्दारमूलं बीजं करञ्जजम् ।
ज्योतिष्मती नतं कुष्ठं श्वेता च गिरिकर्णिका ॥
चूर्णितः कन्यया क्षौद्रगोपित्ताभ्यां च वर्तितः ।
अगदो हन्ति सर्पाखुकणभं च सृगालजम् ॥

बिडालकाण्डचित्रोत्थं विषं भूतग्रहं ज्वरम् ।
अपस्मारग्रहोन्मादगुल्माजीर्णं विषूचिकाम् ॥

लोध्रादिः सुबोधः । समङ्गा मञ्जिष्ठा । रेणुका हरेणुः । नेपाळी मनःशिला । यष्टी मधुर्मधुयष्टी । मन्दारः पारिभद्रः ॥

बिल्वस्य मूलं सुरसस्य पुष्पं
फलं करञ्जस्य नतं सुराह्वम् ।
फलत्रयं व्योषनिशाद्वयं च
बस्तस्य मूत्रेण सुसूक्ष्मपिष्टम् ॥
भुजङ्गलूतोन्दुरुवृश्चिकाद्यै-
र्विषूचिकाजीर्णगरज्वरैश्च ।
आर्त्तान् नरान् भूतविधर्षितांश्च
स्वस्थीकरोत्यञ्जनपाननस्यैः ॥

बस्तस्यावेर्मूत्रेण सुसूक्ष्ममतिश्लक्ष्णं पिष्टं बिल्वमूलादिकमञ्जनादिभिर्भुजङ्गाद्यैर्विषूचिकाद्यैश्चार्तान् भूतविधर्षितांश्च नरान् स्वस्थीकरोति । सुरसपुष्पं सुरसमञ्जरी ॥

त्रिवृद्विशल्या मधुकं निशे लवणपञ्चकम् ।
मंजिष्ठा त्र्यूषणं तद्वत् कल्कयेत् स महागदः ॥

त्रिवृदादिको महागदः सुबोधः । विशल्या गर्भपातनी । तद्वत् कल्कयेदित्यनेन पेषणादि सर्वं पूर्ववत् बोद्धव्यम् ॥

मांसीहरेणुत्रिफला मुरुङ्गी मधुयष्टिका ।
मंजिष्ठा पद्मकाशोककुष्ठतालीसचन्दनम् ॥
सुगन्धिकैला किणिही त्वक्पटोली मृगादिनी ।
भार्ङ्गी विळङ्गं पालिन्दी पाठा क्रोष्टुकमेखला ॥
पुष्पमारुष्करं पत्रं सौरसं क्रमुकं पुरम् ।
पित्तं नकुलमार्जारगोधाशल्यकसूकरात् ॥

**पृषताश्चित्रपत्राच्च गोशृङ्गे पूर्ववत् स्थितः ।**
**यत्र गेहे न तत्राहिकीटादिभ्यो भयोद्भवः ॥**
**एतेनभेरीपटहाः पताकाश्च प्रलेपिताः ।**
**आर्षभेण विषं घ्नन्ति स्पर्शश्रवणदर्शनैः ॥**

मांस्यादिभिरार्षभनामागदः सुबोधः। नकुलादि चित्रपत्रान्तैः सह पित्तमिति सम्बध्यते । पूर्ववदिति प्रपौण्डरीकाद्यगदवत् । एतेनार्षभनाम्नागदेन प्रलेपिता भेर्यादयः स्पर्शादिभिर्विषं घ्नन्ति । [मुरुङ्गी सौभञ्जनकः । सुगन्धिका सर्पगन्धिका । किणिही कटभी । मृगादिनी इन्द्रवारुणी । पालिन्दी त्रिवृत् । केष्टुकमेखला पृश्निपर्णी । क्रमुकं पूगफलम् । पुरं गुल्गुलु । पृषतो हरिणः । चित्रपत्रो मयूरः । इति सुश्रुतटीकायाम् ॥ ]

**प्रलेपाद्यैश्चनिश्शेषं दंशादप्युद्धरेद्विषम् ।**
**भूयो वेगाय जायेत शेषं दूषीविषाय वा ॥**

सर्वं विषं प्रलेपाद्यैर्दंशादपि निश्शेषं हरेत्; यतः शेषं विषं भूयो वेगाय दूषीविषाय वा जायते । [प्रलेप आलेपः । आदिशब्देन सेकरक्तमोक्षणादिपरिग्रहः ॥ ]

[विषापायेपि तत्कारणकुपितदोषप्रशमनोपायमाह ॥ ]

**विषापायेनिलं क्रुद्धं स्नेहादिभिरुपाचरेत् ।**
**तैलमद्यकुलत्थाम्लवर्ज्यैः पवननाशनैः ॥**

विषापाये विषापगमे वमनादिभिः क्रुद्धमनिलं तैलादिवर्ज्यैः पवननाशनैः स्नेहादिभिरुपाचरेत् । तैलादीनां पवनापहत्वेपि प्रतिषेधः ॥

**पित्तं पित्तज्वरहरैः कषायस्नेहवस्तिभिः ॥**

विषापाये पित्तं क्रुद्धं पित्तज्वरहरैः कषायादिभिर्जयेत । [कषायः षडङ्गादिः स्नेहस्तिक्तकादिः ॥ ]

**समाक्षिकेण वर्गेण कफमारग्वधादिना**

विषापाय एव कफं क्रुद्धं समाक्षिकेणारग्वधादिना वर्गेण कषायाद्युपयुक्तेन जयेत् ॥

[सर्पाङ्गाभिहतशङ्काविषयोश्चिकित्सामाह ॥]

**सिता वैगन्धिको द्राक्षा पयस्या मधुकं मधु ।**
**पानंसमन्त्रपूताम्बुप्रोक्षणं सान्त्वहर्षणम् ।**
**सर्पाङ्गाभिहते युञ्ज्यात्तथा शङ्काविषार्दिते ॥**

सितादिकं पानं समन्त्रपूताम्बुप्रोक्षणादिकं च सर्पाङ्गाभिहताख्ये शङ्काविषपीडिते च युञ्ज्यात् । [वैगन्धिकस्त्रिजातकश्चतुर्जातको वा मन्त्रपूतेन जलेन प्रोक्षणं सान्त्वनादिकं च इति जर्ज्झटः ॥ ]

**पूतनाप्रेतकूश्माण्डपिशाचाद्या नरद्विषः ।**
**हन्युरौषधवीर्याणि रक्षाकर्मण्यवारिताः ।**
**तस्माद्रक्षां प्रयुंजीत रक्षोगणनिवारिणीम् ॥**

सर्वत्र वक्ष्यमाणां रक्षां रक्षसां गणानां च निवारिणीं प्रयुंजीत । विषादिरक्षाकर्मणि पूतनादयो नरद्विषो मनुष्यशत्रवः अवारिताः सन्तः औषधवीर्याणि हन्युरतो हेतोः रक्षोगणनिवारिणीं रक्षां प्रयुंजीत ॥

**गोमयेन सुसम्मृष्टे धूपागरुसुधूपिते ।**
**गन्धमाल्योपहाराद्यैर्गृहे पूजितदैवते ॥**
**सूत्रकारान् समभ्यर्च्य शङ्करास्थिककाश्यपान्**
**सन्तर्प्यहव्यकव्याभ्यां समिद्धाननलद्विजान् ॥**

प्राङ्मुखायोपविष्टाय विषार्ताय चिकित्सकः ।
उत्तराभिमुखो युञ्ज्याद्दिव्यां मन्त्राणि भेषजम् ॥
समप्रमाणैर्हरितैर्दर्भैः प्रागभिमन्त्रितैः ।
अच्छिन्नाग्रैः समूलैश्च कुर्यात्तस्यापमार्जनम् ॥
ब्राह्माद्यैरगदैरेनं नित्यमेवानुलेपयेत् ।
संजीवनादीन् पानादौ दंशलेपे च योजयेत् ॥
पूर्णकुम्भं सकुसुमं सर्षपान् छागलं पयः ।
शस्त्रं दूर्वां मधु घृतं कुर्याद्दष्टस्यमूर्द्धतः ।
एवं शाम्यति सप्ताहाद्विषमाश्रवतः सतः ॥

गोमयेनेत्यादिना पूतनादीनां रक्षा सुबोधा । गन्धाद्यैश्चन्दनादिभिः । पूजिता देवता यस्मिन् गृहे तत्तथोक्तम् । सूत्रकारानिति शङ्करादिविशेषणम् । देवदेयं हव्यम् । पितृदेयं कव्यम् । ब्राह्मसंजीवनादयोऽगदा विषप्रतिषेधोक्ताः । दष्टस्य मूर्द्धतः शय्याशिरोभागे पूर्णकुम्भादिकं कुर्यात् । आश्रवान् सत्ववान् ॥

[इदानीं येषां च धारणात् प्रभावोपहतं विषं विषत्वं जहाति तान्यभिदधाति । कर्केतनमित्यादि इति जर्ज्झटः ॥ ]

कर्केतनं मरतकं वज्रं वारणमौक्तिकम् ।
वैडूर्यं गर्दभमणिं पिचुकां विषमुष्टिकाम् ॥
हिमवद्गिरिसम्भूतां सोमराजीं पुनर्न्नवाम् ।
तथा द्रोणं महाद्रोणं मानसीं सर्पजं मणिम् ।
विषाणिविषशान्त्यर्थं वीर्यवन्ति च धारयेत् ॥

कर्केतनादीनि केचिन्मणयः । कानिचिदौषधानि । वीर्यवन्ति विषाणीत्येतत् सर्वं विषशान्त्यर्थं धारयेत् । कर्केतनं पद्मरागविशेष इति जर्ज्झटः । ] [कर्केतनं माणिक्यम् । वारणस्यमस्तकोद्भूतमौक्तिकं वारणमौक्तिकम् । गर्दभमणिः धूम्रवर्णरत्नविशेषः । पिचुका रक्तपुष्पेति काचिदौषधिः । विषमूषिका तन्नामधेया परमौषधिः । विषमूषिकेतिपाठः । हिमवद्गिरिसम्भूता श्वेतवचा । हिमवद्गिरिसम्भूता सोमराजीति केचित् । द्रोणं वैकुण्ठं । महाद्रोणं श्वेतवैकुण्ठम । मानसी मण्डूकपर्णी । ब्रह्मीति केचित् । सर्पफणोद्भूतो मणिः सर्पजमणिः ॥ ]

छत्री झर्झरपाणिश्च चरेद्रात्रौ विशेषतः ।
तच्छायाशब्दवित्रस्ताः प्रणश्यन्तिभुजङ्गमाः ॥

॥ इत्युत्तरे द्विचत्वारिंशोऽध्यायः ॥

छत्री झर्झरपाणिश्च नित्यं चरेत् । रात्रौ तु विशेषतः । झर्रं झणझणायमानं लोहमयं कटकाकारम् । तयोश्छत्रझर्झरयोर्यथासंख्येन छायाशब्दाभ्यां त्रस्ता भुजङ्गमा नश्यन्त्यदर्शनं यान्ति । [सर्वदा प्रमादपूर्वं सञ्चरणं निषिध्यत इति जर्ज्झटः । ] छत्रवान् जर्जरहस्तश्च सदा सञ्चरेत् निशि विशेषात् । छत्रमातपत्रम् । जर्जरपाणिः सशब्दहस्तः । प्रणश्यन्त्यदर्शनं यान्ति णश अदर्शन इति धातुः ॥ ]

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे द्विचत्वारिंशोऽध्यायः ॥

# त्रिचत्वारिंशोऽध्यायः ।

## कीटविषप्रतिषेधम् ॥

जङ्गमविषप्रसङ्गेन सर्पान्वयानां कीटानां चिकित्साप्रदर्शनार्थमध्याय आरभ्यते ॥

अथातः कीटविषप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति ह स्माहुरात्रेयादयो महर्षयः ॥

अत्र प्रथममेव कीटानां स्वरूपमुच्यते । तदविज्ञाने हि चिकित्सायाः प्रदर्शनस्याशक्यत्वात् ॥

सर्पाणामेव विण्मूत्रशुक्राण्डशवकोथजाः ।
दोषैर्व्यस्तैः समस्तैश्च युक्ताः कीटाश्चतुर्विधाः ॥

सर्पाणामेव विडादिषु कीटा जायन्ते वक्ष्यमाणेन वायव्याग्नेयसौम्यसंकीर्णभेदेन चतुर्विधाः । क्रमेण च प्रथमास्त्रयो दोषैर्वातादिभिर्व्यस्तैर्युक्ता अन्त्याः समस्तैः ॥

कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः ॥
उचिटिङ्गोऽग्निनामा च चिच्चिटाङ्गो मयूरकः ।
अहिजोरभ्रकावर्त शारिकामुखवैदलाः ॥
शरावकुर्दो परुषश्चित्रशीर्षो हि जारकः ।
अष्टादशेति वायव्याः कीटा वातप्रकोपनाः ॥

कुम्भीनसादयोऽष्टादश कीटा वायव्यास्ते च वातप्रकोपनाः । [ शरावकुर्दोऽभिराजीपरुषश्चित्रशीर्षकः । शतबाहुश्च यश्चापि रक्तराजिः प्रकीर्तितः । इति सुश्रुतपाठः । व्याख्या । तानेव चतुष्प्रकारान् वातादिस्वभावैर्निर्दिशन्नाह । कुम्भीनस इत्यादि । एते कीटकभेदा नानादेशीयलोकादवगन्तव्याः । यतः सुरसंवीरनन्दिवराहजेज्जटगदयासादिभिः टीकाकारैर्न व्याख्याताः । वातप्रकोपनानां कुम्भीनसादीनां मध्ये शृङ्गिचिच्चिटिङ्गशरावकुर्दचित्रशीर्षकान् वर्जयित्वा शेषाश्चतुर्दश मुखसन्दंशविषाः । इति प्रबन्धसंग्रहः ॥ ]

कौण्डिन्यकः कणभको वरटीपत्रवृश्चिकः ।
विनासका ब्राह्मणिका विन्दुलोभ्रमरस्तथा ॥
बाह्यकी पिच्चिटः कुम्भीवर्चःकीटोरिमेदकः ।
दुन्दुभिः पद्मकीटश्च मकरः शतपादकः ॥
पञ्चालः पाकमत्स्यश्च [1] सूक्ष्मतुण्डोथगर्दभिः ।
क्लीतःकृमिशरारी च यश्चाप्युत्क्लेशकः स्मृतः ।
चतुर्विंशतिराग्नेयाः कीटाः पित्तविकारदाः ॥

कौण्डिन्यकादयश्चतुर्विंशतिः कीटा आग्नेयास्ते च पित्तविकारदाः । [पित्तप्रकोपनानां मध्ये कौटिन्यकवरटीभ्रमरपिच्चिटवर्चःकीटमकरशतपदपञ्चालपाकमत्स्यसूक्ष्मतुण्डान् विहायाशेषाश्चतुर्दशमुखसन्दंशशेषाः ॥

विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोथकोकिलः ।
स्थैर्यकः प्रचलाकश्च वटभः किटिभो जटी ॥
सूचीमुखः कृष्णगोधादभ्रः काषायवासिकः ।
त्रयोदशैते निर्दिष्टाः सौम्याः श्लेष्मप्रकोपनाः ॥

विश्वम्भरादयस्त्रयोदश कीटाः सौम्यास्ते च श्लेष्मप्रकोपनाः । [श्लेष्मप्रकोपिनां मध्ये विश्वम्भरप्रचलाक कृष्णगोधा कषायवासिकांश्च-

१. कृष्णतुण्डोथ इति पाठान्तरम् ॥

तुरो वर्जयित्वा नवान्येमुखसन्दंशविषा इति प्रबन्धसंग्रहे ॥ ]

**तुङ्गनासाश्चिपिलक तालको वाहकस्तथा ।**
**कोष्ठागारी कृमिकरो यश्च मण्डलपुच्छकः ॥**
**तुण्डनाभः सर्षपको मद्गुलिः शम्बुकस्तथा ।**
**अग्निकीटश्चसङ्कीर्णा द्वादश प्राणनाशनाः ॥**

तुङ्गनासादयो द्वादश कीटाः सङ्कीर्णास्ते च प्राणनाशनाः सान्निपातिकत्वात् । [त्रीन् कीटान् दर्वीकरमण्डलि राजिलसम्बन्धेन वाय्वादिप्रकृतीन् क्रमान्निर्दिश्य सर्वदोषप्रकृतिकानाह तुङ्गनास इत्यादि । सर्वदोषप्रकृतिकानां मध्ये वाहकसर्षपकशम्बुकान् वर्जयित्वा नवमुखसन्दंशविषाः ॥ ]

**दष्टस्यकीटैर्वायव्यैर्दंशस्तोदरुजोद्धणः ॥**
**आग्नेयैरल्पसंस्रावो दाहरागविसर्पवान् ।**
**पक्वपीलुफलप्रख्यः खर्जूरसदृशोथवा ॥**
**कफादिकैर्मन्दरुजः प वोदुम्बरसन्निभः ।**
**स्रावाढ्यःसर्वलिङ्गस्तुदंशःस्यात्सान्निपातिकैः॥**

दष्टस्यकीटैरित्यादिना चतुर्णां कीटानां क्रमेण दंशलक्षणम् । व्याख्यासमम् । [वायव्यसंज्ञैः कीटैर्दष्टस्य नरस्य दंशो दंशव्रणस्तोदरुजाढ्यःस्यात् । आग्नेयसंज्ञैः कीटैर्दष्टस्य दंशोल्पस्रावयुक्तो दाहादिमान् पक्वपीलुफलसमवर्णः खर्जूरफलसमवर्णो वा स्यात् । कफादिकैः सौम्यसंज्ञैः कीटैर्दष्टस्य दंशव्रणः मन्दरुजोल्पवेदनाः पक्वजन्तुफलतुल्यः स्रावबहुलश्च स्यात् । सान्निपातिकैः कीटैर्दष्टस्य तु दंशव्रणो वायव्यादिसर्वलक्षणयुक्तः स्यात् ॥ ]

**वेगाश्चसर्पवच्छोफो वार्द्धिष्णुर्विस्नरक्तता ।**
**शिरोक्षिगौरवं मूर्च्छा भ्रमः श्वासोतिवेदना ॥**

कीटेषु विषवेगाः सर्पवद्विज्ञेया वातादि विशेषेण । अत्र तु शोफो वार्द्धिष्णुर्विस्नरक्तता दिकं च । [विस्नमा मगन्धि । मूर्च्छा मोहः । अतिवेदना रुजाधिक्यम् ॥ ]

**सर्वेषां कर्णिका शोफो ज्वरः कण्डूररोचकः ॥**

सर्वेषां कीटानां कर्णिकादिसामान्यं लिङ्गम । कर्णिकाकारा पिटकोक्ता क्षुद्ररोगे । [कीटदष्टानां सामान्यलक्षणमाह शोफो वार्द्धिष्णुरित्यादि । कर्णिकाकारः किञ्चिदुत्सन्नोदंशव्रणः कर्णिका शोफः । तद्विधो मांसांकुरो वा ॥ ]

**वातिकः पक्षवातेन स्पर्शाद्दशति पैत्तिकः ।**
**मुखेन श्लैष्मिकः कीटः सर्वथा सान्निपातिकः ॥**

वातिक इत्यादिना चतुर्णां कीटानां दंशनोपायाः । सर्वथेति पक्षवातेन स्पर्शान्मुखेन च ॥

**दष्टस्य कणभैः शोफो विसर्पोवमथुर्ज्वरः ।**
**दंशश्च कर्णिकाकारः श्यावरक्तो विशीर्यते ॥**

दष्टस्य कणभैरित्यादिना कीटेभ्यः प्रधानविवरणम् । श्यावरक्तो विशीर्यत इत्येवमन्तं कणभे । [सर्व एव कणभाश्चतुष्पदकीटाः साध्या इति प्रबन्धसंग्रहे ॥

**त्रिकण्टकैस्तु दष्टस्य नानावर्णोथवा सितः ।**
**दंशोभवेच्छ्वयथुमान् मोहो भेदश्च वर्चसः ॥**
**कुकलासेर्द्धचन्द्राभःस्राववान् भृशलोहितः ।**
**दंशो रक्तैश्चितः स्फोटैः सशूलैर्दम्भवोद्भवः ॥**

त्रिकण्टकैरिति । वर्चोभेदान्तं त्रिकण्टके । भृशलोहितान्तं कुकलासदंशे । दम्भवोद्भवो दंशो रक्तैः सशूलैः स्फोटैश्चितो भवति ॥

**एकदंष्ट्रार्पितः पीतः कण्डूमान् दार्दुरः सरुक् ।**
**दंशो दष्टः सतृण्निद्रो मूर्च्छावान् हरितं वमेत् ॥**

एकदंष्ट्रार्पित इत्यादि हरितं वमेदित्यन्तं दार्दुरे दंशे । दर्दुरो मण्डूकः ॥

**मात्स्योदंशः सरुग्दाहःप्रागेवोक्तो जलौकसाम् ।**
**विश्वम्भरकृतो दंशः शोफकण्डूरुजान्वितः ।**
**कफोद्गममतीसारं कुरुते कोठजन्मच ॥**

मात्स्यो दंशः सरुग्दाहो रुग्दाहसहितो भवति । जलौकसां तु दंशः प्राक्सूत्रस्थानएवोक्तः । कोठजन्मान्तं विश्वम्भरकृते दंशे ॥

**पीतः शतपदीदंशः स्वेदरुग्रागशोफवान् ।**
**अतसीपुष्पवर्णो वा पिटकावन् भ्रमप्रदः ॥**

शतपद्याः कर्णजळूकिकाया दंशः पीतः स्वेदादिमांश्च । अथवा अतसीपुष्पवर्णः पिटकायुक्तो भ्रमप्रदश्च ॥

**गृहगोळिकया स्वेदतोदश्वयथुदाहवान् ।**
**क्वेदीचदंशो दष्टस्य हृत्पीडाग्रन्थिसम्भवः ॥**

ग्रन्थिसम्भवान्तं गृहगोळिकाया घरोळिकाया दंशे ॥

**कण्डूमान् मशकैरीषच्छ्वयथुर्मन्दवेदनः ।**
**असाध्यकीटसदृशमसाध्यमशकक्षतम् ॥**

मन्दवेदनान्तं मशकदंशे । असाध्यमशकक्षतमसाध्यकीटलक्षणैर्ज्ञेयम् ॥

**प्रायेण मक्षिका नेत्रे दशन्ति श्वयथूल्बणः ।**
**तद्दंशो दाहकण्डूमांस्तासां तु स्थालिकां त्यजेत् ।**
**तद्दष्टे पिटका श्यावा स्राविणी भूर्युपद्रवा ।**

मक्षिकाः प्रायेण नेत्रे दशन्ति । तद्दंशो मक्षिका दंशः श्वयथूल्बणः श्वयथु बहुलो दाहादिमांश्च । तासां मक्षिकाणां मध्ये या स्थालिका नाम मक्षिका तां तु त्यजेदसाध्यत्वात् । तद्दष्ट इति स्थालिकादष्टे भूर्युपद्रवान्तलक्षणा पिटका स्यात् ॥

**रुग्वान् पिपीलिकादंशो वह्निनेव च दह्यते ॥**

दह्यत इत्येतदन्तं पिपीलिकादंशे ॥

**जलबिन्दुनिभैः स्फोटैर्दाहकण्डूरुजान्वितैः ।**
**यत् गात्रमाचितं सोष्म तद्विद्यादवमूत्रितम् ॥**

जलबिन्दुप्रख्यैर्दाहाद्यन्वितैःस्फोटैर्यद्गात्रमाचितं व्याप्तमूष्मसहितं भवति तद्विषप्राणिना अवमूत्रितमिति विद्यात् ॥

**वृश्चिकस्य विषं तीक्ष्णमादौ दहति वह्निवत् ।**
**ऊर्ध्वमारोहति क्षिप्रं दंशे पश्चात्तु तिष्ठति ॥**
**दंशः सद्योतिरुक् श्यावस्तुद्यते स्फुटतीव च ॥**

वृश्चिकस्येत्यादि । सुबोधम् । [वृश्चिकस्य विषं तीक्ष्णमाशुकारि आदौ दंशसमय एव अग्निरिव दहति । क्षिप्रमाश्वेव ऊर्ध्वं दंशव्रणादूर्ध्वदेहमारोहति पश्चात्तदनन्तरमेव दंशव्रणमाश्रित्य तिष्ठति । ततो दंश आश्वेवाधिकवेदनायुक्तः श्याववर्णस्तोदयुक्तः स्फुटनप्रतीतियुक्तश्च भवति ॥]

[तेषामुत्पत्तिभेदजनितं विषभेदं दर्शयति ॥]

**तेगवादिशकृत् कोथाद्दिग्धदष्टादिकोथतः ।**
**सर्पकोथाच्च सम्भूता मन्दमध्यमहाविषाः ॥**

ते वृश्चिकास्त्रिभिः कोथैर्जायन्ते । ते च गवादिशकृत्कोथजा मन्दविषाः दिग्धदष्टादिकोथजा मध्यविषाः सर्पकोथजा महाविषाः । कोथः क्लेदः ॥

[एषां विशेषपरिज्ञानार्थं लक्षणमाह ॥]

**मन्दाःपीताःसिताः श्यावा रूक्षाः कर्बुरमेचकाः**
**रोमशा बहुपर्वाणो लोहिताः पाण्डुरोदराः ॥**

पाण्डुरोदरान्तं मन्दविषवृश्चिके लक्षणम् । [मन्दामन्दविषा गवादिशकृत्कोथजा वृश्चिकाः पीतादिवर्णाः कर्बुरा नानावर्णाः मेचकाः कृष्णवर्णाः रोमशा रोमबहुलाः बहुपर्वाणो बहुसन्ध्युपेतपुच्छाः लोहिता रक्ताः उदरे पाण्डरवर्णाः ॥]

**धूम्रोदरास्त्रिपर्वाणो मध्यास्तु कपिलारुणाः ।**

अरुणान्तं मध्यविषे । [मध्यामध्यविषा दिग्धदष्टादिकोथजा वृश्चिकाः । तुर्विशेषे । धूम्रोदरा धूम्रवर्णमुदरं येषां ते तथोक्ताः । त्रिपर्वाणः पुच्छे त्रीणि पर्वाणि सन्धयो येषां ते । कपिलारुणाः कपिलवर्णा अरुणवर्णाश्च ॥]

**पिशङ्गाः शबलाश्चित्राः शोणिताभा महाविषाः ।**

पिशङ्गादिकं महाविषे । [महाविषाः सर्पशवकोथजा वृश्चिकाः पिशङ्गास्ताम्रवर्णाः शबला नानावर्णाः चित्रा विचित्रवर्णाः शोणिताभा रक्तवर्णाः ॥

**अग्न्याभा द्व्येकपर्वाणो रक्तासितसितोदराः ॥**

सितादरान्तमग्न्याभेषु । द्वे वा एकं वा पर्व येषां ते तथोक्ताः । (अग्न्याभा अग्निसदृशवर्णाः रक्तासितसितोदरा रक्ताद्यन्यतमवर्णोदराः । पिशङ्गादि सितोदरान्तं महाविषवृश्चिकलक्षणमिति केचित् ॥)

**तैर्दष्टः शूनरसनः स्तब्धगात्रो रुजार्दितः ।**
**खैर्वमन् शोणितं कृष्णमिन्द्रियार्थानसंविदन् ॥**
**स्विद्यन् मूर्च्छन् विशुष्कास्योविह्वलोवेदनातुरः**
**विशीर्यमाणमांसश्च प्रायशो विजहात्यसून् ॥**

तैरग्न्याभैर्दष्टः शूनरसनादिकः सन् प्रायोऽसून् विजहाति । (शूनरसन उच्छूनजिह्वः । स्तब्धगात्रो निश्चलाङ्गः । ज्वरार्दितस्तीव्रज्वरयुक्तः । खैरोमकूपैः कृष्णवर्णं रक्तमुद्वमन् । इन्द्रियार्थानसंविदन् श्रोत्रादीन्द्रियाणां शब्दादिविषयानविजानन् । स्विद्यन् स्वेदयुक्तः । मूर्च्छन् मोहं गच्छन् । विशुष्कास्य अनार्द्रवदनः । वेदनातुरो वेदनया पीडितः । विशीर्यमाणमांसः दंशत्रणाद्विशीर्यमाणानि मांसानि यस्य । प्रायशः प्रायेणासून् प्राणान् विजहाति त्यजति ॥)

**उच्चिटिङ्गस्तु वक्त्रेण दशत्यभ्यधिकव्यथः ॥**

उच्चिटिङ्गाख्यो वृश्चिकस्तु वक्त्रेण दशत्यधिकव्यथश्च भवति । (वृश्चिकस्तनुदीर्घोच्च उच्चिटिङ्गः स्मृतो बुधैरिति मञ्जरी ॥)

**साध्यतो वृश्चिकात् स्तम्भं शेफसो हृष्टरोमताम् ।**
**करोति सेकमङ्गानां दंशः शीताम्बुनेव च ॥**
**उष्ट्रवर्णतया प्रोक्तः स एव ह्युष्ट्रधूमकः ।**
**रात्रिको रात्रिचाराच्च—**

साध्यतः साध्यसंज्ञाद् वृश्चिकात् शेफस्तम्भादिकं भवति । दंशश्चाङ्गानां शीताम्बुना सेकं करोतीव । स एव साध्यसंज्ञो वृश्चिक उष्ट्रवद्धूमवर्णत्वादुष्ट्रधूम इत्युक्तः । रात्रिचरणाच्च रात्रिकः ॥

**—पृथक् तु कणभादिषु ।**
**विकारसाधनाभेदात् भेदाः सन्तोपि नोदिताः**

कणभादिष्वशेषेषु पृथक् प्रत्येकं तु भेदाः सन्तोपि न कीर्तिताः । कुत इत्याह । विकाराणां व्याधीनां साधनस्य चिकित्सितस्य चाभेदात् ॥

**वातपित्तोत्तराःकीटाः श्लैष्मिकाःकणभोन्दुराः**
**प्रायो वातोल्बणविषा वृश्चिकाः सोष्ट्रधूमकाः ॥**

सर्वे कीटाः प्रायेण वातपित्ताधिकाः । कणभोन्दुरास्तु प्रायः श्लैष्मिकाः । वृश्चिका उष्ट्रधूमकाश्च प्रायो वातोल्बणविषाः ॥

**यत्र यस्यैव दोषस्य लिङ्गाधिक्यं प्रतर्कयेत् ।**
**तत्र तस्यौषधैः कुर्याद्विपरीतगुणैः क्रियाम् ॥**

यत्र यस्य दोषस्य लिङ्गानामाधिक्यं प्रतर्कयेत् कल्पयेत् तत्र तस्यैव विपरीतगुणैरौषधैर्द्रव्यादिभिः क्रियां चिकित्सां कुर्यात् ॥

(वातिकादिकीटविषस्य लक्षणमाह । )

**हृत्पीडोर्ध्वानिलः स्तम्भः सिरायामोस्थिपर्व-**
**(रुक् ।**
**घूर्णनोद्वेष्टनं गात्रश्यावता वातिके विषे ॥**

हृत्पीडादिकं वातिके कीटविषे भवति । (वाताधिके कीटविषे हृत्पीडादयः स्युः । हृत्पीडा हृदि वेदनाविशेषः । ऊर्ध्वानिल ऊर्ध्वश्वासः । स्तम्भः स्तब्धताङ्गानाम् । सिरायामः सिराकर्षणम् । अस्थिषु पर्वसु च रुक् पीडाविशेषः । घूर्णनं भ्रमणम् । उद्वेष्टनं ग्रथनमिवाङ्गस्य । गात्रश्यावता शरीरे श्याववर्णत्वम् ॥ )

**संज्ञानाशोष्णनिश्वासौ हृद्दाहः कटुकास्यता**
**मांसावदरणं शोफो रक्तपित्तं च पैत्तिके ॥**

संज्ञानाशादिकं पैत्तिके कीटविषे । (पित्ताधिके कीटविषे संज्ञानाशादयः स्युः । संज्ञानाशो बुद्धिभ्रंशः । उष्णः श्वास उष्णनिश्वासः । हृदि दाहो हृद्दाहः । कटुकास्यता कटुकवक्त्रत्वम् । मांसस्यावदरणं व्रणमुखात् खण्डशः पतनम् । रक्तपित्तं तत्संज्ञो रोगविशेषः ॥ )

**छर्द्यरोचकहृल्लासप्रसेकोत्क्लेशपीनसैः ।**
**सशैत्यमुखमाधुर्यैर्विद्याच्छ्लेष्माधिकं विषम् ॥**

छर्द्यादिकं श्लेष्माधिके । (श्लेष्माधिकं कीटविषं शैत्यादिसहितैश्छर्द्यादिभिर्जानीयात् । शैत्यं शरीरे ॥ )

(वातिकादीनां चिकित्सां क्रमेणाह ॥ )

**पिण्याकेन व्रणालेपस्तैलाभ्यङ्गश्च वातिके ।**
**स्वेदो नाडीपुलाकाद्यैर्बृंहणश्च विधिर्हितः ॥**

पिण्याकेनेत्यादिना हितान्तेन वातिके विषे चिकित्सा । (वातिके वायव्ये विषे पिण्याकेन दंशव्रणे लेपस्तैलेनाभ्यङ्गः । तैलकथनेन घृतादिनिषेधः सूचितः । नाडीपुलाकाद्यैः स्वेदः नाडीस्वेदः पुलाकादिकृतः स्वेदश्च । पुलाकः पुलाकाख्यो धान्यविशेषः । पलालं वा । आ-

दिशब्देन कृसरोत्कारिकापायसपिण्डादयो गृह्यन्ते । बृंहणो विधिः बृंहणलङ्घनभेदेन द्विविधेषूपक्रमेषु बृंहणोपक्रमश्च हितः ।) (तिलानां स्नेहार्थं पीडितानां किट्टं पिण्ड्याक इति जज्झटः । )

**पैत्तिकं स्तम्भयेत् सेकैः प्रदेहैश्चातिशीतळैः ।**

शीतळैरित्यन्तेन पैत्तिके । (पैत्तिकं विषं शीतळैः स्पर्शवीर्ययोः शीतैः सेकैः प्रलेपैश्च स्तम्भयेत् शमयेत् ।।)

**लेखनच्छेदनस्वेदवमनैः श्लैष्मिकं जयेत् ।**

लेखनादिभिः श्लैष्मिकं जयेत । (श्लेष्माधिकं विषं लेखनादिभिर्जयेत् । लेखनं दंशव्रणस्य । छेदो दंशव्रणच्छेदः ।।)

**कीटानां त्रिप्रकाराणां त्रैविध्येन क्रियाहिता ।**

त्रिप्रकाराणां वातादिभेदेन त्रिविधानां कीटानां त्रैविध्येन वातादिचिकित्साप्रकारेण क्रिया चिकित्सा हिता ।।

**स्वेदालेपनसेकांस्तु कोष्णान प्रायोवचारयेत् ।**
**अन्यत्र मूर्छितादंशपाकतः कोथतोपि वा ।।**

मूर्छायादंशपाकादंशकोथाच्चान्यत्र सर्वकीटेषु प्रायः कोष्णान् स्वेदादीनवचारयेत् । (प्रायो ग्रहणेन कुत्रचिच्छीतमपि योज्यमिति भावः ।। )

**नृकेशाः सर्षपाः पीता गुडो जीर्णश्च धूपनम् ।**
**विषदंशस्य सर्वस्य काश्यपः परमब्रवीत् ।।**

नृकेशादिना काश्यपोक्तं दंशधूपनम् । पीता इति सर्षपविशेषणम् । जीर्ण इति गुडस्य ।।

**विषघ्नं च विधिं सर्वं कुर्यात् संशोधनानि च ।**

विषघ्नं च सर्वं विधिं संशोधनानि च कुर्यात् । (सर्वेषु कीटविषेषु विषहरं सर्वं विधिं चिकित्सितं वमनविरेचनादीनिसंशोधनानि च कुर्यात् ।।)

**साधयेत सर्पवद्दष्टान विषोग्रैः कीटवृश्चिकैः ।**

विषोग्रैरुग्रविषैः कीटैर्वृश्चिकैश्च दष्टान् सर्पवत् सर्पदष्टवत् साधयेत् चिकित्सेत् । [अनेन सर्वत्र विषाधिक्ये सर्पस्य विषोद्गुणतया तद्वत् प्रतिकर्तव्यमित्यूह्यम् ।।]

**तण्डुलीयकतुल्यांशां त्रिवृतां सर्पिषा पिबन् ।**
**याति कीटविषैः कम्पं न कैलास इवानिलैः ।।**

तण्डुलीयकसमां त्रिवृतां सर्पिषा घृतेन पिबन् पुरुषः कीटविषैस्तथाकम्पं न याति यथा कैलासोनिलैः ।।

**क्षीरिवृक्षत्वगालेपः शुद्धे कीटविषापहः ।**
**मुक्तालेपोवरः शोफतोददाहज्वरप्रणुत् ।।**

क्षीरिवृक्ष इत्यादि शुबोधम । शुद्ध इति वान्तविरिक्ते । मुक्तालेपः शोफादिप्रणुद्वरः श्रेष्ठश्च । [मुक्तालेपोतिशयेन कटिदष्टानां शोफादिघ्नः ।।]

**वचा हिंगुविळङ्गानि सैन्धवं गजपिप्पली ।**
**पाठाप्रतिविषाव्योषं काश्यपेन विनिर्मितम् ।।**
**दशाङ्गमगदं पीत्वा सर्वकीटविषं जयेत् ।**

वचादिभिः काश्यपविनिर्मितं दशाङ्गनामानमगदं पीत्वा सर्वं कीटविषं जयेत् । [वचादिकं काश्यपमुनिना विनिर्मितं दशद्रव्यक-

तत्वादशाङ्गसंज्ञमेतमगदमौषधयोगमनुकद्रवत्वा-ज्जलेनालोड्य पीत्वा सर्वं कीटविषं जयेत् ॥ ]

**ऐकध्यं कीटविषजिन्महास्नेहं पयो मधु ।**

चत्वारः स्नेहाः क्षीरं मधु चेत्यैकध्यं पीतं कीटविषं जयेत् ॥

**शिखिकुक्कुटजैः पिञ्छैः सतैललवणोत्तमैः ।**
**धूपो हन्ति कृतः शीघ्रं कीटवृश्चिकजं विषम् ॥**

शिखिपिञ्छादिभिर्धूपः कीटवृश्चिकजं विषं शीघ्रं हन्ति ॥

**विषे कणभजे कुर्यादुन्दुरोक्तमुपक्रमम् ।**
**शिरीषबीजं मण्डूके लेपः स्नुक्क्षीरकाल्कितम् ॥**
**मधुलिकटुकं श्वेतपिण्डामूलं च मत्स्यजे ।**

कणभविषे उन्दुरोक्तमुपक्रमं चिकित्सां कुर्यात् । [सर्वे एव कणभाश्चतुष्पदकीटाः साध्याश्चेति सुश्रुतटीका । ] उन्दुरुर्मूषिकः । स्नुक्क्षीरेण सुधाक्षीरेण कल्कितं शिरीषबीजं मण्डूकविषे लेपः । मण्डूको दर्दुरः । मध्वादिना लेपो मत्स्यविषे । श्वेतपिण्डामूलं मदनमूलम् । श्वेतभिण्डा इति च पाठः । भिण्डा भिण्डीतको भिण्डी भिण्डकः क्षेत्रसम्भवः । चतुष्पदः सुशाकश्च करपर्णोस्रपत्रकः ॥ वृत्तबीजश्चतुष्पुण्ड्रो भिण्ड इत्यभिधीयते । ग्राहिण्युष्णा रुचिकरी साम्ला भिण्डा प्रकीर्तिता इति राजनिघण्टौ । मूलानि श्वेतभण्डीनामिति चरकपाठः । ] भिण्डा वेण्ट इति भाषा ॥

**वचां वंशत्वचं पाठां नतं सुरसमञ्जरीम् ।**
**द्वे बले नाकुलीं कुष्ठं शिरीषं रजनीद्वयम् ॥**
**गुहामतिगुहां श्वेतामजगन्धां शिलाजतु ।**
**कत्तृणं कटभीक्षारं गृहधूमं मनश्शिलाम् ॥**
**रोहीतकं च पित्तेन कल्कयेत् स वरोऽगदः ।**
**विश्वम्भरादिष्वालेपनावनाञ्जनपानतः ॥**

वचादिकं केनचित् पित्तेन कल्कयेत् सोऽगदो विश्वम्भरादिष्वालेपनादितो वरः श्रेष्ठः । गुहा पृश्निपर्णी । अतिगुहा सालपर्णी । श्वेता कटभी । कत्तृणं भूस्तृणम् । रोहीतकं डाडिमपुष्पकाख्यम् । [नाकुली सर्पसुगन्धा । अजगन्धा पशुगन्धा शुक्ला । पित्तेन पिष्ट्वा आदिलोपाद् गोपित्तेनेत्यर्थः । इति जज्जटः ॥ ]

**स्वर्जिकाजशकृत्क्षारः सुरसः साक्षिपीडकः ।**
**मदिरामण्डसंयुक्तो हितः शतपदीविषे ॥**

स्वर्जिकादिभिरगदः शतपद्याः कर्णजलूकिकाया विषे हितः । अक्षिपीडकः शङ्खिनी ॥

**कपित्थमक्षिपीडोर्कबीजं त्रिकटुकान्वितम् ।**
**करञ्जो द्वे हरिद्रे च गृहगोळीविषापहः ॥**

कपित्थादिभिरगदो गृहगोळीविषापहः । कपित्थो दधित्थः । करञ्जो नक्तमालः ।

**काकाण्डयुक्तः सर्वेषां विषाणां तण्डुलीयकः ।**
**प्रशस्तो बर्हिणाण्डेन तद्वद्वायसपीलुकः ॥**

काकस्याण्डेन युक्तस्तण्डुलीयकः सर्वविषाणां प्रशस्तोऽगदः । तद्वच्च मयूराण्डेन वायसपीलुकः काकपीलुकफलानि । काकपीलुको गुञ्जा ॥

**तगरं नागरं नागकेसरं मरिचानि च ।**
**प्रयुक्तं पानलेपाभ्यां मक्षिकाविषनाशनम् ॥**

तगरादिकं पानलेपाभ्यां पाने लेपने च प्रयुक्तं मक्षिकाविषनाशनं भवति ॥

**सितासिते च लवणे मरिचं च सनागरम् ।**
**फणिज्जकरसोपेतं वरटीनां विषापहम् ॥**

सितासितलवणादिकं वरटीनां पिपीलिकानां विषापहम् । सितलवणं शुक्लवणम् । असितलवणं कृष्णलवणम् । फणिज्जको मरुवकः तस्य रसः ॥

[वृश्चिकस्य विषाधिक्यात्तच्चिकित्सां पृथगाह ।]

**सद्यो वृश्चिकजं दंशं चक्रतैलेन सेचयेत् ।**
**विदारिगन्धासिद्धेन कवोष्णेनेतरेण वा ॥**
**लवणोत्तमयुक्तेन सर्पिषा वा पुनः पुनः ।**
**सिञ्चेत्कोष्णारनाळेन सक्षीरलवणेन वा ।**
**उपनाहो घृते भृष्टः कल्कोजाज्याःससैन्धवः ॥**

सद्य इत्यादि । चक्रादेव गृहीतं तैलमामं चक्रतैलं तेनाथवा विदारिगन्धया सालपर्ण्या सिद्धेनेषदुष्णेनेतरेण तिलतैलेन वृश्चिकजं दंशं सद्यः सेचयेत् । अथवा स लवणोत्तमेन घृतेन । लवणोत्तमं सैन्धवम् । अथवा कोष्णेन क्षीरलवणयुक्तेनारनाळेन सिञ्चेत् । उपनाहो दंशे बन्धः । अजाजिरजमोजः । [सक्षारलवणेन वा इति च पाठः ॥]

**आदंशं स्वेदितं चूर्णैः प्रच्छाय प्रतिसारयेत् ।**
**रजनीसैन्धवव्योषशिरीषफलपुष्पजैः ॥**

आदंशमिति यत्र दंशस्तत्र स्वेदः । प्रच्छानं कृत्वा रजन्यादिचूर्णैः प्रतिसारणं दंशे । [स्वेदितमनन्तरोक्तेनाजाजीकल्केन कृतोपनाहस्वेदमादंशं दंशव्रणावधि परित इत्यर्थः । प्रच्छानं कृत्वा रजन्यादिचूर्णैः प्रतिसारयेदवकिरेत् । शिरीषस्य फलं पुष्पं च ॥]

**मातुलुङ्गाम्लगोमूत्रपिष्टं च सुरसाग्रजम् ।**
**लेपःसुखोष्णश्चहितः पिण्याको गोमयोपि वा ॥**

मातुलुङ्गाम्लेन गोमूत्रेण पिष्टं सुरसाग्रजं लेपे । सुखोष्णः पिण्याकोपि वा गोमयः । [मातुलुङ्गप्रक्षेपणादम्लीभूतेन गोमूत्रेण पिष्टं सुरसाग्रजं प्रलेपविषये हितम् । सुरसाग्रजं सुरसपुष्पम् । सुखोष्ण ईषदुष्णः पिण्याको गोमयो वा लेपनाय हितः । पिण्याकपेषणस्यानुक्तद्रवत्वात् पूर्वोक्तं गोमूत्रमेव ग्राह्यम् ॥]

**पाने सर्पिर्मधुयुतं क्षीरं वा भूरिशर्करम् ।**
**गुडोदकं वा सुहिमं चातुर्जातकवासितम् ॥**

माक्षिकयुक्तं घृतं पाने अथवा भूरिशर्करं क्षीरम् । सुबोधम् ॥

**पलाशबीजं शूलघ्नो लेपोर्कक्षीरभावितम् ॥**

अर्कक्षीरभावितं पलाशबीजं वृश्चिकेषु शूलघ्नो लेपः ॥

**पारावतशकृत्पथ्या तगरं विश्वभेषजम् ।**
**बीजपूररसोन्मिश्रं वरोयं वृश्चिकागदः ॥**
**मनोह्वा सैन्धवं हिङ्गु मालतीपल्लवानि च ।**
**गोशकृद्रसपिष्टेयं गुळिका वृश्चिकार्दिते ॥**
**लशुनो मरिचं हिङ्गु सुरसं विश्वभेषजम् ।**
**अर्कक्षीरेण गुळिका वृश्चिकार्दितशङ्करी ॥**

पारावतपुरीषादिकोऽगदः सुबोधः । तथैव च मनोह्वादिगुळिका । लशुनादिका च ।

वृश्चिकेनार्दितः पीडितो वृश्चिकार्दितः । शङ्करी सुखकरी ॥

सशैललोष्ट्रदंष्ट्रा च हन्ति वृश्चिकजं विषम् ॥

उष्ट्रस्य दंष्ट्रा च शैवलेन युक्ता वृश्चिकविषं हन्ति । [शैवलोपेता उष्ट्रस्य दंष्ट्रा च लेपाद् वृश्चिकविषं नाशयति ॥]

हिङ्गुना हरितालेन मातुलुङ्गरसेन च ।
लेपाञ्जनाभ्यां गुळिका परमं वृश्चिकापहा ॥

हिङ्गुहरितालाभ्यां पिष्टाभ्यां मातुळङ्गरसेन कृता गुळिका परमं वृश्चिकापहा लेपेऽञ्जने च प्रयुक्ता ॥

करञ्जार्जुनशेलूनां कटभ्याः कुटजस्य च ।
शिरीषस्य च पुष्पाणि मस्तुना दंशलेपनम् ॥

करञ्जादीनां पुष्पाणि मस्तुना पिष्टानि वृश्चिकदंशे लेपनम् ॥

पिप्पलीं मरिचं यष्टिं श्वेतां सुरसमञ्जरीम् ॥
सहदेवामपामार्गं तण्डुलीयं च कल्कयेत् ।
कुतळक्षारतोयेन लेपोऽलिविषनाशनः ॥

पिप्पल्यादीनि कुतळक्षारोदकेन कल्कितानि लेपोऽलिविषे । अलिर्वृश्चिकः ॥

यो मुह्यति प्रश्वसिति प्रलपत्युग्रवेदनः ।
तस्य पथ्यानिशाकृष्णा मञ्जिष्ठातिविषोषणम् ।
सालाबुवृन्तं वार्ताकरसपिष्टं प्रलेपनम् ॥

यः कीटदष्टो मोहादियुक्तस्तस्य पथ्यादिकं मरिचान्तमलाबुवृन्तसहितं वार्ताकरसपिष्टं दंशलेपनम् । [वृश्चिकदष्टो यो नरो मुह्यति मोहं गच्छति प्रश्वसिति तमकश्वासयुक्तश्च भवति उग्रवेदनस्तीव्रवेदनायुक्तः प्रलपति असम्बद्धानि भाषते तस्य वार्ताकरसपिष्टमलाबुवृन्तसहितं पथ्यादिकं प्रलेपनं हितम् । वार्ताकरसो वार्ताकफलरसः । वार्ताकस्तक्कारी । अलाबुवृन्तमलाबूपत्रवृन्तम् ॥]

आदंशे यस्य कण्डूः स्यात् कोथः कोठं च दारुणम् ।
तस्य लेपस्त्रिकटुकं यवक्षारोऽक्षिपीडकः ॥
पारावतशकृत्कान्तास्वर्जिकाग्निहरेणवः ।
रसेन मातुळुङ्गस्य क्षीरेणार्कस्य वा द्रुताः ॥

दंश एवादंशस्तत्र यस्य कण्ड्वादिकं स्यात् तस्य लेपस्त्रिकटुकादयो मातुलुङ्गरसेनार्कक्षीरेण वा द्रुताः ॥

हृदयं पीड्यते यस्य मूर्च्छा चिमिचिमायनम् ।
दन्तौष्ठदंशो रोम्णां च हर्षस्तस्य निवर्तते ॥
वेगो विषस्य पश्चाद्धा नैव वा क्रियया विना ॥

यस्य वृश्चिकार्दितस्य हृदयपीडादिरोमहर्षान्तं भवति तस्य विषवेगः पश्चाद्धा विनिवर्तते क्रियया चिकित्सया विना नैव वा निवर्तते ॥

तत्र कुर्वीत दंशस्य लेपनं मस्तु कल्कितैः ।
श्वेतपाटल्यतिविषाहरिद्राहरिणीनतैः ।
बिल्वमूलयवक्षारसूक्ष्ममागधिकायुतैः ॥

तत्र हृदयपीडादौ श्वेतपाटल्यादिभिर्बिल्वमूलादियुक्तैर्मस्तुकल्कितैर्दंशस्य प्रलेपनं कुर्वीत । हरिणी पीतयूथिका ॥

उत्कृत्यत इवादंशः शूनः क्लिन्नोहतच्छविः ।
जम्बूफलनिभं रक्तं कूजन् वमति वेष्टते ॥
इन्द्रियार्थं न जानाति प्रस्विद्यति च यो मुहुः ।
स्वर्जिकाकुष्ठतगरनाकुलीपीलुपिप्पलीः ॥
बृहतीं चाच्छसुरया तस्य पिष्ट्वा विलेपनम् ।

उत्कृत्यत इव छिद्यत इवादंशो दंश इत्येवमादिकं यत्र तत्र स्वर्जिकादिनाच्छसुरया पिष्टेन लेपनम् ॥

सर्वत्र चोग्रालिविषे पाययेन्मधु[१]सर्पिषी ।
विध्येत् सिरां विदध्याच्च वमनाञ्जननावनम् ॥
उष्णस्निग्धाम्लमधुरं भोजनं चानिलापहम् ।

सर्वत्र चोग्राणामलीनां विषे मधुसर्पिषी पाययेत् । सर्वत्रेति सर्वविकारेषु । अनिलापहान्तमुग्रालिविषे । सुबोधम् । [उग्रालिविषे सर्पकोथजनितोग्रविषवृश्चिकदष्टे सर्वत्र शूनरसनत्वादिविषविकारेषु । अथवा उग्रे दारुणे वृश्चिकविषे सर्वत्र वा दधिसर्पिषी दधि च सर्पिश्च दधिसर्पिषी ते पाययेत् भिषगिति शेषः । सिरां ललाटादिस्थां यथासन्नं विध्येत् । वमनादिकं वातहरमुष्णादिगुणं भोजनं च विदध्यात् । अत्र वातघ्नत्वेपि लवणस्य तीक्ष्णोष्णत्वान्निषेधः ॥]

नागरं गृहकपोतपुरीषं
बीजपूरकरसो हरितालम् ।
सैन्धवं च विनिहन्त्यगदोयं
लेपतोलिकुलजं विषमाशु ॥

नागरादिकोऽगदो लेपनादालिकुलजं वृश्चिकसमूहजं विषमाशु विनिहन्ति । गृहकपोतस्य पारावतस्य पुरीषम् । [बीजपूररसपिष्टो नागरादिकोयमगदः प्रलेपनात् सर्ववृश्चिकोद्भूतं विषं सद्य एव हन्ति ॥]

[वृश्चिकविषस्य परमौषधमाह ॥]

अन्ते वृश्चिकदष्टानां समुदीर्णे भृशं विषे ।
विषेणालेपयेद्दंशं स्थावरेण यथोचितम् ॥

अन्ते इति अनन्तरोक्तायां क्रियायामसिद्धायां वृश्चिकजे विषे भृशं समुदीर्णे स्थावरेण विषेण यथोचितं कृत्वा दंशमालेपयेत् । [अत्रान्तशब्दकथनेन प्राणसन्देहकारिणो विषस्य प्रयोगः नान्योपायिन्येव गदे कार्य इति च द्योत्यते । विषेण स्थावरेण वत्सनाभादिना दंशव्रणं प्रलेपयेत् ॥]

क्रियेयमुच्चिटिङ्गेपि प्रतिलोमं च पांसुभिः ।
उद्वर्तनं सुखाम्लोष्णैस्तथा प्रच्छादनं घनैः ॥

इयं च वृश्चिकोक्ता क्रिया उच्चिटिङ्गेपि योज्या । काञ्चिकादिना सुखाम्लैः सुखोष्णैश्च पांसुभिः प्रतिलोममुद्वर्तनं तथा घनैः पांसुभिः प्रच्छादनं च हितम् ॥

कुटजस्य फलं कुष्ठं मालती फलिनी नतम् ।
तिक्तेक्ष्वाकुश्च पिष्टानि पानप्रधमनादिभिः ॥
वृश्चिकोन्दुरुलूतानां सर्पाणां च विषापहम् ।
समानममृतेनेदं गरशेषं च नाशयेत् ॥

कुटजफलादिकं तिक्तेक्ष्वाकन्तमौषधं पानादिभिर्वृश्चिकादिविषापहममृतसमम् । गरशेषं च नाशयेत् ॥

१ पाययेद्दधिसर्पिषी इति च पाठः ।

अर्कस्य दुग्धेन शिरीषबीजं
त्रिर्भावितं पिप्पलिचूर्णमिश्रम् ।
एषोऽगदो हन्ति विषाणि कीट-
भुजङ्गलूतोन्दुरुवृश्चिकानाम् ॥

॥ इत्युत्तरे त्रिचत्वारिंशोध्यायः ॥

पिप्पलीचूर्णेन मिश्रं शिरीषबीजं त्रीन् वारानर्कदुग्धेन भावितमगदः कीटादीनां विषाणि हन्ति । [अर्कक्षीरेण त्रिवारं भावितं पेषणशोषणादिसंस्कारविशेषेण सम्पादितवीर्यं शिरीषबीजं पिप्पलीचूर्णेन मिश्रीकृत्य गुळिकां कुर्यात् । एषोऽगदः कीटादीनां विषं हन्ति ॥]

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे त्रिचत्वारिंशोऽध्यायः ॥

# चतुश्चत्वारिंशोऽध्यायः ।

## लूताप्रतिषेधम् ॥

जङ्गमविषप्रसङ्गेन लूतानां चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ॥

अथातोलूता प्रतिषेधं नामाध्यायं व्याख्यास्यामः इति यः ॥

विश्वामित्राय रुष्टस्य वसिष्ठस्य ललाटजाः ।
स्वेदलेशाः स्मृता लूता लूने ये पतिता स्तृणे ॥

तत्र प्रथमं लूतानां सम्भव उच्यते तत्र च पक्षत्रयम् । केचिदाचार्या आहुः कस्मिंश्चिदितिहासे । विश्वामित्राय क्रुद्धस्य वसिष्ठस्य ये ललाटजाः स्वेदलेशास्ते निकटवर्तिनि लूने छिन्ने तृणे पतितास्ते लूताः स्मृता इति ॥

खाण्डवे दह्यमानानामसुराणां शरीरतः ।
ये स्फुलिङ्गा विनिश्चेरुस्ते लूता इति केचन ॥

अन्ये पुनराहुः । खाण्डवदहने दह्यमानानामसुराणां शरीराद्ये अग्निस्फुलिङ्गा विनिश्चेरुस्ते सम्प्रति लूता वर्तन्त इति ॥

अन्ये वदन्ति भुक्तस्य दुष्टस्यान्नस्य मूर्च्छनात् ।
सम्भवन्ति विषस्फोटा ये लूताः—

अन्ये तु वदन्ति । भुक्तस्य दुष्टस्यान्नस्य मूर्छनान्मिश्रीभावात् को द्रवविषवद्ये विषस्फोटा उत्पद्यन्ते ते लूता इति ॥

कीटलक्षणम् ।
यथास्वं धारयन्तस्ते लूताः कीटाश्च संज्ञिताः ॥

ते चाविचारितपूर्वजन्मभेदा यथास्वं वायव्यादिभेदेन कीटलक्षणं धारयन्तः कीटा इत्युच्यन्ते ॥

तत्र घोरतमा लूता भिद्यन्ते ता अपि त्रिधा ।
तीक्ष्णमध्यावरत्वेन घ्नन्तिचाश्वचिकित्सिताः ।
सप्ताहेन दशाहेन पक्षेण च परं क्रमात् ॥

पूर्वेभ्यश्च कीटेभ्यो घोरतमा लूताः सदृशत्वेपि । ता अपि लूतास्तीक्ष्णादिभेदेन त्रिधा भवन्ति । ताश्चाचिकित्सिता आशु घ्न-

न्ति । तीक्ष्णाः सप्ताहेन घ्नन्ति मध्या दशाहेन अवराः पक्षेणेति क्रमार्थः । [परशब्देन सप्ताहादिमर्यादादिनादूर्ध्वं न जीवतीत्यर्थः ॥]

**कपिलाग्निमुखी, पीता, पद्मा, मूत्रा, सिताऽसिता आग्नेय्यः स्वेदजाः सप्त लूताः पित्तविकारदाः॥**

कपिलादयः स्वेदजाः सप्त लूता आग्नेय्यो भवन्ति । ताश्च पित्तविकारदाः ॥

**पाण्डुरा, रक्तपादिका, भृङ्गा, पिङ्गा, त्रिमण्डला। पूतिर्वीराऽण्डजाः सप्त सौम्याः श्लेष्मविकारदाः**

अण्डजाः पाण्डुरादयः सप्त लूताः सौम्या भवन्ति । ताश्च श्लेष्मविकारदाः ॥

**कुमुदाऽलविषा रक्ता श्चित्रा सन्तानि मेचका। कसनाचोद्भिदाः सप्त वायव्या वायुरोगदाः ॥**

उद्भिदाः कुमुदादयः सप्त लूता वायव्या भवन्ति ताश्च वायुरोगदाः ॥

**काकाण्येणपदीलाजा वैदेही जालिनी तथा। माला गुणा सुवर्णा च मिश्राःसप्तोपपादिकाः॥ व्याप्नुवन्त्याशुगात्राणिज्वलत्पावकसन्निभाः सन्निपातकृतोऽसाध्याः साध्याः कृच्छ्रेणचे- [तराः ॥**

काकाण्ड्यादयः सप्त लूता मिश्राः सङ्कीर्णा भवन्ति । ताश्चोपपादिका उच्यन्ते । ज्वलदग्निवदाशु गात्राणि व्याप्नुवन्ति सन्निपातं च कुर्वन्त्यसाध्याश्च । इतराः पित्तविकारदादयः कृच्छ्रसाध्याः ॥

**ता दशन्ति सिते पक्षेऽसिते सन्ध्यौ सदैव च ॥**

ताश्च लूताः सितपक्षादिषु क्रमेण दशन्ति । आग्नेय्यः शुक्लपक्षे । सौम्याः कृष्णपक्षे । वायव्याः सन्ध्यावभावस्याराकयोः । मिश्राः सदैव ॥

[लूतादंशस्य लक्षणं सामान्येनाह ॥]

**दंशः सामान्यतस्तासां दद्रुमण्डलसन्निभः । सितोऽसितोऽरुणःपीतःश्यावो वा मृदुरुन्नतः॥ मध्ये कृष्णोऽथवा श्यावः पर्यन्ते जालकावृतः। विसर्पवाञ्छोफयुतस्तप्यते बहुवेदनः ॥ ज्वराशुपाकविक्लेद कोथावदरणान्वितः । क्लेदेन यत्स्पृशत्यङ्गं तत्रापि कुरुते व्रणम् ॥**

कुरुते व्रणमित्येवमन्तं सामान्येन लूतादंशलक्षणम् । [तासामाग्नेय्यादिभेदेन चतुर्विधानां लूतानां सामान्येन दंशो दंशव्रणः दद्रुमण्डलसन्निभो दद्र्वाख्यकुष्ठमण्डलसदृशः तथा सिताद्यन्यतमवर्णः मृदुर्मृदुस्पर्शः उन्नतः औन्नत्ययुक्तः । दद्रुमण्डलसाम्येनैवौन्नत्ये सिद्धे पुनरप्यौन्नत्यकथनमाधिक्यसूचनार्थम् । मध्ये दंशव्रणमध्ये कृष्णः कृष्णवर्णः अथवा श्याववर्णः । पर्यन्ते दंशव्रणस्य परितः जालकावृतः जालकाकाराभिः सूक्ष्माभिः सिराभिरावृतः विसर्पाद्यन्वितश्च भवति । क्लेदेनेति क्लेदेन दंशव्रणोद्भूतेन पूयेन यदङ्गं स्पृशति तत्र तस्मिन्नङ्गेपि व्रणं कुरुते ॥]

[लूतानां विषोद्वमनसाधनान्याह ॥]

**श्वासदंष्ट्राशकृन्मूत्र शुक्रलाला नखार्तवैः । अष्टाभिरुद्वमन्त्येता विषं वक्त्राद्विशेषतः ॥**

एताश्च सर्वा लूताः श्वासादिभिरष्टभिः करणैर्विषमुद्वमन्ति । वक्त्रेण तु विशेषेणोद्वमन्ति ॥

श्वासेन दंशः सहसा शूयते ज्वरदाहवान् ।
दंष्ट्राकृतस्तूग्रतरो विवर्णः कठिनः स्थिरः ॥
गम्भीरशोफवांस्तोदवेदनादाहसंयुतः ।
दुर्गन्धी शकृता दाहकण्डूचिमिचिमान्वितः ॥
पच्यते चाशुपक्कश्च पाण्डुः पीलुफलोपमः ।
मूत्रेण रक्तपर्यन्तो मध्ये कृष्णो विशीर्यते ॥
आवर्तसदृशः शूनः पूतिः सर्पति दह्यते ।
शुक्रेन ग्रन्थिसंस्थानः कठिनस्तीव्रवेदनः ॥
अल्पशूलोऽल्परुक्कोठो लालया कण्डुरो मृदुः ।
नखेन चोषपिटकाकण्डूधूमायनान्वितः ।
किंशुकोदरवर्णस्तु रजसा चंचुमालवान् ॥

श्वासेनेत्यादिना करणविशेषेणाष्टानां दंशानां लक्षणं सुबोधम् । दाहान्तं श्वासेन दंशे । दाहसंयुत इत्येवमन्तं दंष्ट्राकृते । पीलुफलोपम इत्येवमन्तं शकृत्कृते । दह्यत इत्येवमन्तं मूत्रेण दंशे । तीव्रवेदन इत्येवमन्तं शुक्रेन । मृदुरित्येवमन्तं लालया । धूमायन इत्येवमन्तं नखदंशे । चञ्चुमालवानित्येवमन्तं रजसा आर्तवेन । किंशुकोदरं पलाशकुसुमाभ्यन्तरम् । चञ्चुरिव मालमुपरिभागोऽस्यास्तीति चञ्चुमालवान् ॥

[लूतानां कीटानां च दंशस्थानान्याह ।]

लूताना भेदंशन्त्यूर्ध्वमूर्ध्वं चाधश्च कीटकाः ।
तद्दूषितं च वस्त्रादि देहेपृक्तं विकारकृत् ॥

लूतेत्यादि । सुबोधम् । तद्दूषितं लूतादूषितं वस्त्रादि आदिशब्देन शयनासनादिकं गृह्यते । देहे पृक्तं सम्पृक्तं यथास्वं विकारकृत् भवति । [तद्दूषितं तया लूतया मलमूत्रशुक्रलालाप्रक्षेपेणाधिष्ठानादिना दूषितं देहे शरीरे पृक्तं विकारकृत विषविकारं करोति ॥]

दिनार्द्धे लक्ष्यते नैव दंशो लूताविषोद्भवः ॥

लूताविषोद्भवो दंशः दिनार्धे न लक्ष्यत एव । [लूतानां श्वासाद्यष्टविधविषोद्वमनसाधनसम्पर्कादुद्भूतो दंशो व्रणः दिनार्धे पञ्चदशनाडिकामात्रं न लक्ष्यते न दृश्यते । एवशब्देन न किञ्चिदपि लक्ष्यत इत्यर्थः ॥]

लूताविषस्योपेक्षया अनुदिवसं वर्धनप्रकारमाह ॥]

सूचीव्यधवदाभाति ततोऽसौ प्रथमेऽहनि ।
अव्यक्तवर्णः प्रचलः किञ्चित् कण्डूरुजान्वितः ॥

ततः प्रथमेऽहन्यसौ दंशः सूचीव्यधवत् पीडामावहति । सुबोधम् । [अव्यक्तवर्णोऽस्पष्टवर्णविशेषः । प्रचलः प्रकर्षेण चलः स्पृष्टे तोयपूर्णदृतिवच्चलतीत्यर्थः ॥]

द्वितीयेऽभ्युन्नतोऽन्तेषु पिटकैरिव चाचितः ।
व्यक्तवर्णो नतो मध्ये कण्डूमान् ग्रन्थिसन्निभः ॥

ग्रन्थिसन्निभ इत्येवमन्तं द्वितीये हनि । [द्वितीयेऽहनि दंशः अन्तेषु पर्यन्तभागेष्वभ्युन्नतः पिटकैराचित इव च पिटकाचितप्रतीतियुक्तश्च व्यक्तवर्णः स्पष्टपीतरक्ताद्यन्यतमवर्णः

मध्ये नतो निम्नः कण्डूयुक्तो ग्रन्थिसदृशश्च भवति ॥]

तृतीये सज्वरो रोमहर्षकृद्रक्तमण्डलः ।
शरावरूपस्तोदाढ्यो रोमकूपेषु सास्रवः ॥

सास्रव इत्येवमन्तं तृतीयेऽहनि । [तृतीयेऽहनि दंशो ज्वरान्वितो रोमहर्षकारी रक्तवर्णमण्डलः शरावाकारोऽधिकव्यथो रोमकूपेषु रक्तस्राववांश्च भवति ॥]

महांश्चतुर्थे श्वयथुस्तापश्वासभ्रमप्रदः ॥

भ्रमप्रद इत्येवमन्तं चतुर्थेऽहनि । [चतुर्थेऽहनि दंशे तापादिकरो महान् शोफो भवति । तापः प्रादेशिकदाहः ॥]

विकारान् कुरुते तांस्तान् पञ्चमे विषकोपजान् ।
षष्ठे व्याप्नोति मर्माणि सप्तमे हन्ति जीवितम् ॥

पञ्चमादिषु सुबोधम् । [पञ्चमेऽहनि दंशस्थितं विषं विषकोपजान् दाहकण्डूपर्वभेदहृन्मोहादिकान् वक्ष्यमाणांस्तांस्तान् विकारान् कुरुते । षष्ठेऽहनि दंशस्थितं विषं तस्मात् सर्वमर्माणि व्याप्नोति । सप्तमेऽह्न्याखिलमर्मस्थितं जीवितं नाशयति ॥]

विषमित्यतितीक्ष्णानामितरे विभजेदतः ॥

अतितीक्ष्णानां लूतानामेवैतद्विषलक्षणम् । इतरे मध्यमल्पं चातो लक्षणाद्यथातथमेव लाघवेन बुध्या विभजेत् । [अतितीक्ष्णानां पित्तात्मिकानां लूतानां विषमेवं भवति । इतरे मध्यं श्लैष्मिकमल्पं वातिकं च अतस्तीक्ष्णविषाद्विभजेत् दिनबाहुल्यानुसारेण विभज्यैवं कल्पयेत् ॥]

विषं शाम्यति सर्वासामेकविंशतिरात्रतः ॥

विषमित्यादि सुबोधम् । [सुचिकित्सितस्य विषमोचने कालस्य परमावधिं दर्शयति । विषमिति । सर्वासां लूतानां विषमेकविंशति दिनैः शाम्यति ॥]

दंशः पित्तात्मको दाह तृट् स्फोट ज्वरदाहवान् ।
सशोफः कठिनः पाण्डुः कण्डूमान् श्लैष्मिकोऽल्परुक् ।
वातिकः परुषः श्यावः पर्वभेदादिरुक्करः ॥

ज्वरमोहवानित्येवमन्तं पित्तात्मकलूतादंशविषलक्षम् । अल्परुगित्येवमन्तं कफात्मके । पर्वभेदादिरुक्कर इत्येवमन्तं वातात्मके ॥

सर्पज्ञानोदितैर्लिङ्गैर्दोषोद्रेकं च लक्षयेत् ॥

न केवलमेतैर्लिङ्गैर्लूताविषे विषोद्रेकं लक्षयेद्यावत् सर्पज्ञानोक्तैरपि दोषोद्रेकलक्षणैः ॥

त्रिदोषाः प्रायशः सर्वा लूताः पित्तकफाधिकाः ।

सर्वा अपि लूताः प्रायेण त्रिदोषाः पित्तकफाधिकाश्च ॥

प्राणान्तिकीषु हृन्मोहश्वासहिध्माशिरोग्रहाः ।
श्वेतासिताः पीतरक्ताः पिटकाः श्वयथूद्भवः ॥
वेपथुर्वमथुर्दाहस्तृडान्ध्यं वक्रनासता ।
श्यावोष्ठवक्त्रदन्तत्वं पृष्ठग्रीवावभञ्जनम् ।
पक्वजम्बूसवर्णं च दंशात् स्रवति शोणितम् ॥

प्राणान्तिकीषु मारणफलासु लूतासु हृन्मोहादिकं पक्वजम्बूसवर्णशोणितस्रावान्तं लक्षणम । [प्राणान्तिकीषु सन्निपातवृद्धिकरकाकाण्ड्यादिसप्तलूतासु ताभिर्दष्टस्येत्यर्थः । श्वेताद्यन्यतमवर्णाः पिटकाः । वक्रनासता नासाया वक्रत्वम् । दंशाद्दंशव्रणात् ॥]

[लूताविषस्य लक्षणमुक्त्वा चिकित्सामाह ॥]

**अथाशु लूतादष्टस्य शस्त्रेणादंशमुद्धरेत् ।**
**दहेत जांबवोष्ठाद्यैर्न्नतु पित्तोत्तरं दहेत् ॥**

अथेत्यादिना लूतानां चिकित्सा । दंश एवादंशस्तम् । जाम्बवोष्ठं नाम यन्त्रं सूत्रोक्तम् । पित्तोत्तरं तु दंशं न दहेत् । [अथ पैत्तिकादिलूतादंशपरिज्ञानादनन्तरं लूतादष्टस्य आदंशं समूलं दंशस्थानं दंशव्रणावधीत्यर्थः। आशु शस्त्रेण मण्डलाग्रादिना उद्धृत्य हरेत् । जाम्बवोष्ठाद्यैर्यन्त्रैर्दंशं दहेच्च ॥]

छेदनदहनायोग्यं दर्शयति ।

**कर्कशं भिन्नरोमाणं मर्मसन्ध्यादिसंश्रितम् ।**
**प्रसृतं सर्वतो दंशं न छिन्दीत दहेत वा ॥**

कर्कशादिकं दंशं न छिन्दीत नापि दहेत । [कर्कशं कठिनस्पर्शम् । भिन्नरोमाणं च्युतरोमाणम । मर्मसन्ध्याद्याश्रितं आदिशब्देन क्षारविधावुक्ताः सिरास्नाय्वादयो गृह्यन्ते । सर्वतः प्रसृतं देहे सर्वतो व्याप्तं च दंशं न छिन्द्यान्न दहेत च ॥

[दाहानन्तरकरणीयमाह ॥ ]

**लेपयेद्दग्धमगदैर्मधुसैन्धवसंयुतैः ।**
**सुशीतैः सेचयेच्चानुकषायैः क्षीरिवृक्षजैः ॥**

दग्धं च दंशं मधुसैन्धवयुक्तैरगदैर्लेपयेत् । तथानु पश्चात् क्षीरिवृक्षजैः सुशीतैः कषायैः सेचयेच्च ॥

**सर्वतोपहरेद्रक्तं शृङ्गाद्यैः सिरयापि वा ।**
**स्रुते रक्ते परीषेको घृतक्षीरादिभिर्हितः ॥**

सर्वतः इति सर्वाङ्गेभ्यः । व्याख्यासमम । [शृङ्गाद्यैः शृङ्गजलूकालाबुभिः सिरयापि वा सिरावेधेन वा शरीरात् सर्वतो रक्तमपहरेत् । रक्ते स्रुते सति घृतादिभिः परिषेको हितः ॥ ]

**प्रपौण्डरीकह्रीबेरशारिबोशीरजीवकाः ।**
**लोध्रचन्दनजीवन्तीमञ्जिष्ठासर्जवञ्चुलाः ॥**
**मृणालबिसशैवालकुमुदोत्पलगैरिकाः ।**
**न्यग्रोधोदुम्बराश्वत्थनिचुलप्लक्षवेतसाः ॥**
**समङ्गापाटलीशुन्द्राकाकोलीशतपर्विकाः ।**
**शिरीषधातकीमूर्वाविदारीपद्मकिंशुकाः ॥**
**शृङ्गाटकंकोशवतीवायसीसोमराजयः ।**
**मधुकांशुमतीमूर्वा यथालाभं समाहृताः ॥**
**शस्तः पर्युषितो लेपः सघृतः पैत्तिके व्रणे ।**

प्रपौण्डरीकादिकं श्लोकचतुष्टयोक्तं यथालाभं सर्वं संगृह्य सघृतः सन्नहोरात्रं पर्युषितो लेपः । पैत्तिके लूताव्रणे प्रशस्तः । कोशवती कोशातकी । वायसी काकोदुम्बरिका ॥

**श्यामाद्वयनिशामुस्तानखरास्ना महासहाः ।**
**वाशापत्तङ्गसुवहानाकुलीगिरिकर्णिकाः**
**सर्पगन्धायवफलानिर्गुण्ड्यश्मन्तकास्थिराः ।**
**शुकाख्या महिषाक्रान्ता कुष्ठेन्द्रयवकुङ्कुमम ॥**

करवीरागरुनतं सुगन्धा सिन्दुवारकम् ।
आस्फोतगुन्द्रा च हिता प्रलेपः श्लैष्मिके विषे ॥

श्यामाद्वयादिभिस्त्रिभिः श्लोकैः श्लैष्मिके लूताविषे लेपः । श्यामाद्वयं पिप्पली प्रियङ्गुश्च । सुवहोत्तमकारिणी । निर्गुण्डी प्रसिद्धा । अश्मन्तको मालुकपर्णः । शुकाख्या शुकनासा । महिषाक्रान्ता आस्फोतोर्कः । गुन्द्रा तृणजातिः ॥

बिम्बीविदुलबन्धूककोविदारपलाशकाः ।
सुवहारिष्टकब्राह्मीगुळूचीविश्वसैर्यकाः ॥
सिद्धार्थका देवदारु विळङ्गानीन्द्रवारुणी ।
शतावरीलाङ्गलिकीराजवृक्षपुनर्नवाः ॥
जीवन्ती वायसी भार्ङ्गी कतकेन्द्रयवार्जुनाः ।
मिसिव्याघ्रपदीसिंहपुच्छीमण्डलपर्णिकाः ॥
श्वदंष्ट्रा कोलबृहती रेवती श्वेतपुष्पिका ।
प्रपुन्नाटः कुरवकः प्रलेपो वातिके विषे ॥

बिम्ब्यादिभिश्चतुर्भिः श्लोकैर्वातिके लूताविषे लेपः । सुवहोत्तमकारिणी । अरिष्टकः कृष्णफलः । सैर्यकः सहचरः । इन्द्रवारुणी गवाक्षी । राजवृक्षः आरग्वधः । वायसी काकोदुम्बरिका । कतकः फलविशेषः । मिसिः शतपुष्पा । व्याघ्रपदी शार्दूलपदिका । सिंहपुच्छी गुहा । मण्डलपर्णिका शिंशपा । श्वदंष्ट्रा गोक्षुरकः । कोलो बदरः । श्वेतपुष्पिका रेवती । श्वेतपुष्पी गवाक्षी ॥

सर्वत्रैव च शस्यन्ते बोधिश्लेष्मातकाक्षकाः ॥

बोध्यादिकं सर्वत्र सर्वस्मिन् लूताविषे लेपे शस्यते । बोधिः पिप्पलः । श्लेष्मातकः शेलुः । अक्षको विभीतकः ॥

उदीर्णदोषान् बलिनो विषे महति वामयेत् ।
काकाण्डकीकोशवती लोध्रेन्द्र यवसैन्धवैः ॥
पटोलपत्रमरिचकरघाटप्रियंङ्गुभिः ।
कृष्णाशुकनसानीपनिम्बसप्ताह्वयष्टिभिः ॥

महतिविषे उदीर्णदोषादियुक्तान् काकाण्डक्यादिभिर्वामयेत् । काकाण्डकी काकमाची । कोशवती कोशातकी । करघाटो मदनः ॥

विरेचयेच्च त्रिफलात्रिवृन्नीलीकटुसैन्धवैः ।
सदन्ती पूगमृद्वीका विळङ्गैरथवा पचेत् ॥
एभिः पलार्धिकैः प्रस्थं समब्राह्मीरसं घृतात् ।

त्रिफलादिभिरुदीर्णदोषादिकमेव विरेचयेत् । अथवैभिस्त्रिफलादिभिः पलार्द्धिकैरर्द्धपलप्रमाणैर्घृतात् प्रस्थं समब्राह्मीरसं पचेत् । शेषं सुबोधम् ॥

पञ्चमूलशृतं क्षीरं तोयं वा शोधनौषधैः ।
यथास्वं कल्कितैर्युक्तं पृथग्दद्याद्विरेचनम् ॥

शोधनौषधानि सूत्रोक्तानि विरेचनद्रव्याणि तेषां पृथक् कल्कैर्यथास्वं दोषाद्यपेक्षया युक्तं पञ्चमूलशृतं क्षीरं तोयं वा शोधनार्थं दद्यात् ।

पिप्पलीपिप्पलीमूलशुण्ठीन्द्रयवसैन्धवैः ।
पाठाजमोदायष्ट्याह्वमुस्तासर्षपदारुभिः ॥
लघुना पञ्चमूलेन सरळेन च साधिता ।
पेया संसर्जने योज्या सघृता विषनाशिनी ॥

शुद्धस्य च संसर्जने पेयादिक्रमे पिप्पल्यादिभिः सिद्धा पेया घृतसहिता विषनाशिनी योज्या ॥

आध्मानहिध्माश्वासेषु पृष्ठग्रीवावभञ्जने ।
सङ्कोचस्तम्भकम्पेषु शूलेष्वर्धावभेदके ॥
वातरोगेषु चान्येषु पर्वभेदार्दितादिषु ।
एरण्डविल्वसरळचिरिविल्वार्कपाटलीः ॥
शिग्रुपाठा कुशवृषं विदुलं च जले पचेत् ।
कनीयः पञ्चमूलं च तस्मिन् मण्डं पचेत् घृतात् ॥
द्विगुणे तुल्यगोक्षीरे पिष्टैर्यष्टी निशानतैः ।
सुराह्वेल्लसरळशताह्वालोध्रगैरिकैः ॥
पयस्याकुष्ठगाङ्गेयीकृष्णामदनसैन्धवैः ।
वस्तौ प्रत्यागतेऽश्नीयात् पञ्चमूलान्वितै रसैः ॥

आध्मानादिष्वन्येषु पर्वभेदादिषु वातरोगेषु च एरण्डादिकाथे घृतान्मण्डं पचेत् । घृतमण्डाद् द्विगुण एरण्डादिकाथस्तावन्मात्रमेव गोक्षीरम् । यष्ट्याह्वादिकं गर्भप् । गाङ्गेयी मुस्ता । मदनः करघाटः । इदं घृतं वस्तौ योज्यम् । तस्मिन् गुदात् प्रत्यागते पञ्चमूलान्वितैर्मांसरसैरश्नीयात् ॥

नावनं गौरवे शोफे लालास्रावे हनुग्रहे ।
गिरिकर्णी फलरसो बन्धूकं किणिही सिता ॥
षड्ग्रन्थालशुनव्योषबृहतीवेल्लसैन्धवम् ।
अपामार्गफलं भार्ङ्गी नाकुली सर्पगन्धिका ॥

गौरवादिके गिरिकर्ण्यादिकं सर्पगन्धिकान्तं नावनम् । (सर्पगन्धिका नाकुली सर्पसुगन्धा इति जर्जटः ॥)

श्यामा यवफला बीजं फणिर्जकशिरीषयोः ।
वार्ताकरसपिष्टानि नस्यं विषहरं परम् ॥

श्यामादिकं वार्ताकरसपिष्टं नस्यं परं विषहरम् । यवफला दुग्धिका ॥

विरिक्तशिरसश्चास्य सर्पिर्मण्डोनु नावनम् ॥

अनेन च तीक्ष्णनस्येन विरिक्ते शिरसि सर्पिर्मण्डोनु पश्चान्नावनं हितम् ॥

नेत्रोपरोधश्वयथुकण्डूनिद्रासमागमे ।
वचामनोह्वात्रिकटुत्रिफलालोध्रगैरिकाः ॥
शङ्खो नीलोत्पलं ताम्रं मुक्ता हेम प्रवाळकम् ।
जीवन्ती लशुनं कुष्ठं कतकं मार्कवं नतम् ॥
प्रपौण्डरीकं मधुकं करञ्जफलसैन्धवम् ।
निशे फणिर्जकं तुत्थं स्रोतोञ्जनरसाञ्जने ॥
मेषशृंग्याश्च कुसुमं पिष्टं गोवारिणाञ्जनम् ।

नेत्रोपरोधादिके वचादिभिस्त्रिभिः श्लोकैर्गोमूत्रपिष्टैरञ्जनम् ॥

सुरसप्रसवव्योषविल्वमूलसुराह्वयम् ।
हरिद्रा छागलीमूत्रं लूताकीटघ्नमञ्जनम् ॥

सुरसप्रसवादिकं छागलीमूत्रपिष्टं लूताकीटविषघ्नमञ्जनम् । सुरसप्रसवं सुरसमञ्जरी । सुराह्वयं देवदारु ॥

शिरीषपद्मकोशीरपाटलीसिन्दुवारकम् ।
क्षीरिशुङ्गनतोदीच्यशारिबाकुष्ठचन्दनम् ॥
श्लेष्मस्वरसपिष्टोयमगदो नावनेञ्जने ।
पाने प्रलेपे सेके च लूतासु परमं हितः ॥

शिरीषादिकः श्लेष्मातकस्वरसपिष्टोयमगदो नावनादिके युक्तो लूतासु परमं हितः ।

सिन्दुवारको निर्गुण्डी । शेलुः श्लेष्मातकः ॥

**पयस्या मधुमृद्वीकाश्वदंष्ट्राक्षीरमोरटाः ।**
**गोजीविदारीयष्ट्याह्वमधुकानि च तद्गुणः ॥**

पयस्यादिरगदस्तद्गुणः पूर्वगुणः । क्षीरमोरटा मधुस्रवा । गोजी गोजिह्वा ॥

**तथा शिरीषकुसुमं चन्द्रलेखोद्भवं फलम् ।**
**सुराळा कटभी जातिः श्वेता च गिरिकर्णिका ॥**

शिरीषकुसुमादिकं श्वेतगिरिकर्णिकान्तं तथेति गुणैः पूर्ववत् । सुराळा अतिविषा ॥

**तद्वच्च युञ्ज्यात्तगरकुष्ठनागबलाबलाः ॥**

तद्वदेव तगरादिकं बलान्तम् ॥

**हरिद्रायुगळं नागदन्ती लोध्रं च शाबरम् ।**
**शिरीषपुष्पं तगरं सहदेवा शतावरी ॥**
**पुनर्नवा नागबला सर्पगन्धा कुटन्नटम् ।**
**गवादनी दन्तशठ सोमवल्केन्दुराजयः ।**
**विषेषु सर्वेष्वगदः सक्षौद्रः सर्वकर्मकृत् ॥**

हरिद्रायुगळादिरगदः सक्षौद्रः सर्वविषेषु सर्वाभीष्टकर्मकृत् । कुटन्नटं परिपेलवम् । सोमवल्कः सोमवृक्षवल्कः । (सोमवृक्षः कट्फलः ॥)

**सर्पाक्षी चन्दनं वक्रं मृगाक्षी गन्धनाकुली ।**
**एला महासुगन्धा च बस्तमूत्रेण कल्कितः ॥**
**लेपे पाने च लूतासु नानेन सदृशोगदः ।**

सर्पाक्ष्यादिर्बस्तमूत्रकल्कितो लूतासु लेपे पाने च योज्यः । अनेन समो लूताविषस्यागदो न भवति । (सर्पाक्षी रक्तपुष्पा पूर्वदेशे प्रसिद्धा । वक्रं तगरम् । गन्धनाकुली सुगन्धमूला रास्ना ।) इति प्रबन्धसंग्रहे ॥

**कटभीमूलतगरसमङ्गादेवदारुभिः ।**
**बृहतीद्वयगाङ्गेयीरोचनाचन्दनैर्घृतम् ।**
**सिद्धं चतुर्गुणक्षीरं पानाभ्यञ्जनयोर्हितम् ॥**
**लूताकणभकीटानां विषे परमदारुणे ।**

कटभीमूलादिभिश्चतुर्गुणक्षीरं सिद्धं घृतं पानाभ्यञ्जनयोः परमदारुणे लूतादिविषे हितम् । समङ्गा मञ्जिष्ठा । गाङ्गेयी मुस्ता ॥

**निवृत्ते दाहशोफादौ कर्णिकां पातयेद्व्रणात् ॥**

एवं दाहशोफादौ निवृत्ते सति व्रणात् पूर्वोक्तां कर्णिकां पातयेत् । (आदिग्रहणेन रुग्रागादिपरिग्रहः । निवृत्ते उपशान्ते । व्रणाद्व्रणमुखात् कर्णिकां दंशस्थाने कर्णिकावदुत्पन्नं मांसाङ्कुरं पातयेदपनयेत् ॥)

**कुसुम्भपुष्पं गोदन्तः स्वर्णक्षीरी कपोतविट् ।**
**त्रिवृता सैन्धवं दन्ती कर्णिकापातनं तथा ॥**
**हरिद्रा गुल्गुलुः किण्वं वंशलेखः कपोतविट् ।**
**तद्वच्च सैन्धवं कुष्ठं दन्तीकटुकदौग्धिकम् ॥**
**राजकोशातकीमूलं किण्वो वा मथितोद्भवः ।**

कुसुम्भपुष्पादि दन्तीपर्यन्तं कर्णिकायाः पातनम् । हरिद्रादिकपोतविडन्तं तथेति कर्णिकापातनम् । वंशलेखः वंशतनुवल्कः । सैन्धवादिराजकोशातकीमूलान्तं च तद्वत् पूर्ववत् । (कटुकदौग्धिकं ചെച്ചര. राजकोशातकी വലിയ പുട്ടൽപീരം) अथवा मथितोद्भवः किण्वस्तक्रमलः ॥

**कर्णिकापातसमये बृंहयेत विषापहैः ॥**

यदा तु कर्णिका पात्यते तदा ये विषापहा भवन्ति तैर्यथायथं च बृंहयेत् । [अनन्तरोक्तैरौषधैः कर्णिकापातनकाले विषहरद्रव्यैर्लूतादष्टं नरं पोषयेत् ॥]

**ऋतुकाले च लूतानां यावन्तः शुक्लबिन्दवः ।**
**देहे पतन्ति तावन्त्यो जायन्ते कर्णिकाः समम् ॥**

लूतानां च यदा गर्भग्रहणयोग ऋतुकालो भवति तदा यावन्तः शुक्लबिन्दवः पुंसो देहेऽङ्गेषु पतन्ति तावत्य एव कर्णिकाः सममेककालं जायन्ते ॥

**गोदन्तदन्ती त्रिवृता हरिद्रे सैन्धवं तिलाः ।**
**मधुकं निम्बपत्राणि घृतं च व्रणशोधनम् ॥**
**कान्ताविळङ्गखदिरनिम्बकाम्पिल्यकाम्बुदैः ।**
**सर्जैलाधातकीलोहैः सिद्धं सर्पिर्व्रणापहम् ॥**

गोदन्तादिकं व्रणानां शोधनम् । कान्तादिभिः सिद्धं सर्पिर्व्रणापहम् ॥

**शिरीषकटभीशेलुक्षीरिवृक्षार्जुनत्वचः ।**
**कल्कचूर्णपरीषेकैः कीटलूताव्रणापहाः ॥**

शिरीषादिकं कल्कादिभिः प्रयुक्तं कीटानां लूतानां च व्रणापहम् ॥

**शताह्वालोध्रकासीसदार्वीजम्ब्वस्थिरोचनाः ।**
**हरीतकी पूगफलं चूर्णोयं व्रणरोपणः ॥**

शताह्वादीनां चूर्णो व्रणरोपणः ॥

**लाक्षा रजन्यौ मञ्जिष्ठा हरितालं मनश्शिला ।**
**सर्पिर्मधु च लेपोयं त्वग्विशुद्धिकरः परम् ॥**

रूढे च लाक्षादिभिर्लेपः परं त्वचो विशुद्धत्वं करोति ॥

**रोमसञ्जननं कुर्याद्यदुक्तं व्रणसाधने ।**

व्रणसाधने व्रणप्रतिषेधे यत् किञ्चिद्रोमसञ्जननमुक्तं तदत्रापि कुर्यात् ॥

**स्नेहकार्यमशेषं च सर्पिषैव समाचरेत् ।**
**विषस्य वृद्धये तैलमग्नेरिव तृणोलपम् ॥**

इत्युत्तरे चतुश्चत्वारिंशोध्यायः ॥

यत् किञ्चिदभ्यञ्जननावनादिस्नेहकार्यं तत् सर्पिषैव समाचरेत् नान्येन तैलादिना स्नेहेन । तैलं यत्नतः परिहरेत् । यतस्तैलं तथा वृद्धये भवति यथा तृणोलपमग्नेरिति । [तैलं तीक्ष्णादिगुणसाम्याद्विषस्य वृद्धये भवति तृणोलपं शुष्कतृणमग्नेर्वृद्धये यथा ॥]

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे चतुश्चत्वारिंशोध्यायः ॥

## पञ्चचत्वारिंशोऽध्यायः ।

### प्रत्येकलूताप्रतिषेधम् ।

सामान्येन लूतानां चिकित्साविधानमुक्त्वा यथाप्रधानं प्रत्येकं चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ॥

**अथातः प्रत्येकलूताप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति यः ।**

**आदंशे पिटका ताम्रा भवेत् कपिलया स्थिरा ।**
**लसीका रोमकूपेषु दाहोष्णौ मूर्ध्नि गौरवम् ॥**

पानस्याञ्जनालेपसेकेष्वत्र प्रयोजयेत् ।
निशापद्मककुष्ठैलाकरञ्जककुभत्वचः ॥
स्थिरार्कपर्ण्यपामार्गब्राह्मीज्वलननाकुलीः ।
अथवा कुष्ठपत्तङ्गनखजोङ्गककुङ्कुमम् ॥

कपिलाख्यया लूतया आदंशे ताम्रा स्थिरा च पिटका भवेन्मूर्धगौरवान्तं च । अत्र निशादिकं नाकुल्यन्तं पानादिषु योजयेदथवा कुष्ठादिकं कुङ्कुमान्तम् । ककुभोऽर्जुनः । अर्कपर्ण्यळर्कः ॥

अग्निमुख्यातिरुक्स्फोटः सम्भवत्यग्निदग्धवत् ।
अग्निज्वालासमानेन प्रस्विद्यति विषोष्मणा ॥
तृड्दाहकम्पमूर्छावान् पित्तास्रमतिसार्यते ।
योजयेत् पूर्ववत्तत्र प्रत्याख्याय त्वरान्वितः ॥
कुष्ठलामज्जकोशीरमधूकं मधुकं मधु ।
लाभतः शीतवीर्याणि तालीसं गोपकन्यकाम् ॥

अग्निमुख्याख्यया लूतया आदंशे अतिरुक्स्फोटः सम्भवति यथाग्निदग्धे । अग्निज्वालासदृशेन च विषोष्मणा पुरुषः प्रस्विद्यति । तृडादिमांश्च रक्तपित्तमतिसार्यते । तत्राग्निमुख्यां प्रत्याख्यानं कृत्वा त्वरया पूर्ववत् कपिलावत् पानादिकं योजयेत् । कुष्ठादिकं च योजयेत् । शीतवीर्याणि चन्दनोशीरादीनि च लाभतो यथालाभम् । तालीसादिकं च ॥

पीतया पीतविण्मूत्र दंशक्लेदाक्षिदर्शनः ।
मूर्च्छाच्छर्दि शिरोदुःखज्वरारोचकशूलवात् ॥
तत्रेष्टाः कटभोशीरमुञ्जावञ्जुळपद्मकाः ।
वंशकाशार्जुनकुशाः शिरीषकिणिहीत्वचः ॥

अथवावन्यबाल्हीककुष्ठकेसरजोङ्गकम् ।

पीताख्यया लूतया आदंशे सति पुरुषः पीतवर्णैर्विडादिभिर्मूर्छादिभिश्च युक्तो भवति । तत्र कटभादिकं पानादिषु योजयेत् । अथवा वन्यादिकम् । कटभा कटभी । जोङ्गकं कृष्णागरु ॥

पद्माभः पद्मया स्फोटो भिन्नोऽभिन्नः पुनर्भवेत् ।
क्लिद्यत्याशु स्रवत्युष्णं क्लेदं स्पर्शेऽतिरुक्करः ।
तत्र पद्मोत्पलाम्नाळो हिमवेतसवञ्जुळाः ।
समृणाळाः सकुमुदाः सक्षौद्रघृतशर्कराः ॥

पद्माख्यया आदंशे पद्माभः स्फोटो भवति । भिन्नोपि सन् पुनरभिन्नो भवति । स च स्फोट आशु क्लिद्यत्युष्णं च क्लेदं स्रवति । स्पर्शे चातिरुक्करो भवति । तत्र पद्मोत्पलादिकं शर्करान्तं पानादिषु ॥

पूतिर्मूत्राविषादंशो विसर्पी कृष्णशोणितः ।
श्वासकासज्वरच्छर्दिमूर्छादाहभ्रमान्वितः ॥
मनश्शिलालमधुकमधूकोत्पलचन्दनम् ।
कुष्ठलामज्जकोशीरपद्मकं तत्र भेषजम् ॥

मूत्रविषायाः पूतिर्दंशो भवति विसर्पाद्यन्वितश्च । तत्र मनश्शिलादिकं पानादिषु भेषजम् ॥

आदंशे श्वेतया श्वेता पिटका भृशकण्डुला ।
दाहमूर्छाज्वररुजाविसर्पक्लेदकारिणी ॥
तत्रेष्टाः शीतरास्नैलाहरेणुनळवञ्जुळाः ।
कुष्ठमांसीनतोशीरकान्ताध्यामकपद्मकाः ॥

श्वेताख्यया आदंशे श्वेता कण्डूला दाहादिकारिणी च पिटका भवति । तत्र शीतादिकं पानादिष्विष्टम् । शीतं चन्दनम् ॥

आदंशः कृष्णया कृष्णो विड्गन्धिः क्लेदशोफवान् ।
उत्थाप्यते कृष्णमसृग्दुष्टं तत्र च भेषजम् ॥
महासुगन्धा सर्पाक्षी वक्रैला गन्धनाकुली ।

कृष्णाख्यया आदंशः कृष्णवर्णः पुरीषगन्धिः क्लेदशोफयुक्तश्च भवति । दुष्टं कृष्णं चासृगुत्थाप्यते विरेच्यते । तत्र महासुगन्धादिकं भेषजम् । महासुगन्धा रास्ना । वक्रं नगरम् । गन्धनाकुली (लि) सूक्ष्मपत्रा पराज्ञेया सर्पाक्षी गन्धनाकुली ॥

शूनः पाण्डुरयादंशः शोफो वक्त्रस्य गौरवम् ।
ज्वरो विघूर्णनं जृम्भा शिरोरुक् तत्र भेषजम् ॥
मूलं वारुणपुष्पाया रोचना गोशकृद्रसः ।

पाण्डुरया दंशः शूनो भवति । वक्त्रशोफो गौरवादिकं च । तत्र वारुणपुष्पामूलादि भेषजम् । वारुणपुष्पा विशाला ॥

आपाण्डुपिटको दंशः शोफवान् रक्तपादया ।
अस्रस्रुत्तत्र नळदसेव्योदीच्यहिमं मधु ॥

रक्तपादाख्यया दंश आपाण्डुभिः पिटकाभिर्युक्तः शोफवांश्च भवति । अस्रस्रुच्च । तत्र नळदादिकं भेषजम् । नळदं मांसी । सेव्यमुशीरम् । उदीच्यं वाळकम् । हिमं चन्दनम् ॥

भृङ्गाभो भृङ्गया दंशः पिटकादाहरुक्करी ।
कोठैश्च चीयते गात्रं तत्र शस्तं भिषग्जितम् ॥
अङ्कोलसारः फलिनी गवां पित्तं मिसिर्गदः ।

भृङ्गाख्यया दंशो भृङ्गाभो भ्रमरवर्णः पिटका च दाहरुक्करी भवति । गात्रं च कोठैश्चीयते । तत्राङ्कोलसारादिकं भिषग्जितमौषधं शस्तम् । फलिनी प्रियंगुः । मिसिः शतपुष्पा । गदः कुष्ठम् । अङ्कोलवृक्षः प्रसिद्धस्तस्य सारः ॥

पिङ्गया वह्निदग्धाभो दंशः स्फोटो बहुस्रुतिः ।
तीव्रशोफज्वररुजाहृत्पीडादाहतृड्युतः ॥
तत्राऽगदः सिता गुन्द्रा मल्लिका मधुकोत्पलम् ।
जीवकः क्षीरिणां शुङ्गाद्रिहिमं नागकेसरम् ॥

पिङ्गाख्यया दंशोऽग्निदग्धाभो भवति । स्फोटश्च बहुस्रुतिस्तीव्रशोफादिभिर्युक्तो भवति । तत्र सितादिकमगदः ॥

त्रिमण्डलाया बहळो दंशः कृष्णं स्रवत्यसृक् ।
अरुचिर्नेत्रयोर्दाहः कलुषस्रुतिदष्टिता ॥
विविधैर्मण्डलैश्चास्य शरीरमुपचीयते ।
तत्रार्कमूलद्विनिशासुराळापृश्निपर्णिकाः ॥
दधित्थनाकुलीब्राह्मीज्योतिष्मत्यो हितो गदः ।

त्रिमण्डलाख्यया दंशो बहळो घनो भवति । कृष्णवर्णं च रक्तं क्षरति स्रवति । अरुच्यादिकं च भवति । अस्य चातुरस्य शरीरं विविधैर्नानाविधैर्मण्डलैरुपचीयते । तत्रार्कमूलादिकमगदः ॥

आदंशः पूतिगन्धाया विसर्पक्लेददाहवान् ।
अलजीसन्निभो रुग्वान् विबद्धपिटकाचितः ॥
भार्ङ्गीनिदिग्धिकानिम्बपाटलीसिन्दुवारकम् ।

दूर्वा हरिद्रे वाशा च पूतिगन्धाविषापहम् ॥

पूतिगन्धाख्याया आदंशो विसर्पादिमानलजीसदृशत्वादियुक्तश्च भवति । भाङ्ग्र्यादिकं तु पूतिगन्धाविषापहम् ॥

चित्रमण्डलवान् दंशः पिटकाजालकावृतः ।
वीराया मूर्धरुक् शीतज्वरान्नद्वेषसंयुतः ॥
हरिद्रे नळदं कुष्ठमेला सुरसमञ्जरी ।
तगरं च श्वपित्तेन पिष्टं वीराविषापहम् ॥

वीराख्याया दंशश्चित्रैर्मण्डलैर्युक्तो भवति । पिटकाजालकैरावृतो मूर्धरुगादिभिर्युक्तश्च । श्वपित्तेन पिष्टं हरिद्रा द्वयादिकं तु पानादिभिर्वीराविषापहं भवति ॥

दंशः कुमुदया दाहस्फोटस्फुरणतोदवान् ।
पिच्छिलक्लेदविस्रावी सश्वासस्तगळग्रहः ॥
प्रत्याख्यायात्र कुर्वीत सामान्योक्तं क्रियाक्रमम्

कुमुदाख्यया दंशो दाहादिमान् पिच्छिल क्लेदस्रावी श्वासगळग्रहाभ्यां युक्तश्च भवति । श्वासस्तमकश्वासः । अत्र प्रत्याख्यानं कृत्वा सामान्योक्तं पूर्वाध्यायविहितं क्रियाक्रमं चिकित्सितं कुर्यात् ।

भवन्त्यलविषादंशे पीतलोहितमण्डलाः ।
पिटकाः सर्षपप्रख्यास्तालुशोषो रुजा ज्वरः ॥
छर्दिर्दाहः शिरःकम्पस्तत्र सेव्यः समाक्षिकः ।
सकासीसकह्रीबेरः सपिप्पलिवटाङ्कुरः ॥

अलविषाया दंशे पीतादिगुणाः सर्षपप्रमाणाः पिटका भवन्ति । तालुशोषादिकं च । तत्र सेव्यादिकं वटाङ्कुरान्तं भेषजम् । सेव्यमुशीरम् । वटाङ्कुरो वटप्ररोहः ॥

रक्तान्तो रक्तया दंशः सपाण्डुपिटकाज्वरः ।
श्वेतोतिसारः श्वसनं दाहः क्लेदः सशोणितः ॥
शस्तं शेलत्वर्जुनाम्रातात्त्वङ्मूलं सिन्दुवारतः ।

रक्ताख्यया लूतया दंशो रक्तान्तो भवति । पाण्डुवर्णाभिः पिटकाभिर्ज्वरेण च युक्तः । अतिसारश्च श्वेतो भवति । श्वसनादिकं च । अत्र श्लेष्मातकत्वगादिकं सिन्दुवारमूलान्तं शस्तम् । सिन्दुवारः प्रसिद्धः ॥

आदंशे चित्रया रक्ता पिटका विसृता स्थिरा ।
पर्वभेदशिरस्तापज्वरशोफा विसर्पिणी ॥
भिन्ना कृष्णत्वमभ्येति पीतास्रावा महाव्रणा
तत्रेष्टाः कुष्ठनळदशिरिषिनळरेणुकाः ॥

चित्राख्यया आदंशे रक्तादिगुणा पिटका भवति । सा च स्वयं भिन्ना कृष्णत्वमभ्येति प्राप्नोति । पीतास्रावा महाव्रणा च भवति । तत्र कुष्टादिकामिष्टम् ॥

दंशे च सन्तानिकया शूलमाकुलताश्रुणः ।
प्रदराक्षेपकौ तत्र केसरं क्षीरिणां त्वचः ॥
आम्रस्य सिन्दुवारस्य मूलमश्मन्तकस्य च ।

सन्तानिकाख्यया दंशे शूलादिकमाक्षेपकान्तं भवति । प्रदरं स्त्रियोतिरजः । आक्षेपको वातव्याधिः । तत्र नागकेसरादिकं भेषजम् । मूलशब्दस्याम्राद्यश्मन्तकान्तैः सम्बन्धः ॥

पिटका मेचका दंशमध्ये जतुकणोपमा ।
ज्वरः शोफोत्र वारुण्या रोचना रजनीद्वयम् ॥

मेचकाख्यायाः सम्बन्धिनो दंशस्य मध्ये जतुकणोपमा पिटका ज्वरः शोफश्च भवति । अत्र वारुण्यादिकं भेषजम् । वारुणीन्द्रवारुणी ॥

**राजीमान् कसना दंशः शिरोरुक् श्वासकासवान् ।**
**शीतपिच्छिलरक्तस्तुद्रक्तोक्तं तत्र भेषजम् ॥**

कसनाख्याया दंशो राजीमान् शिरोरुगादियुक्तश्च भवति । तत्र रक्ताख्यादंशोक्तं भेषजम् ॥

**पाण्डुरक्तोऽतिरुग्दंशः काकाण्ड्याः स्मृतिमोषकृत् ।**
**हिध्मा श्वसनतृण्मूर्च्छा निद्राक्षेपकहृद्गदाः ॥**

काकाण्ड्या दंशः पाण्डुरक्तत्वादिगुणो भवति । स्मृतिमोषकृच्च । हिध्मादयश्च भवन्ति । इतः प्रभृत्यसाध्यत्वाच्चिकित्सा नोच्यते । (निद्राक्षेपः सहृद्गदः इति च पाठः ।)

**रक्तान्तस्त्वेणपादाया दंशः कृष्णतिलाकृतिः**
**दाहमोहाग्निवीसर्पतृड्वमिश्वासकासवान् ॥**

एणपादाया दंशः पर्यन्तेषु लोहितः कृष्णतिलाकृतिर्दाहादिमांश्च भवति ॥

**पूतिः श्यावोऽतिरुक् सासृगादंशो लाजवर्णया**
**शीतज्वरसमुत्थानो दाहमूर्छातिसारवान् ॥**

लाजवर्णया दंशः पूत्यादिगुणो भवति । शीतज्वरहेतुर्दाहादिमांश्च ॥

**अग्निदग्धनिभो दंशो वैदेह्या भृशवेदनः ।**
**गम्भीरः सज्वरस्तीक्ष्णमोहो हृदयपीडनम् ॥**

वैदेह्या दंश अग्निदग्धनिभत्वादिगुणो भवति ॥

**ऊर्ध्वराजीचितो दंशो जालिन्यास्तीव्रशोफरुक् ।**
**उदीर्णतृड्भ्रमश्वासस्तम्भमोहोऽवदीर्यते ॥**

जालिन्या दंश ऊर्ध्वराजीचितत्वादियुक्तो भवति । उदीर्णा वृद्धास्तृडादयो यस्मिन् । अवदीर्यते भिद्यते ॥

**रक्तो मालागुणादंशो धूमगन्धिः सतीव्ररुक् ।**
**दीर्यते पार्श्वतस्तैस्तैः संरब्धैर्मण्डलैर्युतः ॥**
**अन्तर्दाहो बहिः शैत्यमाध्मानं मूत्रकृच्छ्रता ।**
**मूर्च्छाप्रलापातीसारज्वराः प्राणान्तकारिणः**

मालागुणाया दंशो धूमगन्धत्वादियुक्तो भवति । अस्यां च लूतायामन्तर्दाहादयः प्राणानामन्तकारिणः ॥

**ध्मातः सौवर्णिकादंशः स्यन्दते मत्स्यगन्धिकः**
**शिरोक्षिरुग्ज्वरः कासस्तृणा शोफो वमिर्भ्रमः**

सौवर्णिकाख्याया दंशो ध्मातत्वादिगुणो भवति । शिरोरुगादिकं च ॥

**असाध्यानामपि हितं प्रत्याख्यायाशु योजयेत् ।**
**दोषोच्छ्राय विशेषेण छेददाहादिवर्जितम् ॥**

यासामसाध्यत्वाच्चिकित्सानोक्ता तासामसाध्यानामपि प्रत्याख्यानं कृत्वा दोषोच्छ्राय विशेषवशेन हितं चिकित्सितं योजयेत् । छेददाहादिकं वर्जयित्वा ॥

यस्मिन् देहदेशे या लूता दशति सा कपिलेत्यादिना क्रमेण प्रदर्श्यते ॥

कपिला तत्र नासायामग्निर्दशति जत्रुणि ।
पीता तु गण्डयोः पद्मा दक्षिणांसेथ कक्षयोः ॥
लूता मूत्रविषाश्वेता चिबुकेकालिकाक्षिणि ।
पाण्डुरा दक्षिणस्कन्धे करयो रक्तपादिका ॥
वामपार्श्वे दशेत् भृङ्गा वामांसे पिङ्गला दशेत् ।
त्रिमण्डलोदरे पूतिः पृष्ठे वीरा तु दक्षिणे ॥
बाहौ नाभ्यां कुमुदिका वामस्कन्धेऽलसंज्ञिता
कण्ठे रक्ता ललाटे तु चित्रा सन्तानिकोष्ठयोः
मेचका मूर्ध्नि कसनाद्धस्तयोः कक्षमूलयोः ।
काकाण्ड्येणी तु हृदये लाजवर्णास्तनान्तरे ॥
बाहुसन्धिषु वैदेही लूताऽपाङ्गे तु जालिनी ।
मालागुणाख्या ग्रीवायां सौवर्णी कर्णमूलयोः
इति क्षेत्राणि नियतान्यत्युदीर्णविषाः पुनः ।
परक्षेत्रेपि वर्तन्ते राजानोतिबला इव ॥

इत्युत्तरे पञ्चचत्वारिंशोऽध्यायः ॥

तत्र तासां लूतानां मध्ये कपिला नाम लूता नासायां दशति । एवमग्निरित्यादि । व्याख्या समम् । इत्येतानि नासादीनि क्षेत्राणि कपिलादीनां लूतानां नियतानि । यास्त्वत्युदीर्णविषा भवन्ति ता लूताः परक्षेत्रेपि वर्तन्ते यथातिबला राजान इति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे पञ्चचत्वारिंशोध्यायः ॥

——:0:——

# षट्चत्वारिंशोऽध्यायः ।

## मूषिकालर्कप्रतिषेधम् ।

जङ्गमविषप्रक्रमेण मूषिकालर्कविषयोश्चिकित्सां प्रदर्शयितुमध्याय आरभ्यते ॥

अथातो मूषिकालर्कप्रतिषेधं नामाध्यायं व्याख्यास्यामः । इति यः ।

[लालनादिभेदेनाष्टादशविधस्य मूषिकस्यालर्कस्य शुनश्च विषस्य प्रतिषेधश्चिकित्सास्मिन्नध्याय उच्यत इति मूषिकालर्कप्रतिषेधस्तम् । विज्ञानाद्विना प्रतिषेधस्य दुष्करत्वात् सविज्ञानं प्रतिषेधमित्यर्थः । शेषं पूर्ववत् । ]

[तत्र पूर्वं मूषिकाणां नामविशेषं संख्यां च दर्शयति ॥ ]

लालनश्चपलः पुत्रो हसिरश्चिकिरोऽजिनः ।
कषायदन्तः कुलकः कोकिलः कपिलोऽसितः
अरुणः शबलः श्वेतः कपोतः पलितोन्दुरुः ।
चुच्छुन्दरो रसालाख्यो दशाष्टौ चेति मूषिकाः

लालनादयोष्टादश मूषिकाः । मूषिकस्य प्रसिद्धत्वात् भेदकीर्तनमेव । अलर्कस्य तु लक्षणं वक्ष्यते ॥

[मूषिकविषस्य व्रणेन विनापि रक्तादिदूषकत्वात्तत्संक्रान्तेर्हेतुमाह ॥ ]

यस्मिन्नङ्गे पतत्येषां शुक्रमङ्गैः स्पृशन्ति वा ।
यच्छुक्रदिग्धैस्तत्रास्रे दूषिते पाण्डुतां गते ॥
ग्रन्थयः श्वयथुः कोठो मण्डलानि भ्रमोरुचिः

**शीतज्वरोतिरुक्सादो वेपथुः पर्वभेदनम् ।।**
**रोमहर्षः स्रुतिर्मूर्छा दीर्घकालानुबन्धनम् ।**
**श्लेष्मानुविद्धबह्वाखुपोतकच्छर्दनं सकृत् ।।**

एषां मूषिकाणां सम्बन्धि शुक्रं यस्मिन्नङ्गे पतति यद्वा यदङ्गं मूषिकशुक्रादिग्धैरङ्गैः स्पृशन्ति तत्रास्रे रक्ते दूषिते पाण्डुत्वं च गते ग्रन्थ्यादिकं भवति । श्लेष्मणानुविद्धानां बहूनामाखुपोतकानां छर्दनं वमनम् । [तत्प्रभावात् सकृदेकवारमेव श्लेष्मणानुबद्धानां बहूनामाखुपोतकानां मूषिकबालाकारमांसखण्डानां छर्दनं च स्यात् । शीतज्वरः शीतादिज्वरः । पर्वभेदनं सन्धिषु भेदनप्रतीतिः । स्रुतिर्व्रणमुखाद्रक्तपूयादिस्रावः । दीर्घकालं चिरकालमनुबन्धनमनुवर्तनम् ।। ]

**व्यवाय्याखुविषं कृच्छ्रं भूयो भूयश्च कुप्यति।**

सर्वं चाखुविषं व्यवायिव्यापकगुणस्वभावं कृच्छ्रं कृच्छ्रसाध्यं भवति। भूयो भूयश्च कुप्यति । [व्यवायिगुणस्य सर्वविषसाधारणत्वेप्यत्र विशेषकथनमतिशयद्योतनार्थम् । भूयो भूयश्च कुप्यति शान्तमपि पुनःपुनः कालान्तरेण कोपं याति ॥]

**मूर्च्छाङ्गशोफवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ।।**
**शिरो गुरुत्वं लालासृक् छर्दिश्चासाध्यलक्षणम्**

मूर्छादिकमसाध्यमूषिकाविषलक्षणम् । [अङ्गशब्दः शोफादिषु त्रिषु सम्बध्यते ।। ]

**शूनवस्तिं विवर्णौष्ठमाखुवाभैर्ग्रन्थिभिश्चितम् ।**
**चुच्छुन्दुरुसगन्धं च वर्जयेदाखुदूषितम् ।।**

शूनवस्तिमित्यादिकं चाखुदूषितं वर्जयेत् । चुच्छुन्दुरुसमानगन्धं च । चुच्छुन्दुरुर्नाम्ना दीर्घमुखो मूषिकः । [असाध्यलक्षणान्युक्त्वा पुनरपि वर्जयेदित्युक्तत्वात् पूर्वोक्तस्याप्यत्वमस्य परित्याज्यत्वं च सूचितम् ।। ]

शुन इत्यादिना अळर्कस्य लक्षणमुच्यते । (अनन्तरमळर्कविषलक्षणं विवक्षुः पूर्वं तस्योन्मादहेतुमाह ।। )

**शुनः श्लेष्मोल्बणा दोषाः संज्ञां संज्ञावहाश्रिताः**
**मुष्णन्तः कुर्वते क्षोभं धातूनामतिदारुणम् ।।**
**लालावानन्धबधिरः सर्वतः सोभिधावति ।**
**स्रस्तपुच्छहनुस्कन्धः शिरो दुःखी नताननः ।।**

शुनः सारमेयस्य श्लेष्मोल्बणा दोषाः संज्ञावहाः सिरा आश्रित्य संज्ञां चेतनां मुष्णन्तो धातूनां शुनो रसरक्तादीनां दारुणमतिघोरं क्षोभं कुर्वते । ततः स लालावत्त्वादियुक्तः स्रस्तपुच्छादिकश्च सर्वतो विना प्रयोजनमभिधावति ।।

(उन्मादलक्षणमुक्त्वा अळर्कस्य दंशलक्षणमाह ।। )

**दंशस्तेन विदष्टस्य सुप्तः कृष्णं क्षरत्यसृक् ।**
**हृच्छिरोरुग्ज्वरस्तम्भतृष्णामूर्छोद्भवोनु च ।।**

तेन तथाविधेनाळर्काख्येन शुनादष्टस्य पुंसो दंशः सुप्त अचेतनः सन् कृष्णमसृक् क्षरति । ततश्च तृष्णाद्युद्भवो भवति ।।

(अळर्कविषप्रसङ्गात् सृगालादिविषलक्षणमाह ।। )

**अनेनान्येपि बोद्धव्या व्यालादंष्ट्रा प्रहारिणः।**
**सृगालाश्वतराश्वर्क्षद्वीपिव्याघ्रवृकादयः ॥**

अनेन च श्वदंशप्रकारेणान्येपि व्याला क्षुद्रा दंष्ट्राप्रहारिणः सृगालादयो बोद्धव्या ज्ञेयाः । (सृगालादय इत्यादिशब्देन विडालादयो गृह्यन्ते । व्याला दुष्टसत्वाः ।)

**कण्डूनिस्तोदवैवर्ण्य सुप्ति क्लेदज्वरभ्रमाः ।**
**विदाहरागरुक्पाकशोफग्रन्थि विकुञ्चनम् ॥**
**दंशावदरणं स्फोटाः कर्णिका मण्डलानि च ।**
**सर्वत्र सविषे लिङ्गं विपरीतं तु निर्विषे ॥**

सर्वत्र सविषे दंशे कण्ड्वादिकं लिङ्गम् । एतद्विपरीते निर्विषम् ॥

(अळर्कप्रसङ्गात्तद्विधानां सृगालादीनां लक्षणमुक्त्वा सामान्येनासाध्यलक्षणमाह ॥)

**दष्टो येन तु तच्चेष्टारुतं कुर्वन् विनश्यति ।**
**पश्यंस्तमेवचाकस्मादादर्शे सलिलादिषु ॥**

येनैव प्राणिना दष्टस्तस्यैव सम्बन्धिनीश्चेष्टास्तस्यैव रुतं कुर्वन् पुरुषो विनश्यति । तमेव च प्राणिनमकस्मादादर्शादिषु पश्यन्नपि विनश्यति ॥

**जलदर्शनसंस्पर्शशब्देभ्यो यश्च सन्त्रसेत् ।**
**अदष्टमपि तं जह्याज्जलसन्त्रासरोगिणम् ॥**

अदष्टोपि यः पुरुषो जलस्य दर्शनेन वा स्पर्शनेन वा शब्देन वा सन्त्रस्येत्तं जलसन्त्रासनाम्ना रोगेण युक्तं जह्यात् ॥

(मूषिकाळर्कयोर्लक्षणमुक्त्वानन्तरं मूषिकचिकित्सामाह ॥)

**आखुना दष्टमात्रस्य दंशं काण्डेन दाहयेत् ।**
**दर्पणेनाथवा तीव्ररुजा स्यात् कर्णिकान्यथा ॥**

आखुनेत्यादिना मूषिकाणां साधारणी चिकित्सा । सुबोधम । दंशदाहेन विना कर्णिका सम्भवति । (आखुना मूषिकेण दष्टमात्रस्य मात्रयाप्यनतिलङ्घितदष्टसमयस्य दंशं दंशव्रणं काण्डेन शरकाण्डादिना अथवा दर्पणेनादर्शेन दाहयेत् अन्यथा दाहाभावे तीव्ररुजा अतिवेदनायुक्ता कर्णिका स्यात् ॥)

(अनन्तरकरणीयमाह ॥)

**दग्धं विस्रावदेदंशं प्रच्छितं च प्रलेपयेत् ।**
**शिरीषरजनीवक्रकुंकुमामृतवाल्लिभिः ॥**

दग्धं दंशं दंशव्रणं विस्रावयेत् । प्रच्छितं चेति वक्ष्यमाणत्वाद्विस्रावणं प्रच्छानेन । ततः शिरीषादिभिरमृतवल्ल्यन्तैः प्रलेपयेत् । (शिरीषरजनीकुष्ठसिति सुश्रुतपाठः ॥)

**अगारधूममञ्जिष्ठा रजनी लवणोत्तमैः ।**
**लेपो जयत्याखुविषं कर्णिकायाश्च पातनः ॥**

अगारधूमादिभिर्लेपः आखुविषं जयति कर्णिकायाः पातनश्च ॥

**ततोम्लैः क्षाळयित्वा तु तोयैरनुच लेपयेत् ।**
**पालिन्दी श्वेतकटभी बिल्वमूलगुळूचिभिः ॥**
**अन्यैश्च विषशोकघ्नैः सिरां वा मोक्षयेत् द्रुतम्**

ततो लेपादनन्तरमम्लैः काञ्चिकादिभिः क्षाळयित्वानु पश्चाच्च तोयैः क्षाळयित्वा पालिन्द्यादिभिर्लेपयेत् । पालिन्दी श्यामा त्रिवृत् । अन्यैश्च विषघ्नैः शोफघ्नैश्च हरिद्रादिभिर्लेपयेत् ।

अथवा द्रुतं शीघ्रं सिरां मोक्षयेत् । (विषघ्नैः शिरीषादिभिः शोफघ्नैः शिग्रुमूलादिभिरन्यैरप रैरौषधैश्च लेपं कुर्यात् ॥)

छर्दनं जालिनीक्वाथैः शुकाख्याङ्कोलयोरपि ।
कोशवत्याः शुकाख्यायाः फलं जीमूतकस्य च
मदनस्य च सञ्चूर्ण्य दध्ना पीत्वा विषं वमेत्

नीलिनीक्वाथेन छर्दनं शुकाख्याङ्कोलयो- श्च क्वाथेन । कोशवत्यादिफलानां चूर्णं दध्ना पीत्वा विषं वमेत् । शुकाख्या शिरीषः । को- शवती कोशातकी । जीमूतः कृतवेधनः ॥

वचामदनजीमूत कुष्ठं वा मूत्रपेषितम् ।
पूर्वकल्पेन पातव्यं सर्वोन्दुरुविषापहम् ॥

वचादिकं गोमूत्रेण पिष्ट्वा पूर्वकल्पेनेति दध्ना पातव्यम् । तत्सर्वेषामुन्दुरूणां विषं हन्ति ॥

निष्पावाः कदलीमूलं बन्धुजीवफलानि च ।
सुवर्चलारामठकं स्वर्जिकातिविषाद्वयम् ॥
श्यामाद्रिकर्णिकामूलमर्धैर्वमनत्रयम् ।

निष्पावसुवर्चलाश्यामादिभिरर्धैरर्ध- श्लोकैर्वमनत्रयं भवति । रामठकं हिङ्गु ॥

वान्तस्य शुद्धे हृदये शूलं हिध्मारुचिर्वमिः ।
तृष्णोद्गारानुबन्धो वास्याचेत्तत्रैतदौषधम् ॥

वान्तस्य सतो हृदये शुद्धे शूलादिकं य- दि स्यात्तत्रैतदौषधम् ॥

किमित्याह ॥

जीरकं त्र्यूषणं कुष्ठं तुङ्गाख्यं नागकेसरम् ।
रजन्यौ सैन्धवं सेव्यं यष्टीमधुसुवर्चलाम् ॥

मधुरं च गणं पिष्ट्वा बीजपूरकपित्थयोः ।
रसेन षाडवं कुर्यान्मधुमत्स्यण्डिकान्वितम् ॥
गन्धवर्णरसोपेतः स पीतो विषदोषजित् ।

जीरकमित्यादि व्याख्यासमम् । तुङ्गा- ख्यं नागकेसरम् । मधुरोगणः सूत्रोक्तः ॥

द्विपिप्पलीब्र्यंशुमतीक्वाथेपेयाचतद्गुणा ।

द्विपिप्पल्यादिक्वाथे कृता पेया च तद्गुणा जीरकादिषाडवगुणा ।

विरेचने त्रिवृन्नीली त्रिफला कल्क इष्यते ।
शिरोविरेचने सारः शिरीषस्य फलानि च ॥

त्रिवृदादिकल्को विरेचन इष्यते । शि- रीषस्य सारः फलानि च शिरोविरेचने ॥

अञ्जने गोमयरसो व्योषसूक्ष्मरजोन्वितः ।
कपित्थगोमयरसो मधुमानवलेहने ॥

व्योषसूक्ष्मरजोन्वितो गोमयरसोञ्जन इष्यते । कपित्थगोमयरसो माक्षिकयुक्तोऽवले- हने ॥

तण्डुलीयकमूलेन सिद्धं पाने हितं घृतम् ।
द्विनिशा कटभी रक्ता यष्ट्याह्वैर्वामृतान्वितैः ॥
आस्फोतमूलसिद्धं वा पञ्चकापित्थमेव वा ।

तण्डुलीयकस्य मूलेन सिद्धं घृतं पा- ने हितम् । अमृतान्वितैर्द्विनिशादिभिर्वा सि- द्धं घृतम् । रक्ता मञ्जिष्ठा । सुबोधम् । आ- स्फोतोर्कः । पञ्चकापित्थं कपित्थस्य त्वक्पत्रपु- ष्पफलमूलानि तैः पञ्चभिः सिद्धं घृतं वा ॥

अधोभागे विशुद्धस्य शूलं नाभ्यां भवेद्यदि ।
पुरीषं वा विबध्येतगुदे स्याद्वा विकर्तिका ॥

अस्या लक्षणं कुक्कुटाण्डनिभैः कन्दैरित्यादिनाह । कटुकापिच्छिलैरिति कन्दविशेषणम् । स्निग्धैरित्यादि तच्छदानां विशेषणम् । कटुकः क्षारः ॥

निखिलरोगहरापि विशेषतो
जयतिदारुणमप्यनिलामयम् ।
गुदजगुल्मतमो विषनाशिनी
जनयतिस्थिरतां वपुषःपराम् ॥

सा च कुक्कुटी सकलरोगहरापि सती विशेषतोऽनिलामयं जयति च । न कश्चिदेवापि तु दारुणमपि । न च केवलं गुदजादिनाशिनी अपि तु वपुषः परा मुत्कृष्टां स्थिरतां जनयति ॥

कुटींप्रविश्यतत्कन्दान् भक्षयेत्घृतभर्जितान् ।
पयोनुपानं धारोष्णं तत्विष्टमसनाम्बुवा ॥

तन्मात्रवृत्तिस्तुभवेद्दशाहं
विंशत्यहं स्वादुभुगप्रमादी ।
जत्रूर्ध्वकोष्ठत्रिकसन्धिवात-
पाण्ड्वामयार्शस्तिमिराणि जित्वा ॥

वलीपलितनिर्मुक्तः स्थिरकेशद्विजश्रुतिः ।
मेधामतिस्मृतियुतो जीवेद्वर्षशतद्वयम् ॥

कुटीं प्रविश्येति वातातपनिषेधः । शेषं व्याख्यासमम् । तत्र च धारोष्णं पयोनुपानमिष्टमथवासनोदकम् । दशाहं तु तन्मात्रवृत्तिर्भवेदस्याः कन्दान्येव भुञ्जीत नत्वन्नादिकमिति । ततोनन्तरं विंशत्यहं स्वाद्वन्नभुगप्रमादी च स्यात् । प्रतिषिद्धानां सेवाप्रमादः । अनेन जत्रूर्ध्ववातादीन् जित्वा वलीपलितनिर्मुक्तत्वादियुक्तो वर्षशतद्वयं जीवेत् ॥

आपूर्यमाणचन्द्रप्रतिपदमारभ्यवर्द्धयेत्कन्दम् ।
एकैकं घृतभृष्टं प्राग्भक्तं पथ्यभुक्खादेत् ॥

भुञ्जीताल्पतरं दिनार्दितमृषिः
पक्षक्षये भक्षयन्
क्षीरंबीजकवारितक्रमथवा
पीत्वास्थितिं कल्पयेत् ।
मांसं प्राश्य तथा नखद्विजकचैः
शीर्णोत्थितैः कान्तिमान्
जीवत्यब्दशतत्रयं धृतिमति
स्मृत्यादिभिर्भूषितः ॥

आपूर्यमाण चन्द्रायां प्रतिपदि कुक्कुट्या एकं कन्दं घृतभृष्टं प्राग्भक्तं भोजनप्रारम्भे भक्षयेत् । ततः प्रत्यहमेकैकं कन्दं वर्द्धयेत् अन्नं च प्रत्यहमेव ह्रासयेत् । एतस्यानन्तरं पथ्यं भुञ्जीत ऋषिर्मुनिवृत्तिः सन्निति पक्षं चन्द्रवद्वृद्धिः । पक्षक्षये च कन्दं भक्षयन् क्षीरादीनामन्यतमं पीत्वा स्थितिं कल्पयेत् नान्नं भुञ्जीतेत्यर्थः । एवं मासं प्राश्य नखादिभिः पूर्वं शीर्णैः पश्चादुत्थितैर्युक्तः कान्तिमान् धृत्यादिभूषितोऽब्दशतत्रयं जीवति ॥

क्षीरेण कन्दचूर्णं
पिबन्यवागूं च परिणते मासम् ।
लवणस्नेहविहीनां
दृढदृग्जीवेच्छरद्द्विशतम् ॥

कुक्कुटीकन्दचूर्णं क्षीरेण पिबं स्तस्य च परिणतौ लवणस्नेहविहीनां यवागूं पिबेत् । एवं च मासं कुर्वन् पुरुषो दृढया दृष्ट्यायुक्तः शरद्विशतं जीवेत् ॥

तिमिरं क्षौद्रघृताभ्यां
पथ्यभुजस्तद्रजो जयेन्मासात् ।
कन्दत्रयं च भृष्टं
घृतेश्नतो भक्षितं वातान् ॥

तद्रजः कुक्कुटीकन्दाद्रजः क्षौद्रघृताभ्यां युक्तं मासप्रयोगात् पथ्यभुजः पुरुषस्य तिमिरं जयेत् । कुक्कुटीकन्दत्रयं घृते भृष्टं भर्जितं भक्षितं सदश्नतः पूर्ण भोजनं कुर्वतश्चशब्दान्मासप्रयोगाद्वातान् जयेत् ॥

तत्कन्दसूक्ष्मरजसा
त्रिभागगोधूमचूर्णमिश्रेण ।
पयसा पक्त्वा खादेत्
घृतपूरानान्त्रवृद्धिहरान् ॥

कुक्कुटीकन्दसूक्ष्मचूर्णेन गोधूमचूर्णत्रिभागेन क्षीरेण च कृतान् घृतपूरानान्त्रवृद्धिहरान् खादेत् ॥

त्रीन् कन्दकांश्च निशि भक्षयताज्यभृष्टान्
धात्रीफलांबुसासितं छगलीपयो वा ।
पेयं दृगामयजयाय निषेवितव्या
कामं च रोगशममात्र फलार्थिभिः सा ॥

त्रीन् कुक्कुटीकन्दकान् घृतभृष्टान् निशि भक्षयता पुरुषेण धात्रीफलाम्बुसहितं छगलीपयो वा पेयम् । किमर्थमित्याह । दृगामयजयाय । न केवलं चैष एवास्य रसायनप्रयोगो यावत् सा कुक्कुटीरोगोपशममात्रफलार्थिभिः पुरुषैः काममिच्छया निषेवितव्या । इति कुक्कुटीकल्पः ॥

॥ इतः कंचुकी ॥

क्षीरान्विताम्मूलकतुल्यकन्दा
सप्ताष्टपत्रासितरक्तकाण्डा ।
बिभर्त्तिया पल्लवमब्दशब्दात्
सा कंचुकी श्वेतपुर्वरेण्या ॥

क्षीरान्वितेत्यादिलक्षणाया ओषधिः सा कंचुकीति बोद्धव्या । सप्त वा अष्टौ वा पत्राणि यस्याः सा तथोक्ता अब्दशब्दान्मेघस्तनितात् पल्लवान् बिभर्त्ति वरेण्या श्रेष्ठा ॥

आषाढेकार्त्तिके वाऽत्तं तत्कन्दं शीतलेस्थितम्
अङ्गुष्ठपर्वद्वयसंपिष्टं क्षीरपलाष्टके ।
कुटीप्रवेशस्तं पीत्वा क्षीरमेव पिबेदनु ॥
क्षीरमेव च जीर्णेपि पेयां वा स्नेहभर्जिताम् ।
किञ्चिदुष्णामलवणां स्पृशेदुष्णांबुनो हिमम् ।
एकेन सप्तरात्रेण कुष्ठान्येवं नियच्छति ॥
सर्वव्याधीन् द्वितीयेन तृतीये न तु सर्पवत् ।
त्यक्त्वात्वचं ततो जीर्णां केशदन्तनखानपि ॥
धीमेधारूपवान् जीवेत् पञ्चवर्षशतानि च ।

आषाढ इति शीतलप्रदेशे स्थितमङ्गुष्ठपर्वद्वयसं अङ्गुष्ठपर्वप्रमाणं यस्य सोङ्गुष्ठपर्वद्वयसः तं प्रमाणे द्वयसच्प्रत्ययः तत्कन्दं कंचुकी-

कन्दं आषाढे कार्त्तिके वा मास्यात्तं गृहीतं क्षीरपलाष्टकेष्टपालिके क्षीरे पिष्टं ततस्तं च कन्दं कुटीप्रवेशः पीत्वानुक्षीरमेव पिबेत् । अस्मिंश्च जीर्णेपि क्षीरं पिबेत् पेयां वा घृतभर्जितत्वादियुक्ताम् । हिमं जलं न स्पृशेत् । एकेनेत्यादिना सप्तरात्रेषु क्रमेण गुणातिशयो व्याख्यासमः ॥

कंचुकीकन्दचूर्णं वा स्वेन क्षीरेण भावितम् ॥
गोक्षीरकुडुबेन्यस्तं कर्षं खण्डपलान्वितम् ।
पीतं सर्वामयान् हन्ति नखकेशस्थितानपि ॥

कंचुकीकन्दचूर्णस्य स्वरसभावितस्य कर्षं खण्डपलं चेतिगोक्षीराष्टपलेन पीतं नखकेशस्थितानपि सर्वामयान् हन्ति ॥

पीतं तत्स्वरसंचूर्णं तस्या मधुघृतान्वितम् ।
खादन्हिताशी सप्ताहं त्वग्दोषांस्तिमिरंजयेत् ॥

तस्याः कंचुक्याश्चूर्णं भावनया पीतकंचुकीस्वरसं मधुघृताभ्यामन्वितं हिताशी पुरुषः सप्ताहं खादन् त्वग्दोषांस्तिमिरं च जयेत् ॥

विडङ्गताप्यत्रिफला लोहकंचुकिजं रजः ।
सप्तरात्रत्रयं लिह्यान्मधुना संयतेन्द्रियः ॥
क्षीरेण भोजनं जीर्णे शालेर्लावरसेन वा ।
तथास्य काचतिमिरे सुकृच्छ्राः शिरसो गदाः ॥
मेधाविनः प्रणश्यन्ति गात्रं सुप्तं च बुध्यते ।
एष सप्तामृतश्चूर्णः सर्वव्याधिषु पूजितः ॥

विडङ्गादीनां सप्तानां चूर्णो माक्षिकेणैकविंशतिदिनं संयतेन्द्रियेण सता लीढः का च तिमिरे शिरोरोगांश्च नाशयति मेधां जनयति त्वग्दोषेण च सुप्तगात्रं बोधयति । नाम्ना सप्तामृतः सर्वव्याधिहरश्च ॥

पलं चूर्णस्यकंचुक्याः क्षीरप्रस्थे समावपेत् ।
स्नेहंदध्नस्ततो लिह्याज्जिताग्निः ससिता मधु ॥
शालेरन्नं पयःपानं मासमेनं प्रयोजयेत् ।
चतुर्गुणः परीहारः षोडशाब्दसमद्युतिः ॥
शतानि पञ्चवर्षाणां जीवेदेव इवोर्जितः ।

कंचुकीजात दध्नो नवनीतप्रयोगः सुबोधः । षोडशवर्षेण यूना समकान्तिःसन् देव इवोर्जयायुक्तः पञ्चशतवर्षाणि जीवति ॥

पचेत् पलानिद्रोणेपां कंचुक्याःपञ्चविंशति ।
अष्टांशशिष्टेतु घृतात् प्रस्थं क्षीरसमं पचेत् ॥
शङ्खपुष्पीवचाकुष्ठात्रिवृतामरदारुभिः ।
वरायष्टीसिताद्राक्षा महिषाक्षैः पलांशिकैः ॥
युक्तैः कमलकिञ्जल्क त्रिपलेन हिमेन च ।
क्षौद्राच्चतुष्पलं दद्यादेतन्मर्त्यामृताह्वयम् ।
चक्षुष्यं बृंहणं मेध्यं वर्ण्यं वर्षशतप्रदम् ॥

पचेत् पलानीत्यादिना मर्त्यामृतंनाम घृतं सुबोधम् । शङ्खपुष्पादिभिः पलांशिकैः पद्मकिञ्जल्कात् त्रिपलेन युक्तैरिति सम्बन्धः । अत्र च हिम इति शीतीभूते । महिषाक्षो गुल्गुलुः ॥

पचेत्पलानिकंचुक्यास्त्रीणिलोहात्सुचूर्णितात् ।
पलाशवीजाच्चत्वारि दशद्वे च फलत्रयात् ॥
अष्टादशशतावर्या बीजकस्यैकाविंशति ।
जीवन्त्याःषोडशैकध्यं पौर्णमास्यांविपाचयेत् ॥

वहेपां पादशेषे च पृथगर्द्धाढकेन च ।
पचेत् काञ्चिकमस्तुभ्यां घृतप्रस्थं पिचूनिमतैः ॥
शताह्वारुष्करवचा कुष्ठैलावल्हिङ्गुभिः ।
सौवर्चलान्वितैः पद्मकेसराद्यैस्त्रिभिःपलैः ॥
पञ्चभिःपद्मबीजानां पञ्चद्वादशकेन च ।
एतत् सोमामृतं पीत्वा यत्सोमोऽद्यापि राजते ॥

इदमुपयुज्य सर्पिरतिवीर्यमुदारगुणं
भवति सुवाक्सुधीः सुदृढसुवक्त्रःसुभगः ।
ग्रहमरकोपसर्गविषभीतिभिरधृष्यवपु
र्विजितजराज्वरो नयति वर्षशतद्वितयम् ॥

अष्टौपलानीत्यादिना सोमामृतं नाम घृतं भवति । यत् सोमः शशाङ्कः पुरा पीत्वा अद्यापि राजते । अतिवीर्यमुत्कृष्टगुणं चेदमुपयुज्य नरः सुवाक्त्वादियुक्तो भवति । ग्रहादिभिश्चा प्रधृष्यो विजित जराज्वरः सन् वर्षशतद्वयं जीवति । ज्वराव्याधयः । त्रिफलायाः प्रत्येकं पलचतुष्टयम् । इति कंचुकीकल्पः ॥

॥ इतो गुल्गुलुः ॥

दानवेन्द्रविजितान् पुरा सुरान्
भ्रष्टकान्तिधृतिधैर्यतेजसः ।
वीक्ष्य विष्णुरमृतं किला सृजत्
गुग्गुलुं बलवपुर्जयप्रदम् ॥

पुरा पूर्वं कस्मिंश्चित् काले दानवेन्द्रैर्विजितान् सुरान् भ्रष्टकान्त्यादीन् दृष्ट्वा विष्णुर्बलादिप्रदं गुल्गुलुममृतं किलासृजत् किलेत्यागमे ॥

अस्याप्यतः सुरगणाः किलधूपमुख्यान्
हित्वा वरागरुतुरुष्कहिमेन्दुदर्पान् ।
निर्दह्यमानवपुषोऽपि शिखां पिबन्तो
गन्धेन यस्य मुदिता दधति प्रसादम् ॥

अत उक्ताद्धेतोः सुरगणा दिवौकसोऽद्यापि विच्छेद वरा गरुवादीन् धूपमुख्यान् हित्वा त्यक्त्वा यस्य गुलगुलोः शिखा धूमलेखां पिबन्तो निर्दह्यमानशरीरा अपि परं प्रसादं दधति धारयन्ति ॥

सयोगवाही सशिवःसमार्वः
सर्वर्तुसेव्यः सुखशीलनीयः ।
हन्ताजरापाप्म मलामयानां
कर्ताग्निमेधास्मृति पाटवानाम् ॥

स इति गुलगुलुः । योगवाही योगेनैवसः प्रयुज्यते यदितर्हि स्वगुणानजहन् तस्य गुणान् गृह्णाति । शिवः श्रेयस्करः । सर्वेभ्यो हितः सार्वः । सुखेऽधम् । जरादीनां हन्ता । अग्न्यादीनां कर्ता ॥

गन्धोत्कटःसदाहे
स्निग्धद्रवपिच्छिलो विगतशल्यः ।
महिषाक्षः पुष्परागस्फटिकासितनीरदच्छायः ॥

यः पद्मरागरागो
यः कनकच्छेदपाटलो यो वा ।
जयतीन्द्रनीलममलं
भग्नोप्यनिकान्तिमत्वेन ॥

श्रेष्ठःप्रयोगोस्यतुला पलान्यैवाधिकं पिबेत् ॥

स च महिषाक्षो गुग्गुलुः श्रेष्ठः यो दाह उत्कटगन्धः स्निग्धादिरूपश्च । व्याख्यासमम् । अस्य च गुग्गुलोस्तुलापलशतं परं योगः । अत ऊनोपि दोषाद्यपेक्षया । प्रत्यहं च पलादधिकं नैव पिबेत् ॥

आत्रेयमुनिगीतश्च मन्त्रोयं कर्मसिद्धिकृत् ।
भगवान् पुण्डरीकाक्षो देवाश्च सपुरन्दराः ॥
आज्ञापयन्ति सम्यक्त्वां प्रभावं चादिशन्तितते ।
जरामरणदुःखेभ्यो यथातेभ्युत्थिताः सुराः ।
उपयोक्तुस्तथैवास्य भवत्वं हि महाबल ॥

भगवानित्यादिना श्लोकद्वयेनात्रेयमुनिगीतः कर्मसिद्धिकृदयं गुग्गुलुप्रयोगमन्त्रः सुबोधः ॥

पञ्चमूलस्य महतः क्वाथेन हितभोजिना ।
गुग्गुलुःशीलितोहन्ति सर्वान वातकफामयान्
लघीयसोपि तद्वच्च सुखोष्णेन जलेन वा ।
मस्तु धान्याम्लमद्यैर्वा वचादेः सलिलेन वा ॥

स च गुग्गुलुर्महतः पञ्चमूलस्य वा लघीयसो ह्रस्वस्य वा क्वाथेनोष्णाम्बुना वा मस्त्वादीनामन्यतमेन वा वचादेर्गणस्य सलिलेन क्वाथेन वा हितभोजिना शीलितः सर्वान् वातकफेन कृतानामयान् व्याधीन् हन्ति ॥

वरणादेस्तुबाधिर्यं दन्तकर्णशिरोरुजः ।
स्वरभेदोदरश्वासवर्ध्मान्तर्गुल्मविद्रधीन् ॥

वरणादेस्तुगणस्य सलिलेन शीलितो बाधिर्यादीन् विद्रध्यन्तानामयान् हन्ति । अन्तशब्दो गुल्मविद्रधीभ्यां सम्बध्यते ॥

वातपित्तास्ररोगेषु बृंहणार्थिनिचेष्यते ।
क्वाथेन वाजिगन्धाया जीवनीयगणस्य वा

अश्वगन्धायाः क्वाथेन जीवनीयगणस्य वा क्वाथेनयुक्तो गुग्गुलुर्वातपित्तास्ररोगेष्विष्यते । बृंहणार्थिनि च पुरुष इष्यते ॥

क्वाथेनोत्पलमृद्वीका रक्तचन्दनजन्मना ।
वातपित्तं निहन्त्येष पद्मकादिगणस्य वा ॥

एष गुग्गुलुरुत्पलादिजन्मना क्वाथेन पद्मकादिगणस्य क्वाथेन वा युक्तो वातपित्तं निहन्ति ॥

चव्यकुष्ठविडङ्गानां यवान्या नागरस्य वा ।
प्रसारिण्याश्च तोयेन गुग्गुलुः कफवातजित् ॥

चव्यादित्रयस्य वा यवान्यादीनां वा क्वाथेन युक्तो गुग्गुलु कफवातजित् ॥

त्र्यूषणाग्निघनवेल्लवराभि-
र्भक्षयन् समधृतं महिषाक्षम् ।
आशु हन्ति कफमारुतमेदो-
दोषजान् बलवतोपि विकारान् ॥

त्र्यूषणादीनां समानां नवसंख्यानामेकोभागः । द्वितीयो गुग्गुलोरित्येतत् भक्षयन् पुरुषो बलवतोपि कफादिजान् विकारानाशु हन्ति ॥

पटोलनिम्बात्रिफलागुडूची
गायत्रिरात्रिद्वयबीजकानाम् ।
क्वाथैः पृथक्पथ्यपरस्य हन्ति
मासेन घोरान् कफपित्तरोगान् ॥

विशेषाच्छोफवीसर्प दुष्टव्रणभगन्दरान् ।
शुक्रार्तवमनोदोष प्रमेहश्वित्रपाण्डुताः ॥

पटोलादीनां पृथगष्टभिः क्वाथैर्युक्तो गुग्गुलुः पथ्यपरस्य पुंसो घोरान् कफपित्तरोगान् हन्ति । शोफादीन् पाण्डुतान्तान्रोगान् विशेषाद्धन्ति । दोषशब्दो रोगपर्यायः शुक्रादित्रयेण सम्बध्यते ॥

पटोलारिष्टनिर्यूह पिष्टस्तुल्यरसाञ्जनः ।
गळरोगापची व्यङ्गग्रन्थिस्थौल्यकृमिप्रणुत् ॥

पटोलनिम्बयोः क्वाथेन पिष्टस्तुल्यरसाञ्जनो गुग्गुलुः गळरोगादिकं प्रकर्षेणनुदति ॥

शिलाजतुसमःपीतः पयसा वातशोणितम् ।
निवर्तयत्यतिबलं क्षीरमांसघृताशिनः ॥

शिलाजतुना समो गुग्गुलुः पयसा क्षीरेण पीतोऽतिबलं वातशोणितं क्षीराद्यशनशीलिनः पुंसो निवर्त्तयति ॥

रसेनपयसा मूत्रैर्वातपित्तकफापहः ।
ब्राह्मी मण्डूकशङ्खानां पृथङ्मेधादिकृद्रसैः ॥

मांसरसेनयुक्तो गुग्गुलुर्वातापहः । पयसा क्षीरेण पित्तापहः । मूत्रेण कफापहः । ब्राह्म्यादीनां पृथग्रसैर्युक्तो मेधादिकृत् आदिशब्देन स्मृत्यादीनां ग्रहणम् ॥

मागधिकाग्निकलिङ्गविडङ्गै–
र्बिल्वघृतैः सवरापलषट्कैः ।
गुग्गुलुनासदृशेनसमेतैः
क्षौद्रयुतैः सकलामयनाशः ॥

मागधिकादिभिश्चतुर्भिर्बिल्वघृतैः प्रत्येकं पलप्रमाणैस्त्रिफलायाश्च प्रत्येकं द्विपलैरेतैश्च सर्वैः सदृशेन समेन दशपलेन गुग्गुलुनासमेतैर्युक्तैस्ततश्च क्षौद्रद्रुतैः सकलामयानां नाशो भवति ॥

पिबेत् पलशतं योस्यविधिना नियतो यतिः ।
नाकालमृत्योर्न्नव्याधेर्न्नतस्यजरसो भयम् ॥

अस्य च प्रकृतस्य गुग्गुलोः पलशतं यः पुरुषो नियतो नियतेन्द्रियः यति ब्रह्मचारी च पिबेत् तस्या कालमृत्योर्व्याधेर्जरसश्च भयं न भवति ॥

कल्पयेदौषधैः स्वैस्वैर्व्याधिषुव्याधिनाशनैः ॥

सर्वेषु च व्याधिषु स्वैःस्वैश्चिकित्सितनिर्दिष्टव्याधिना शनैःसह गुग्गुलुं कल्पयेत् ॥

शिलाजतुविधानं च गुग्गुलोः सर्वमिष्यते ॥

अस्य च गुग्गुलोर्वक्ष्यमाणं शिलाजतुविधानमपि सर्वमिष्यते शिलाजतुवत् सोपि योक्तव्य इत्यर्थः ॥

गुणनिधिरपिकुर्यात् सोतिमात्रोपयुक्त-
स्तिमिरवदनशोषक्लीबताकार्श्यमोहान् ।
शमलशिथिलभावं देहरौक्ष्यं च तस्मा
द्जनिचरनिषेवीस्यान्नरोगेष्वमीषु ॥

स च गुग्गुलुः स्वभावेन गुणनिधिरप्युपकारनिधानमप्यतिमात्रोपयुक्तः संस्तिमिरादिकं गदं कुर्यात् । यतोस्य तिमिरादिकरणश-

क्तिर्विद्यते ततोमीषु तिमिरादिषु रोगेषु पुरुषो रजनिचरानिषेवी न स्यात् । रजनिचरो गुल्गुलुः । क्षीवता स्त्रीगमनाशाक्तत्वम् । शमलशिथिलभावो द्रुतपुरीषत्वम् । सर्वामयेषूक्तोप्येषु निषेधः । इति गुल्गुलुकल्पः ॥

॥ इतः शिलाजतुः ॥

ग्रीष्मेर्कतप्तागिरयो जतुतुल्यं वमन्ति यत् ।
हेमादिषट्धातुरसं प्रोच्यतेतच्छिलाजतु ॥

ग्रीष्माख्य ऋतौ गिरयः पर्वताः अर्केण भगवता गभस्तिमालिना तप्ताः सन्तो जतुतुल्यं यद्वमन्त्युद्गिरन्ति तच्छिलाजतूच्यते । किं ते वमन्तीत्याह । हेमादिषट्धातुरसं हेमादीनां सुवर्णरूप्यताम्रत्रपुसी सशस्त्राख्यानां षण्णां धातूनां रसं तच्च यथास्वं धातुबलैरेव विज्ञायते ॥

सर्वदोषप्रशमनं सर्वरोगविनाशनम् ।
शिलाभ्योयस्ययज्जातंधातोस्तत्तद्गुणंवदेत् ॥

तच्च सर्वं शिलाजतु सर्वदोषप्रशमनं सर्वरोगविनाशनं च । यस्य च हेमादिधातोः शिलाभ्यो यज्जातं तत्तद्गुणम् ॥

सर्वं च तिक्तकटुकं नात्युष्णं कटुपाकतः ।
छेदनं च विशेषेण लौहं तत्र प्रशस्यते ॥

गोमूत्रगन्धि कृष्णं
गुल्गुल्वाभं विशर्करं मृत्स्नम् ।
स्निग्धमनम्लकषायं
मृदुगुरु च शिलाजतु श्रेष्ठम् ॥

सर्वं च तिक्तादिगुणम् । तत्र येषु मध्ये लौहं प्रशस्तम् । गोमूत्रगन्धित्वादिगुणं च शिलाजतु श्रेष्ठमिति विद्यात् । विशर्करं विगतशिलाचूर्णम् ॥

[ प्रतिदोषं शिलाजतुभावनमाह ॥ ]

रास्नादशमूलबला
पुनर्नवैरण्डशुण्ठिमधुकानाम् ।
क्वाथेन भावितं त
द्विशेषतो वातरोगघ्नम् ॥

द्राक्षाभीरुपटोल
त्रायन्तिगुळूचि जीवनीयानाम् ।
निर्यूहेण सुभिन्नं
शस्तं पित्तामये सुतराम् ॥

क्रिमिजिद्वचा फलत्रय
करञ्जघनमुख्यपञ्चमूलानाम् ।
सहपञ्चकोलकानां
क्वाथेन कफामये भाव्यम् ॥

लघुपञ्चमूलशुण्ठी
द्राक्षा काश्मर्य वाजिगन्धानाम् ।
सगुळूचिशरबलानां
रसेन पित्तानिलगदेषु ॥

घनकुष्ठवचा त्रिफला
सुरदारुविळङ्गपञ्चकोलानाम् ।
रजनीमरिचातिविषा
युक्तानां वातकफजेषु ॥

पाठा पटोलनिम्ब-
त्रिफलाघनकुटच सप्तपर्णानाम् ।
त्रायन्त्यमृतातिविषा-
सहितानां पित्तकफजेषु ॥

रास्नेत्यादि । तच्च शिलाजतु सर्वदोषरोगघ्नमपि रास्नादिक्वाथेन भावितं विशेषेण वातरोगघ्नं भवति । द्राक्षादिक्वाथेन भावितं पित्तामये सुतरां शस्तम् । कफामये पञ्चकोलसहितानां कृमिजिद्वचादीनां क्वाथेन भाव्यम् । मुख्यपञ्चमूलं महत् । गुळूच्यादिसहितानां लघुपञ्चमूलादीनां रसेन क्वाथेन पित्तानिलगदेषु भाव्यम् । रजन्यादियुक्तानां घनादीनां क्वाथेन वातकफजेषु व्याधिषु । त्रायन्त्यादिसहितानां पाठादीनां क्वाथेन पित्तकफजेषु ॥

निचयेपिदोषबलतो
योगानेतान् विकल्प्ययुञ्जीत
विविधगणसङ्ग्रहोक्तै-
स्तै स्तैश्चगणैर्गिरेस्सारम् ॥

व्याधिव्याधितसाम्यं
समनुसरन् भावयेदयःपात्रे ।
प्राक्केवलजलधौतं
शुष्कं क्वाथैस्ततो भाव्यम् ॥

एतांश्च पृथग्दोषोक्तान् संसर्गोक्तांश्च योगान् सन्निपातेपि दोषबलापेक्षया विकल्प्य युञ्जीत । विविधगणसंग्रहाध्यायोक्तैश्च जीवनीयादिभिर्गणैः स्वे स्वेष्वेव विषयेषु । गिरेःसारं शिलाजतु । कथं युञ्जीतेत्याह । व्याधिसादृश्यंव्याधितसादृश्यं च समनुसरन्ननुगच्छन् । तच्च यदा भाव्यं तदायस्पात्र एव । तच्च प्रथममेव केवलेन जलेन धौतं शुष्कं च क्वाथैस्ततो भाव्यम् ॥

समगिरिजमष्टगुणिते
निष्क्वाथ्यं भावनौषधं तोये ।
तन्निर्यूहेष्टांशे
पूतोष्णे प्रक्षिपेत् गिरिजम् ॥

तत् समरसतां यातं
संशुष्कं प्रक्षिपेद्रसे भूयः ।
स्वैस्वैरेवं क्वाथै-
र्भाव्यं वारान् भवेत् सप्त ॥

समगिरिजमित्यादिना भावनाविधानम् । यावदेव शिलाजतुभाव्यं तावदेवौषधं पलमानेनाष्टगुणिते तोये निष्क्वाथ्यम् । अष्टांशे तस्मिन् निर्यूहे क्वाथे पूते उष्णे च गिरिजं प्रक्षिपेत् । तच्च शिलाजतुक्वाथेन समरसतामेकत्वं प्राप्तमनु च शुष्कं पुनरनेनैवविधानेन भावनारसं प्रक्षिपेत् । एवमेतेनप्रकारेण स्वैस्वैर्यथोक्तैः प्रत्येकं कषायैः सप्तवारान् भावयेत् ॥

अथस्निग्धस्यशुद्धस्य घृतं तिक्तकसाधितम् ।
त्र्यहं युञ्जीतगिरिजमेकैकेन तथा त्र्यहम् ॥
फलत्रयस्ययूषेण पटोल्या मधुकस्य च ।
योगयोग्यं ततस्तस्य कालापेक्षं प्रयोजयेत् ॥
शिलाजमेवं देहस्य भवत्यत्युपकारकम् ।
गुणान् समग्रान् कुरुते सहसा व्यापदश्चन ॥

अथेत्यादिना उपयोगक्रमः । आदावेव स्निग्धस्यानन्तरं कृतशोधनस्य तिक्तकैः सूत्रोक्तैरौषधैःसाधितं घृतं त्र्यहं युञ्जीत । ततोनन्तरं फलत्रयादीनां त्रयाणामेकैकस्य यूषेण क्वाथेन युक्तं गिरिजं क्रमण त्र्यहं युञ्जीत । एवं द्वाद-

शाहानि संस्कारः । ततोनन्तरं तस्य शिलाजतुनो योगं स्वस्थातुरविशेषवशेन कालमपेक्ष्य प्रयोजयेत् । एवमेतेनैव क्रमेण शिलाजं देहस्यात्युपकारकं भवति । समस्तांश्च रसायनगुणान् कुरुते । व्यापदश्च सहसा न कुरुते ॥

**एकत्रिसप्तसप्ताहं कर्षमर्द्धपलं पलम् ।**
**हीनमध्योत्तमोयोगः शिलाजस्यक्रमान्मतः ॥**

तस्य शिलाजस्य हीनादिविशेषेण त्रिप्रकारो योगो मत आचार्याणाम् । एको हीनः द्वितीयो मध्यमः तृतयि उत्तमः एवं हीनादिविशेषेण । मात्राविशेषेण प्रत्येकं त्रिविधं कर्षमर्द्धपलं पलमिति । अत्रैकसप्ताहं हीनो योगः । त्रिसप्ताहं मध्यमः । सप्तसप्ताहमुत्तम इति क्रमार्थः । तथैव कर्षो हीनयोगः । अर्द्धपलं मध्यमः । पलमुत्तम इति ॥

**संस्कृतं संस्कृते देहे प्रयुक्तं गिरिजाह्वयम् ।**
**युक्तं व्यस्तैः समस्तैर्वा ताम्रायोरूप्यहेमभिः ॥**
**क्षीरेणालोडितंकुर्याच्छीघ्रं रासायनं फलम् ।**
**हन्याद्रोगानशेषांश्च जीर्णे हितमिताशिनः ॥**

संस्कृतमिति । संस्कृते स्नेहादिभिर्देहे यथादोषमौषधैः संस्कृतं शिलाजं ताम्रादिभिर्धातुभिः पृथग्यथायोगं मिश्रितैर्वा चतुर्भिर्वा युक्तं क्षीरेण चालोडितं प्रयुक्तं रासायनं फलं दीर्घायुष्ट्वादिकं जीर्णे हितं मितं च भोजनं कुर्वतः शीघ्रं कुर्यादशेषांश्च रोगान् हन्यात् ॥

**व्यायामातपमारुतचेतः**
**सन्तापगुरुविदह्यादि ।**
**उपयोगादपिपरतो**
**द्विगुणं परिवर्जयेत् कालम् ॥**

**कुलत्थान् काकमाचीं च कपोतांश्च सदात्यजेत् ।**
**पिबेन्माहेन्द्रमुदकं कौपं प्रास्त्रवणाम्बुवा ॥**

व्यायाम इत्यादि । अत्र च व्यायामादिकमशेषं प्रयोगात्परतो द्विगुणमपि कालं परिवर्जयेदपिशब्दात् प्रयोगेपि । कुलत्थादिकं च सदा प्रयोगात् प्रभृति यावज्जीवं त्यजेत् । तथैव च माहेन्द्रादिकमुदकं पिबेत् । माहेन्द्रमान्तरिक्षम् । [शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च । वर्जयेत् सर्वकालन्तु कुलत्थान् परिवर्जयेत् । तेह्यत्यन्तविरुद्धत्वादश्मनोभेदनाः परम् । लोके दृष्टास्ततस्तेषां प्रयोगःप्रतिषिध्यते ॥ इति चरकपाठः । व्याख्या । सर्वकालन्तु कुलत्थान् परिवर्जयेदित्यत्र तुशब्दोवधारणार्थे । ननु सर्वत्वं कालस्यकीदृक् । यावज्जीवमित्येके। अन्येत्वाचक्षते अत्यन्तविरुद्धत्वेपि रसायनस्यान्तवता फलेन भवितव्यं नात्यान्तिकेन । तस्मात् संवत्सरपरिहारः तस्यैतावानेवकालो यतः षडृतवस्तस्य विशेषणानि । कुलत्थानां शिलाजतुप्रयोगे विदाह्यादिभ्यो विशेषतो विरोधः तस्मात्तेषामेव वर्जनं यतस्तन्मय एव कायो भवति । कुलत्थाश्चाश्मविरोधिनः येन तद्रवेण ग्रावाणः सिक्ताः स्फुटन्ति । संवत्सराद्धि अत्यन्तदृढता कायस्यस्यादतः संवत्सरं परिहारः । इति जर्ज्जटः । ]

ज्वरीज्वरघ्नाम्बुदपर्पटादेः
क्राथेनरक्तीमधुयष्टिकायाः ।
शोषीरसैः क्रव्यभुगामिषोत्थै-
र्मायूरमांसैः पयसा च कार्श्ये ॥

मध्वम्बुना मेदसि सम्प्रवृद्धे
क्षीरेण पर्याकुलबुद्धिसत्वः ।
पाण्डवामयार्शोबुदरेसशोफे
पिबेच्छिलाजं महिषीजलेन ॥

ज्वरीत्यादेः शिलाजं पिबेदितिसम्बन्धः। व्याख्यासमम् । मुस्तापर्पटकादि यच्चिकित्सितउक्तं तस्य क्राथेन । रक्ती रक्तपित्तेन प्रवृत्तरक्तः । क्रव्यभुजो मांसाशिनः प्राणिनस्तेषां रसैः शोषी राजयक्ष्मी । पर्याकुलमेकरूपं बुद्धिः सत्वं च यस्य सः क्षीरेण । सत्वं मनः । पाण्डवामयादित्रये महिषीमूत्रेण ॥

अश्मवीरतराद्येन कुष्ठं खादिरवारिणा ।
विषं विषघ्नैरगदैर्हन्त्येवंतद्यथामयम् ॥

अश्मेत्यादिभिर्हन्तीतिसम्बन्धः । यथामयमिति रोगस्वरूपानतिक्रमेण ॥

शैलजत्रिकटुक्षौद्र क्षौद्रधातून् निषेवते ।
क्षीरौदनाशी यो जीर्णे यक्ष्मणानसबाध्यते ॥

शैलजादिकं सर्वं क्षौद्रेण सहितं यो निषेवते तस्मिंश्च जीर्णे क्षीरौदनाशी च भवति स राजयक्ष्मणा न बाध्यते ॥

सुभावितात्सारगणैस्तुलांपीत्वाशिलोद्भवात् ।
सारांबुनैव भुञ्जानः शालिं जाङ्गलजै रसैः ॥

व्यपोह्य मधुमेहाख्यमन्तकं रोगसङ्करम् ।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः ॥

सारगणोऽसनादिसारास्तैः सुभाविताच्छिलोद्भवात् तुलां पलशतं सारम्बुनैव पीत्वा शालिं जाङ्गलजै रसैर्भुञ्जानः पुरुषो मधुमेहाख्यं रोगसङ्करमन्तकं व्यपोह्य नाशयित्वा वपुरादिभिरुपेतोऽनामयश्च सन् वर्षशतं जीवति ॥

शिलाह्वात् षोडशपलं त्रिस्त्रिरेकत्र भावयेत् ।
वराया दशमूलस्य गुळूच्याः कर्कशस्य च ॥
बलाया मधुयष्ट्याश्च रसे गव्ये च वारिणि ।
क्षीरेसकृत्क्रमेणैवं सप्तकृत्वस्तथा पुनः ॥

काकोलियुग्मघनपुष्करवह्निरास्ना
मेदायुगर्द्धिचविका गजपिप्पलीनाम् ।
पाठाद्विजीवकनिकुम्भविदारियुग्म
वीरा वरी मधुकलांशुमतीद्वयानाम् ॥

पलिकानामब्द्रोणे
सिद्धानां पादशेषिते क्राथे ।
भावितमित्थं गिरिजं
द्विपलैश्चूर्णीकृतैर्युञ्ज्यात् ॥

कर्कटशृङ्गी धात्री
व्योषैस्तालीसपत्रकुडुबेन ।
चूर्णपलेनविदार्या
स्त्वक्षीर्याः कर्षयुग्मेन ।

द्विपलेन चतुर्जाता-
तैलघृतक्षौद्रशर्कराभिश्च ।
द्विपलाददद्विगुणाभिः
कार्या गुळिकास्ततोक्षसमाः ॥

ताः शुष्का नवकुम्भे
जातीपुष्पाधिवासिते स्थाप्याः ।
तासामेकां खादेत्
प्रतिदिनमनुपानमत्रेष्टम् ॥

क्षीररसडाडिमाम्भो
मार्द्वीकसुरासवान्यतमम् ।
जीर्णेऽन्नलघुभोज्यं
यूषपयः पिशितनिर्यूहैः ॥

सप्ताहमात्रमेवं
सर्वाङ्गीनः क्रमात् भवेत् परतः ।
भक्तस्यान्ते प्राग्वा
गुळिकानविरुध्यते सैषा ॥

निरपायाभूरिफला
परिहारसुखोपयोजिता जयति ।
प्रबलमपि वातशोणित-
मूरुस्तम्भं ज्वरं दीर्घम् ॥

भगमूत्रशुक्रदोषं
प्लीहयकृद्रक्तपाण्डुहृद्रोगान् ।
वर्ध्मवमि गुल्मपीनस-
हिध्माकासारुचिश्वासान् ॥

विद्रधिमुदरं कुष्ठं
श्वित्रं जाड्यं क्षयं मदं मूर्च्छाम् ।
उन्मादमपस्मारं
मुखनेत्रशिरोगदांस्तांस्तान् ॥

आनाहमतीसारं
हलीमकं कामिलाग्रहणिरोगान् ।
ग्रन्थ्यर्बुदान सपिटकान्
भगन्दरं गण्डमालां च ॥

अतिकार्श्यमतिस्थौल्यं
स्वेदमथश्लीपदं गुदे कीलान ।
दंष्ट्राविषं समूलं
गरप्रयोगान् सुघोरांश्च ॥

अभिचारमरातिकृतं
दुःस्वप्नं भौतिकीं तथा बाधाम् ।
पाप्मालक्ष्मीं चेयं
गुळिका शमयेच्छिवा नाम्ना ॥

वृष्याऽऽयुष्याधन्या
कान्तियशःश्रीविबोधिनी मेध्या ।
कुरुते नृपवल्लभतां
जयं विवादे च वक्त्रस्था ॥

जितखलतिवलीपलिता
जीवयति सुखं शतद्वयं शरदाम् ।
वर्षद्वयप्रयोगा-
द्वर्षशतचतुष्टयं जीवेत् ॥

शिलाह्वादिल्यादिना शिवा गुळिका । षोडशपलं शिलाह्वात् त्रिफलादीनां षण्णां षट्सु काथेषु क्रमेण तत्रैकैकस्य काथे त्रिस्त्रिर्भावयेत् । भावनाकाथस्य चेहैव विधानमुक्तम् । तेन त्रिफलादिषट्कान्यतमद्रव्यं शिलाजतुसमत्वात् षोडशपलं कार्यम् । तत्र चाष्टगुणं जलं दत्वा क्वथितेनाष्टांशशिष्टेन तेन समं शिलाजतु भाव्यम् । तदनन्तरमेव च गोमूत्रेणैवं वारान् भावयेत् । अनन्तरं च क्षीरे सकृदेकवारं भावयेत् । मूत्रं क्षीरं च काथवच्छिलाजतुसममेव विज्ञेयम् । एवं क्रमेण त्रिफलादिकाथैरितिक्रमो व्याख्यातः । एवं द्वाविंशतिवारान् भावयेत् । ततः पुनः सप्तवारान् भावयेत् । केनेत्याह । काकोल्यादिकाथेन । खरनादे कर्कटशृङ्गी श्रावणी चाऽऽधिके पठिते । काकोलियुग्मं काकोली क्षीरकाकोळी च ॥ घनं मुस्तम्, वह्निः श्चित्रकः, मेदायुग्मं मेदा, महामेदा च । ते हि प्रसिद्धे । जीवकद्वयं जीवन्ती, जीवकं च । निकुम्भो दन्ती । विदारीयुग्मं विदारी, क्षीर विदारी च । वीराख्यता मिका, (महाशतावरी) वरी शतावरी, मधुफला द्राक्षा, अंशुमतीद्वयं सालपर्णी, पृश्निपर्णी च । इत्यमनेनप्रकारेण भावितं गिरिजं कर्कटशृङ्ग्यादिभिः पञ्चभिः प्रत्येकं द्विपलैर्युक्तयाद्योगं नयेत् । अत्र खरनादे पुष्करमूलमपि पठितम् । तालीसपत्रकुडुवादीश्च युञ्ज्यादिति सम्बध्यते । क्षीरशुक्ला तवक्षीर्योरेव पलं कर्षद्वयं च । तयोः पलान्युक्तानि खरनादे पञ्च । तैलादिभिश्च द्विपलादिद्विगुणाभिर्युञ्ज्यात् । द्विपलादेर्द्विगुणत्वम् । एवं च तैलादीनां द्वन्द्वात् स्त्रीलिङ्गैःसामानाधिकरण्यं स्यात् । तेन तैलं द्विपलं ततो द्विगुणं घृतं चत्वारिपलानि । ततो द्विगुणं क्षौद्रमष्टौपलानि । ततो द्विगुणा शर्करा षोडशपलानि । ततोनन्तरमक्षसमाः कार्षिका गुळिकाः कार्याः । तासां गुळिकानां मध्यात् प्रतिदिनमेकां गुळिकां खादेत् । अत्र च गुळिकायां दोषाद्यपेक्षं क्षीरादीनामन्यतममनुपानमिष्टम् । अत्र च लघ्वन्नं यूषादिभिरर्थात् कफादेषु भोज्यं तस्मिन्नजीर्णे । अजीर्णे वर्ज्यमित्यर्थः । पिशितनिर्यूहो मांसरसः । एष एव क्रमः सप्ताहमात्रं विधेयः । मात्रशब्देन दोषाद्यपेक्षमाधिक्यमपि प्रदर्शयति । परतश्च सप्ताहादिच्छया क्रमात् सर्वान्नीनो भवेत् न तु त्वरया । एषा च गुळिका प्राग्भक्तमप्युत्तरभक्तमपि न विरुध्यते । निरपाया अस्या मुपयुज्यमानायामपायो नाशङ्क्यते । एषा च परिहारसुखा यन्त्रणान्वितेत्यर्थः । एषाचोपयोजिता सती प्रबलमपि वातशोणितमुरुस्तम्भादिकं च जयति । दोषशब्देन रोगपर्यायेण भगादीनां सम्बन्धः । सुखादिगदांश्च तांस्तानिति स्वस्वाध्यायनिर्दिष्टान् । इयं च गुळिकानाम्ना शिवा पाप्मानमलक्ष्मीं च शमयेत् वृष्यादिस्वरूपा च । वक्तव्यस्या विवादे जयं च कुरुते । एषा च जितखलयादिका सती शरदां संवत्सराणां शतद्वयं पुरुषं सुखं जीवयति । अस्याश्च वर्षद्वयप्रयोगात् पुरुषो वर्षशतचतुष्टयं जीवेत् ॥

१. [मौतिकांस्तथा बोधान् इति च पाठः ॥ ]

नसोऽस्तिरोगो भुवि साध्यरूपो
जत्वश्मजं यं न जयेत् प्रसह्य ।
तत्कालयोगैर्विधिवत्प्रयुक्तं
स्वस्थस्यचोर्जां विपुलां दधाति ॥

शिलाजतूपसंह्रियते । भुवि सरोगः साध्यरूपः साध्यस्वभावो नास्ति । यं रोगमश्मजं जतु प्रसह्याक्रम्य न जयेत् । तच्चाश्मजं जतुकाले योग्यैश्च योगैर्विधिवच्छास्त्रविधिना प्रयुक्तं स्वस्थस्य चनीरोगस्यापि विपुला मूर्जां दधाति ॥

अमरमन्दिरमन्दरसम्भवा
च्छतपलं गिरिजादुपयोजय ।
यदि जरामयदुःखविवर्जितां
सुचिरमिच्छसिजीवितसन्ततिम् ॥

कमप्यधिकृत्योच्यते । त्वं यदिजरादिवर्जितां सुचिरं बहुकालं जीवित सन्ततिमायुषः समूहमिच्छासि तर्हि पलशतं गिरिजादुपयोजय । किम्भूतादाह अमरमन्दिरमन्दरसम्भवात् अमराणां देवानां यन्मन्दिरं वासवेश्मयो मन्दरःमुख्यो गिरिः तत्र सम्भवो यस्य तस्मात् ॥

दशगुणमुपयुङ्क्ते यः शतं शैलजाता-
ल्लघुहितमितभोजी वर्जयन् वर्जनीयान् ।
सततसमनुषक्तान् वर्जितान् वैद्यवृन्दै
र्विधमति सगदौघान् नेक्षतेचायुषोन्तम् ॥

यः पुरुषः शैलजातात् गिरिजाद्दशगुणं सहस्रं लघ्वादिभोजी वर्जनीयांश्च वजयन्नुपयुङ्क्ते स पुरुषो व्याधिसमूहान् विधमति नाशयति । आयुषश्चान्तं नेक्षते न पश्यति । किम्भूतान् गदौघानाह सततसमनुषक्तान् अजय्यत्वादनुबद्धान् वैद्यवृन्दैर्वर्जितांश्च ॥

समुद्भवामृतमन्थनोत्थः
स्वेदः शिलाभ्योमृतवान गिरे प्राक् ।
यो मन्दरस्याब्जभुवाहिताय
न्यस्तः सशैलेषु शिलाजरूपी ॥

पुरा अमृतमथने मन्थनगिरेर्मन्दरस्य श्रमस्वेदोऽमृतेनयुक्तः प्रथममुद्भूत । योमृतवान् गिरेः स्वेदः स एवाब्जभुवा ब्रह्मणा लोकहिताय शिलाजरूपेण शैलेषु हिमवदादिषु न्यस्तः । इति शिलाजतुकल्पः ॥

॥ इतराप्यः ।

सुवर्णशैलप्रभवो विष्णुना काञ्चनोरसः ।
तापी किरातचीनेषु यवनेषु च निर्मितः ॥
ताप्यां सूर्यांशुसन्तप्तो माधवे मासि दृश्यते ।
मधुरः काञ्चनाभासः साम्लोरजतसन्निभः ॥
किञ्चित् कषाय उभयः शीतःपाके कटुर्लघुः ।
शिलानिर्यासवच्चात्र कुलत्थादीन् परित्यजेत् ॥

सुवर्णशैलप्रवभः काञ्चनोरसस्ताप्यादिषु देशेषु विष्णुना निर्मितः । तापी मध्यदेशप्रसिद्धा तस्यां सूर्यांशुभिः सन्तप्तः स माधवे वैशाखे मासि दृश्यते । स च द्विविधः एकः काञ्चनाभासो मधुरश्च । द्वितीयो रजतसन्निभोऽम्लश्च । उभयोपि किञ्चित् कषायरसः कटुको

लघुश्च । शिलाजतुवच्च ताप्येपि कुलत्थादीन् परित्यजेद्वर्जयेत् ॥

नतन्निषेवी जरसाभिभूयते
न पन्नगैर्नापि गरैर्नवृश्चिकैः ।
न पाण्डुमेहज्वरशोफयक्ष्मभि-
र्न कण्ठनेत्रश्रवणत्वगामयैः ॥

यश्च तं निषेवते स जरसानाभिभूयते नापि पन्नगादिभिः ॥

सोदश्वित्कोमाक्षिकधातुःसघृतो वा
सक्षौद्रो वा क्षौद्रघृताभ्यां सहितो वा ।
साम्भस्को वा तैलयुतो वा विनिहन्ता
त्वग्दोषाणां सर्वविषाणां स गराणाम् ॥

सोदश्वित्क इत्यादि । व्याख्यासमम । माक्षिकधातुस्ताप्यः ॥

अक्षद्राक्षायोमलमुस्तामलकानां
सव्योषाणां पर्वतनिर्यासयुतानाम् ।
दत्वा तुल्यं माक्षिकधातुं मधुमिश्रं
लिह्यात्पाण्डुव्याध्यभिभूतः शिवमिच्छन् ॥

अक्षादीनां पर्वतनिर्यासेन शिलाजतुना युतानामेकोभागो द्वितीयो माक्षिकधातोः तन्मधुमिश्रं लिह्यात् । सुबोधम् ॥

अंशः शुण्ठ्या,लोहमलांशोबदरांशः
पिप्पल्यंशो माक्षिकधातुर्द्विगुणांशः ।
क्षौद्रं कामं कृष्णतिलानामपिचांशः
श्रेष्ठा पिण्डी पाण्डुविकारश्वयथुघ्नी ॥

शुण्ठ्यादीनां पञ्चानामेकएको भागो माक्षिकधातोर्द्वौ भागौ क्षौद्रं काममिच्छया योजयेदेषेप. पिण्डी श्रेष्ठा पाण्डुविकारश्वयथुघ्नी ॥

सायश्चूर्णमाक्षिकधातुं मधुमिश्रं
व्योषोपेतं पर्वतनिर्याससमेतम् ।
क्षीराहारो योवलिहानःप्रयताश्च
मृत्युद्वारं शोषमपोहत्यचिरेण ॥

अयश्चूर्णादियुक्तं माक्षिकधातुमवलिहानः क्षीराहारःसन् मृत्योर्द्वारभूतं राजयक्ष्माणमचिरेणापोहति । अयश्चूर्णादीनि पञ्चसमानि ॥

लोहं सर्पिर्माक्षिकधातुर्मधुमात्रा
धात्रीचूर्णं केसरमम्बुप्रभवानाम् ।
योगं कुर्यादेषसिताभागविमिश्र-
श्चक्षुर्घ्राणश्रोत्ररसज्ञानविबोधम् ॥

लोहादिचूर्णमम्बुप्रभवानां पद्मानां केसरं मधुमात्रा माक्षिकस्य स्तोकं एष योग एषां समेन सिताभागे न विमिश्रश्चक्षुरादीनां विबोधं करोति ॥

कृत्वैकस्थं माक्षिकधातुं त्रिफलां च
भ्राष्ट्रे पक्त्वा ये सहविष्कं विलिहन्ति ।
पथ्यादास्तान् वार्द्धकदोषानभजन्ते
मातुर्दोषास्तन्यनिवृत्तानिव बालान् ॥

माक्षिकधातुं त्रिफलां चैकेकस्थं कृत्वा मिश्रीकृत्य भ्राष्ट्रे पक्त्वा सघृतं ये पुरुषा अवलिहन्ति पथ्यादाः सन्तस्तान् वार्द्धकदोषा

जरादयो न भजन्ते । यथा मातुर्दोषास्तन्या-न्निवृत्तान् बालान् सम्बन्धित्वाभावान्न भजन्ते ॥

समश्नतो माक्षिकधातुचूर्णं
सर्पिर्मधुभ्यां त्रिफला रजश्च ।
शनैः शनैर्यातिजराविनाशं
प्रत्यन्तवासादिव लोकयात्रा ॥

माक्षिकधातुचूर्णं त्रिफलाचूर्णं चैकीकृत्य सर्पिर्मधुभ्यां समश्नतः पुंसो जरा शनैः शनैर्विनाशं याति । यथा प्रत्यन्तवासात् गह्वरे निवसनात् लोकयात्रा विनाशं याति । इति ताप्यकल्पः ॥

॥ इतो वृद्धदारकः ॥

त्रिकोणकाण्डा सुबहुप्रताना
फलेषु पीता कुसुमेषु रक्ता ।
पत्रैःसदुग्धैर्मृदुरोमवद्भि-
स्ताम्बूलतुल्यैर्घनकन्दमूला ॥

पवनविवस्वदंशुवनितादिषुकामचरा
विविधमनःशरीरगदवृन्दनिवृत्तिकरी ।
भुवि परमौषधिर्महिषवल्लरीतिप्रथिता
क्वचिदपिवृद्धदारकइत्यन्त्रपिवेल्लरिका ॥

त्रिकोणकाण्डादिरूपा परमौषधी भुवि महिषवल्लरीतिप्रथिता क्वचिदपि वृद्धदारक इति क्वचिद्वेल्लरिकेति च । पवनादिषु कामचरा वातातपव्यवायादिषु इच्छावृत्तिरयन्त्रणा विविधानां मनोगदवृन्दानां शरीरगदवृन्दानां च निवृत्तिकरी ॥

वसन्ते संगृहीतानां शोषितानामनातपे ।
वृद्धदारकमूलानां तुलां संचूर्ण्यसर्पिषा ॥
आप्लाव्य घृतपात्रस्थां धान्ये पक्षमुपेक्षिताम् ।
लिह्यादनुपिवेत्क्षीरं जीर्णे क्षीरघृताशनः ॥
तत्प्रयोगाज्जराजीर्णो वृद्धो दारकतामियात् ।
भग्नास्थिर्गद्गदः पंगुः कृशोह्रस्वोन्यरूपताम् ॥
निरस्ताशेषदोषोत्थ नखभेदाद्युपद्रवः ।
अपस्मारग्रहोन्मादपाप्मालक्ष्मी विवर्जितः ।
दीप्ताग्निर्बलवान् वाग्मी जीवेद्वर्षशतानि षट् ॥

वसन्ते संगृहीतादिगुणानां वृद्धदारकमूलानां तुलां पलशतं संचूर्ण्य पश्चात् घृतेनाप्लाव्य घृतपात्रे स्थितां धान्यराशौ पक्षमुपेक्षितां पश्चादूर्ध्वं लिह्यात् । अनन्तरं च क्षीरं पिबेत् । जीर्णे च क्षीरघृताशनः स्यात् । तत्प्रयोगाद्वृद्धदारकप्रयोगाद्वृद्धः पुरुषो वर्णादीनामभितवानां सम्भवाद्दारकतां प्रतितरुणत्वमियात् । भग्नास्थ्यादिश्चान्यरूपतां यथास्थिताद्वैपरीत्यं याति । तेन भग्नास्थिः श्लिष्टास्थिर्भवति । गद्गदो मधुरवाक् । पंगु सुगति । कृशः स्थूलः । ह्रस्वो दीर्घ इति । निरस्ता अपास्ता अशेषा वातादिदोषोत्था नखभेदादयः सूत्रस्थानपठिता उपद्रवव्याधयो येन । अपस्मारादिवर्जितो दीप्ताग्नित्वादियुक्तश्च षड्वर्षशतानि जीवेत् ॥

चूर्णितैरश्वगन्धायाः संयुतं त्रिंशतापलैः ।
तत्तुल्यंदारकं प्राश्य पयसा सर्पिषाऽथवा ॥
जीर्णे पूर्ववदश्नीयाद्योजीवेत् सप्तमाः शतम् ।
वाजिवेगो गजप्राणः सुरूपो भास्करद्युतिः ॥

अश्वगन्धायास्त्रिंशत्पलस्य चूर्णेन तत्तुल्यमेव त्रिंशत्पलं वृद्धदारकसंयुतं पयसा सर्पिषा वा प्राश्य तस्मिन् जीर्णे पूर्ववदिति क्षीरघृताभ्यां यः पुरुषोऽश्नीयात् स समाशतं वर्षशतं जीवेत् वाजिवेगादियुतश्च भवेत् । भास्करद्युतिः सूर्यतेजाः ॥

**अश्वगन्धेन संयोज्यौ वरीगोक्षुरकौ पृथक् ॥**

अश्वगन्धाप्रकारेण वृद्धदारकप्रयोगे शतावरी योज्या । तद्वदेव गोक्षुरकोपि ॥

**यो लिह्यात् सर्पिषा चूर्णं वृद्धदारकमूलजम् ।**
**सप्ताहं यूषभक्ताशी स्यात् स किन्नरतुल्यवाक् ॥**

यो लिह्यादित्यादि । यः पुरुषो वृद्धदारकमूलजं चूर्णं सर्पिषा सह सप्ताहं लिह्याज्जीर्णे यूषभक्ताशी च स्यात् स किन्नरसमानवाक् स्यात् ॥

**स्वरसेन शतावर्याः सप्ताहं भावितं च तत् ।**
**लिहानः पूर्ववन्मासं शतं जीवेन्महामतिः ॥**

तच्च वृद्धदारकमूलचूर्णं शतावरीस्वरसेन सप्ताहं भावितं पूर्ववदिति सर्पिषा मासं लिहानो महामतिः सन् वर्षशतं जीवेत् ॥

**लिह्याद्वा मधुसर्पिर्भ्यां धात्रीस्वरसभावितम् ।**
**क्षीरेण वा पिबन्मासं शतं जीवेदरुक्सुधीः ॥**
**वृद्धदारकमूलानां रसं क्षीरेण यः पिबेत् ।**
**तत्कल्कसिद्धं सर्पिर्वा स जीवेन्नीरुजः शतम् ॥**
**पीतं वेल्लरिकामूलं गोमूत्रेण सहोषितम् ।**
**कुष्ठगुल्मोदरगरश्लीपदार्शांसि वर्जयेत् ॥**

धात्रीस्वरसभावितस्य वृद्धदारकमूलचूर्णस्य मासं मधुसर्पिर्भ्यां लेहनं क्षीरेण पानं वा । व्याख्यासमम् । तत्कल्कसिद्धमिति वृद्धदारकमूलकल्कसिद्धम् । सहोषितं भावितम् ॥

**पिप्पली त्रिफला दार्वी महौषधपुनर्नवाः ।**
**पृथग्दशपलाः सर्वैस्तुल्यांशो वृद्धदारकः ॥**
**धान्याम्लपीतस्तच्चूर्णो जीर्णे स्वच्छन्दभोजनः ।**
**श्लीपदामसरुङ्मेहगुल्मोदरगरान् हरेत् ॥**

पिप्पल्यादीनि सप्त पृथग्दशपलानि सर्वैः समो वृद्धदारकः । सुबोधम् । आममरुदामवातः ॥

**शौण्डी विश्वकराद्वीपि वेल्लमुस्ताः समांशकाः ।**
**तुल्यवेल्लरिकामूलाः साज्यक्षौद्रास्तथागुणाः ॥**

शौण्ड्यादीन्यष्टौ समभागानि सर्वैः समं वेल्लरिकामूलम् । अस्याज्यक्षौद्राभ्यां प्रयोगः । तथागुणा इति श्लीपदादीन् जयेयुः । शौण्डी पिप्पली । वरा फलत्रयम् ॥

**तत्फलात् स्वरसं कर्षं लिहंस्तुल्याज्यमाक्षिकम् ।**
**गव्यं पिबेदनु पयो माहिषं वा यथेष्टभुक् ॥**
**पक्षाहेन जयेत् कासान् सप्ताहेन त्वगामयान् ।**
**महाकुष्ठानि मासेन भवेन्मासद्वयेन तु ।**
**पञ्चवर्षशतायुष्को धीमेधाबलरूपवान् ॥**

वृद्धदारकफलस्वरसस्य कर्षस्तावदेवाज्यं तावदेव क्षौद्रमिति लिहन् गव्यं पयोऽनुपिबेन्माहिषं वा पयः । व्याख्यासमम् ॥

वेल्लरीफलमूलानां पिप्पल्याश्चसमं रजः ।
वेल्लरीफलमूलोत्थस्वरसेनैव भावयेत् ॥

अमृतायारसेनानु ततः शुष्कं घृताप्लुतम् ।
निखनेत् घृतकुम्भस्थं करीषे बहुसञ्चये ॥

मासादुद्धृत्य तं लेहं यो वर्षमुपयोजयेत् ।
सहस्रायुः सजरसा सहसानाभिभूयते ॥

एकोभागो वेल्लर्याः फलमूलानां चूर्णस्य। द्वितीयः पिप्पलीरजसः । एतद्वेल्लरीफलमूलस्वरसेनैव भावयेत् । अनन्तरं गुळूचीरसेन भावयेत् । ततः शोषयित्वा घृतेनाप्लाव्य घृतकुम्भस्थं बहुसञ्चये करीषे गोमये निखनेत् । ततो व्याख्यासमम् । इति वृद्धदारककल्पः ॥

॥ कुष्ठस्य प्रयोग उच्यते ॥

कुष्ठचूर्णतुलां क्षौद्रघृतस्य द्वितुलान्विताम् ।
धान्यराशौ दिनशतं निहितामुपयोजयेत् ॥
सुगन्धिकायो दृक्श्रोत्रस्वरवर्णेष्वतीन्द्रियः ।
गतव्याधिजरो जीवेत् सप्तवर्षशतानि ना ॥

कुष्ठचूर्णपलशतं क्षौद्रपलशतं घृतपलशतं चैकीकृत्य धान्यराशौ दिनशतस्थितं ततः पुरुष उपयोजयन् सुगन्धिकायो भवति । दृगादिषु चातीन्द्रियोतिशयेनाश्चर्यभूतत्वात् । गतव्याधिजरश्च सप्तवर्षशतानि जीवेत् । इति कुष्ठस्य प्रयोगः ॥

एते च सर्वे प्रयोगाः कुटीप्रवेशमभिकृत्योक्ताः अतः स एवोपसंह्रियते ॥

कुटीप्रवेशःक्षणिनां परिच्छदवतां हितः ।
अतोन्यथा तु ये तेषां सौर्यमारुतिको विधिः ॥

क्षणिनामन्यप्रयोजनरहितानां परिच्छदवतां च कुटीप्रवेशो हितः । परिच्छदोनेकविधमुपकरणम् । अतो यथोक्तादन्यथा वैपरीत्येन ये क्षणिनः परिच्छदवन्तश्च न भवन्ति तेषां सौर्यमारुतिको विधिर्हितः । [कुटीप्रवेशः क्षमिणां परिच्छदवतां हितः इति चरकपाठः । कुटीप्रावेशिकवातातपिकयोर्विषयप्रदर्शनायाह । कुटीप्रवेश इत्यादि । क्षमिणां कृतक्षमाणां न पुत्रदारकुटुम्बधनपर्येषणापर्याकुलानामित्यर्थः । परिच्छदवतां सर्वोपकरणवतामिति यावत् । इति जर्जटः ।]

वातातपसहा योगा वक्ष्यन्तेऽतो विशेषतः ।
सुखोपचारा भ्रंशेपि ये न देहस्यबाधकाः ॥

वातातपसहा इत्यादि । सुबोधम् ॥

शीतोदकं पयःक्षौद्रं घृतमेकैकशो द्विशः ।
त्रिशः समस्तमथवा प्राक्पीतं स्थापयेद्वयः ॥

शीतोदकादिकमेकैकं वा द्वे द्वे वा त्रीणि त्रीणि वा समस्तमेव वा प्राक्पीतं वयः स्थापयेत् जीर्णत्वाद्रक्षेत ॥

हरीतकीमागधिकाक्षधात्री-
श्चूर्णीकृता लोहरजोविमिश्राः ।
सर्पिर्मधुभ्यामदतः शरीरं
कालाग्रदूती न जरा दुनोति ॥

हरीतक्यादिकं मधुसर्पिर्भ्यां सहा दतो भक्षयतः पुंसः शरीरं कालस्याग्रदूती जरा न दुनोति नोपतापयति ॥

हरीतकीमागधिकाविडङ्ग
शशाङ्कलेखामलकच्छवीनाम् ।
सितोपलातैलघृतान्वितानां
रोगा न लेढारमभिद्रवन्ति ॥

हरीतक्यादीनां सितोपलाद्यन्वितानां लेढारं लिहानं पुरुषं रोगा नाभिद्रवन्ति नाभिधावन्ति । आमलकच्छविरामलकफलं त्याजितास्थि ॥

त्रिफलामसनोदकेन पिष्टां
रजनीं पर्युषितामयःकपाले ।
मधुना मधुरां लिहन् हिनस्ति
स्थविमानं जरसं गदांश्च सर्वान् ॥

असनोदकेन बीजकजलेन पिष्टां त्रिफलां रजनीं रात्रिमयःकपाले शस्त्रपात्रे पर्युषितां मधुना माक्षिकेण मधुरामापादितमाधुर्यां लिहन् पुरुषः स्थविमादिकं हिनस्ति नाशयति ॥

खदिरासनयूषभाविताया-
स्त्रिफलाया घृतमाक्षिकप्लुतायाः ।
नियमेन नरा निषेवितारो
यदि जीवन्त्यजराः किमत्र चित्रम् ॥

खदिरादिकाथभावितायास्त्रिफलायाः प्रयोगः सुबोधः ॥

असनस्वरसेन भाविताना-
मभयानां सविडङ्गतण्डुलानाम् ।
मधुलोहरजोघृताप्लुतानां
न हि लेढारमभिद्रवन्ति रोगाः ॥

अभयानामादौ विडङ्गतण्डुलैर्योजनमनन्तरमसनोदकेन भावनं ततो मध्वादिभिर्योजनम् । सुबोधम् ॥

बीजकस्य रसमङ्गुलिहार्यं
शर्करामधुघृतं त्रिफलां च ।
शीलयत्सु पुरुषेषु जरत्ता-
स्वागतापि विनिवर्त्तत एव ॥

अङ्गुलिहार्यो योऽङ्गुल्या आहर्तुं शक्यते तम् । एवंविधं प्रयोगं शीलयत्स्वतिशयेनागतापि जरत्ता विनिवर्त्तते । वृत्तस्य नाम मनसि स्फुरत्येव ॥

दर्वीप्रलेपस्त्रिफलाकषायः
सितोपला तैलमधुप्रगाढः ।
सपिप्पलीनागरलोहरेणु-
स्तनोः सपत्नीं जरसं निहन्ति ॥

त्रिफलायाः कषायो घनत्वेन दर्वीप्रलेपः सितोपलादिभिः प्रगाढः पिप्पल्यादिभिर्युक्तस्तनोः शरीरस्य सपत्नीं जरसं निहन्ति ॥

फलत्रयत्र्यूषणचूर्णयुक्तां
द्राक्षां ससर्पिर्मधुशर्करां च ।
क्षीरानुपानं पुरुषा लिहन्तो
जीवन्ति निर्धूतजराविकाराः ॥

फलत्रयादिचूर्णयुक्तां सर्पिरादियुतां च द्राक्षां क्षीरानुपानं लिहन्तः पुरुषा निर्धूतजराविकारा जीवन्ति ॥

हरीतकीं सर्पिषिसम्प्रताप्य
समश्नतस्तत् पिबतो घृतं च ।
भवेच्चिरस्थायिबलं शरीरे
सकृत्कृतं साधु यथा कृतज्ञे ॥

सर्पिषि घृते हरीतकीं सम्प्रताप्यतामेव समश्नतस्तदेव च घृतमनुपिबतः शरीरे बलं चिरस्थायि भवति तथा यथा कृतज्ञे पुरुषे सकृदेकवारमेव कृतं यत् किञ्चित् साधु चिरस्थायि भवति ॥

आराञ्चितानां कलशं पुराणं
धात्रीफलानां मधुनश्च पूर्णम् ।
संवत्सरार्द्धं निहितं यवेषु
निषेवमाणो जरसं निहन्ति ॥

मृण्मयं पुराणं कलशमाराञ्चितानां बहुकालसञ्चितानां धात्रीफलानां माक्षिकस्य च पूर्णं यवराशौ संवत्सरार्द्धं षण्मासं निहितं निषेवमाणः पुरुषो जरसं निहन्ति । पूरणयोगेन षष्ठी । अत्र च यथाप्रयोगं गुणातिशयः ॥

धात्रीकृमिघ्नासनसारचूर्णं
सतैलसर्पिर्मधुलोहरेणु ।
निषेवमाणस्य भवेन्नरस्य
तारुण्यलावण्यमपि प्रणष्टम् ॥

धात्र्यादिकं निषेवमाणस्य तारुण्यं लावण्यं च प्रणष्टमपि भवति ॥

नवामलकशुक्तयो मधु घृतं रजश्चायसं
चतुष्टयमयोघटस्थमिति चूर्णितं वत्सरम् ।
क्रमेणलिहतः पयोनुपिबतश्च पथ्याशिनः
श्चिरंभवति जीवितंक्षयमुपैति पृथ्वी जरा ॥

नवानामामलकानां शुक्तयो दलानि मधु घृतमयोरजश्चेयेतच्चतुष्टयमर्थात् समं चूर्णकरणयोग्यं कालमयोघटे स्थितं ततस्तच्चूर्णितं क्रमेण स्तोकाभिवृध्या वत्सरं लिहतोऽनुपयः पिबतः पुंसः पथ्याशिनः सतो जीवितं चिरं भवति जरा च पृथ्वी विस्तीर्णापि क्षयमेति ॥

चूर्णं श्वदंष्ट्रामलकामृतानां
लिहन् ससर्पिर्मधुभागयुक्तम् ।
वृषस्थिरःशान्तविकारदुःखः
समाः शतं जीवति कृष्णकेशः ॥

विळङ्गसारं मधुकं च पिष्टं
भल्लातकक्काथमधुप्रगाढम् ।
अर्शांसि जन्तूंश्च जयत्युदीर्णान्
वह्निं च सन्धुक्षयति क्षणेन ॥

विळङ्गभल्लातकचित्रकाणां
गुडोत्तराणामभयान्वितानाम् ।
तैलेन चूर्णानि निषेवमाणान्
शरीरिणोनोपतपन्ति रोगाः ॥

श्वदंष्ट्रादिचूर्णं व्याख्यासमम् । विळङ्गसारादिकं विळङ्गभल्लातकादिकं च । गुडोत्तरं गुडाधिकम् । तैलेनोपयुज्यते ॥

विळङ्गभल्लातकनागराणि
येऽश्नन्ति सर्पिर्मधुसंयुतानि ।
जरानदीं रोगतरङ्गिणीं ते
लावण्ययुक्ताः पुरुषास्तरन्ति ॥

ये पुरुषा विडङ्गादिकमश्नन्ति ते जरानदीं लावण्ययुक्तास्तरन्ति । किम्भूतामाह । रोगतरङ्गिणीं रोगा एव ह्यवगाढत्वात्तरङ्गाः । जरोपशमे पुरुषस्य यतो लावण्यादिकं स्यात् ॥

विळङ्गकल्कं स्वरसेन धात्र्याः
क्षौद्रेण युक्तं च पिबेन्नरो यः ।
द्राक्षारसक्षौद्रपरिप्लुतं वा
विजित्य रोगान् स भवेच्छतायुः ॥

विळङ्गकल्कस्य धात्रीरसक्षौद्राभ्यां वा द्राक्षारसक्षौद्राभ्यां वा प्रयोगः ॥

चूर्णं समं मागधिकाकणानां
विडङ्गचूर्णेन सचित्रकेण ।
निषेवमाणो मधुतैलमिश्रं
वयःपरीणामजले न मज्जेत् ॥

मागधिकाकणानां पिप्पलीतण्डुलानां चूर्णं सचित्रकेण विडङ्गचूर्णेन समं चित्रकविडङ्गचूर्णसमं पिप्पलीचूर्णमित्यर्थः । वयःपरिणाम एव विनाशहेतुत्वाज्जलम् ॥

पुनर्नवस्यार्द्धपलं पलं वा
पिष्टं पिबेद्यः पयसार्द्धमासम् ।
मासद्वयं तत्त्रिगुणं समां वा
जीर्णोऽपि भूयः सपुनर्नवः स्यात् ॥

मूर्वाबृहत्यंशुमतीबलाना-
मुशीरपाठासनशारिबाणाम् ।
काळानुसार्यागरुचन्दनानां
वदन्ति पौनर्नवमेव कल्पम् ॥

पुनर्नवस्यार्द्धपलमित्यादि सुबोधम् । मूर्वाबृहत्यादिकं च ॥

शतावरीकल्ककषायसिद्धं
ये सर्पिरश्नन्ति सिताद्वितीयम् ।
तान् जीवितांध्वानमभिप्रपन्नान्
न विप्रलुम्पन्ति विकारचोराः ॥

ये शतावरीकल्ककषायसिद्धं सर्पिः सितया सहाश्नन्ति तान् जीविताध्वानमायुरेव पन्थानमभिप्रपन्नान् प्राप्य विकारचोरा न विप्रलुम्बन्ति न लुण्ठयन्ति ॥

पीताश्वगन्धा पयसार्द्धमासं
घृतेनतैलेन सुखाम्बुना वा ।
कृशस्य पुष्टिं वपुषो विधत्ते
बालस्यसस्यस्य यथा सुवृष्टिः ॥

पय आदीनामन्यतमेनार्द्धमासमश्वगन्धा पीता कृशस्य बालस्यवपुषस्तथा पुष्टिं विधत्ते यथा सस्यस्य सुवृष्टिः ॥

दिने दिने कृष्णतिलप्रकुञ्चं
समश्नतः शीतजलानुपानम् ।
पोषः शरीरस्य भवत्यनल्पो
दृढीभवन्त्यामरणाच्च दन्ताः ॥

शिलाजतुक्षौद्रविडङ्गसर्पि-
र्लोहाभयापारदताप्यभक्षः ।
आपूर्यते दुर्बलदेहधातु-
स्त्रिपञ्चरात्रेण यथा शशाङ्कः ॥

दिनेदिन इत्यादि प्रयोगद्वयं व्याख्यासमम् । प्रकुञ्चः पलम् । पारदं शिलाजतु ताप्याभ्यां मर्दितुं योग्यं भवति । यथा शशाङ्कश्चन्द्रस्त्रिपञ्चरात्रेण पक्षेणापूर्यते तद्वदसावपि ॥

मधुमधुरसा लाजा भार्ङ्गी मधूकशतावरी
कमलकुसुमत्वक्षीरीभिःसमं जतु पार्वतम् ।
प्रचुरहविषालेहं लीढ्वा समृद्धसितोपलं
शिथिलजरसोमन्दातङ्का भवन्ति चिरायुषः ॥

मध्वादीनामेकोभागो द्वितीयशिलाजतुन इत्येतल्लेहं प्रचुरघृतं समृद्धशर्करं च लीढ्वा पुरुषाशिशिथिलजरसः स्वल्पजराः स्वल्पव्याधयश्चिरजीविताश्च भवन्ति ॥

गायत्रीशिखिशिंशपासनशिवा
वेल्लाक्षकारुष्करान्
पिष्ट्वाष्टौदशषड्गुणेम्भसि धृतान्
खण्डैः सहायोमयैः ।
पात्रे लोहकृते त्र्यहं रविकरै-
रालोळयन् पाचये-
दग्नौ चानुमृदौ सलोहशकलं
पादस्थितं तत् पचेत् ॥

पूतस्यांशः क्षीरतोंशस्तथांशौ
भार्ङ्गीक्षियासात् पिवर्यास्त्रयोंशाः ।
अंशाश्चत्वारस्तत्रहय्यङ्गवीना-
देकीत्येतत् साधयेत् कृष्णलौहे ॥

विमलया सितया मधुनाथवा
युतमयुक्तमिदं यदि वा घृतम् ।
स्वरुचिभोजनपानविचेष्टितो
भवति ना पलशः परिशीलयन् ॥

श्रीमान् निर्धूतपाप्मा वनमहिषबलो
वाजिवेगः स्थिराङ्गो
केशैर्भृङ्गाङ्गनीलैर्मधुसुरभिमुखो
नैकयोषिन्निषेवी ।
वाक्सिद्धाग्नीसमृद्धः सुपटु हुतवहो
मासमात्रोपयोगा-
द्धत्तेसौ नारसिंहं वपुरनलशिखा-
तप्तचामीकराभम् ॥

गायत्र्यादिना नारसिंहघृतम् । गायत्री खदिरः, शिखी चित्रकः, असनं बीजकम् । शिवा हरीतकी, अक्षकं विभीतकम्, एतान्यष्टावौषधानि समानि पिष्ट्वा एतेभ्यो मानेन षोडशगुणेऽम्भस्यौषधसमैश्च शस्त्रैर्धृतानि त्र्यहमादित्यतापेनालोळयन् चालयन् पाचयेत् । चतुर्थेह्नि तथाविधमेव चतुर्भागशेषं तन्मृदुनाग्निना पचेत् ततः परिपूतं क्वाथं गृहीत्वाऽनेन समो भागो क्षीरस्य देयः । क्षीरयुक्तेन तेनैव समो भृङ्गस्वरसात् भागः । क्वाथात्त्रिगुणः पिवर्याः शतावर्याः स्वरसः क्वाथाच्चतुर्गुणं हय्यङ्गवीनं ह्यो दोहस्य विकारो नवनीतम् । कृष्णलौह इति शस्त्रपात्रे सिद्धमतिशुद्धया शर्करया वा माक्षिकेण वा युतं प्रयोगस्य बलस्य वार्थे । अत्र च भोजनादिकं स्वरुच्या । पलश इति यथासामर्थ्यं मात्रा । भृङ्गाङ्गं भ्रमरशरीरम् । मधु

माद्वीकं तस्य पानात् सुरभिमुखः । असौ प्रयोक्ता पुरुषस्तु नारसिंहं वपुर्द्धत्ते । किम्भूतमाह । अनलशिखाभिरग्निज्वालाभिस्तप्तं यच्चामीकरं सुवर्णं तदाभम् ॥

हविरिदमतिप्रभावं
स्वमिववपुर्निर्मितं नृसिंहेन ।
नश्यन्ति यतो भीता
व्याध्याधिजरासुरा दूरात् ॥

इदमतिप्रभावं हविर्घृतं स्वमिव शरीरं भगवता नरसिंहेन निर्मितम् । यतो घृताद्व्याध्याद्यसुरा दूरान्नश्यन्ति पलायन्ते । यथा हि नरसिंहवपुषोऽसुरा दूरान्नश्यन्ति तथैवास्मात् घृताद्व्याध्यादय इत्यर्थः । आधयो मनोरोगाः ॥

भृङ्गप्रवालानमुनैवभृष्टान्
घृतेन यः खादति यन्त्रितात्मा ।
विशुद्धकोष्ठोऽसनसारसिद्ध-
दुग्धानुपस्तत्कृतभोजनार्थः ॥

मासोपयोगात् ससुखी जीवत्यब्दशतत्रयम् ।
गृह्णाति सकृदप्युक्तमविलुप्तस्मृतीन्द्रियः ॥

योऽनेनैवकल्पेन हय्यङ्गवीनविधानेन सिद्धं तैलमुपयोजयेत् । सतानेवानन्तरोक्तान् गुणानाप्नोति कृष्णकेशश्च जायते भवति ॥

काश्मर्याणांतुलांमासं स्थितांमधुघृतोक्षिताम् ।
उपयुज्य पयोन्नाशी चिरं जीवति कान्तिमान् ॥

काश्मर्याः फलानां तुलापलशतं या मधुघृताभ्यां सिक्ता सती मासं स्थिता तां पयोन्नाशी सन्नुपयुज्य चिरं जीवति कान्तिमांश्च भवति ॥

उक्तानीत्यादिना रसायनान्युपसंह्रियन्ते ॥

उक्तानि शक्यानि फलान्वितानि
युगानुरूपाणि रसायनानि ।
महानुशंसान्यपि चापराणि
प्राप्त्यादिकष्टानि न कीर्तितानि ॥

तान्येतानि रसायनान्युक्तानि यान्यास्मिन् कलियुगे कर्तुं शक्यन्ते फलान्वितानि च भवन्ति । अपराणि तु येषां महान्ति फलानि शंसितानि प्राप्त्युपयोगाधिकारादिना यतोऽतिकष्टान्यतो न कीर्तितानि ॥

अमानुषाणामतिविस्मयानां
सत्कर्मणां यद्यपि तानि हेतुः ।
समूलकाषं तु कषन्ति देहं
भ्रंशाद्विधेस्ते न विवर्जितानि ॥

यान्यप्यमानुषाणां मनुष्यासम्भविनामत्याश्चर्याणामुत्कृष्टानां योगादीनां कर्मणां यद्यपि हेतुस्तथापि विधेः शास्त्रोक्तस्य भ्रंशाद्देहं समूलकाषं कषन्ति हिंसन्ति तेन हेतुना तान्यत्र विवर्जितानि ॥

युगस्वभावादित्यादिना रसायनफलानामलाभाशङ्का निवार्यते ॥

युगस्वभावाद्यदिचौषधीनां
क्रियासुशक्तिः परिकल्प्यतेल्पा ।
आयुर्बलादिष्वपि सा तथेति
यत्नान्निषेव्याणि रसायनानि ॥

यदि च जनेन युगस्वभावादौषधीनामल्पाशक्तिः क्रियासु परिकल्प्यते तर्ह्यायुर्बलादि-

ष्वपि सा तथेत्यल्पैव । तस्माद्रसायनानि द्रव्याणि यत्नान्निषेव्याणि । यदि हि कृतयुगसममेवाद्यापि आयुःस्यादौषधीनां च युगस्वभावादल्पवीर्यत्वं ततो युज्येत रसायनानामनिषेवणम् । यावता यथौषधयोल्पवीर्यास्तथायुरादीन्यपि सुतरामिति ॥

नचौषधीनामपिसर्वथैव
प्रभावहानिः परिकल्पनीया ।
फलंमयात्यू र्वमधस्त्रिवृत्तु
प्रत्यक्षतः कस्य न सिद्धमेतत् ॥

न च सुधिया औषधीनां प्रभावहानिः सर्वथेत्यवश्यं परिकल्पनीया । यन्मदनफलं वामयति त्रिवृत्तु विरेचयतीत्येवमादीन्यपि कस्य प्रत्यक्षसिद्धं न भवति ॥

अदेशकालेत्यादिना श्लोकद्वयेन रसायनानां सम्यग्विधाने यत्नः प्रदर्श्यते ॥

अदेशकालोपहितान्यसात्म्या-
न्यत्युष्णतीक्ष्णानि यथौषधानि ।
नाशं नयन्ते सहसैव देहं
सम्यक्प्रयुक्तानि तथैव वृद्धिम् ॥
जित्वा तस्मादिन्द्रियादीन् सुदुष्टान्
कालोपेतः श्रद्दधानो यथावत् ।
आयुःप्रज्ञातेजसां यद्विवृध्यै
वीर्योपेतं शीलयेदौषधं तत् ॥

औषधान्यदेशकालोपयुक्तादीनि यथैव सहसा देहं नाशं नयन्ति तथैव सम्यक् प्रयुक्तानि सहसा वृद्धिं नयन्ति प्रापयन्ति । यत एवं तस्मादसम्यगौषधविधाने विशेषहेतून् सुदुष्टानिन्द्रियादीन् शत्रून् जित्वा वशे कृत्वा काले श्रद्दधानः श्रद्धावान् यदौषधमायुरादीनां विवृध्यै वीर्ययुक्तं भवति तदेव यथावच्छीलयेत् ॥

उत्साहवीरैरित्यादिना रसायनप्रयोगे नियमपरत्वमुच्यये ॥

उत्साहवीरैरपि सर्वकालं
नरैरगम्यानि तपोदरिद्रैः ।
महार्णवानामिव दुस्तराणां
पाराण्यपाराणि रसायनानाम् ॥

यथा तपसा दरिद्रैः पुरुषैरुत्साहवीरैरपि दुस्तराणां महार्णवानामपाराणि पाराणि सर्वकालमगम्यानि भवन्ति तथैवापाराण्यनन्तानि रसायनानाम् । [ उत्साहधीरैरिति च पाठः ॥ ]

रसायनानामुपयोगसम्पदा
कृतप्रसादैर्मलदोषधातुभिः ।
स्थिरं शरीरं क्रियते शरीरिणां
कुलं यथा सत्पुरुषैरधिष्ठितम् ॥

रसायनानां पथ्यामलकादीनां य उपयोगस्तस्यसम्पदा परिपूर्णतया कृतप्रसादैर्मलदोषधातुभिः कर्तृभिः शरीरिणां शरीरं स्थिरं क्रियते तथा यथा सत्पुरुषैराधिष्ठितं कुलम् ॥

दान्तेन्द्रियेण शास्त्रार्थं यथावदनुतिष्ठता ।
कियद्वा दीर्घदर्शित्वं नेन्द्रत्वमपि दुर्लभम् ॥

अथवा शास्त्रोक्तविधानेन रसायनफलावाप्तिः कियन्मात्रा । दान्तेन्द्रियत्वादियुक्तेन पुरुषेण इन्द्रत्वमपि न दुर्लभम् ॥

रसायनविधिभ्रंशाज्जायेरन् व्याधयो यदि ।
यथास्वमौषधं तेषां कार्यं मुक्त्वा रसायनम् ॥

यदि च रसायनस्यविधिभ्रंशाज्ज्वरादयो व्याधयो जायेरन् ततस्तेषामुत्पन्नानां व्याधीनां प्रकृतं रसायनं मुक्त्वा स्वं स्वमौषधं कार्यम् ॥ अध्याक्रान्तेत्यादिना जराविनाशप्रसङ्गेऽम्ला-दीनां सदैवोपयोगप्रतिषेधः क्रियते ॥

अध्याक्रान्ताऽयेम्लपटुक्षारकटूष्णै
र्द्रव्यैस्तीक्ष्णैः सन्निहिता तेषु जरत्ता ।
सन्धुक्ष्योग्निस्तैरुपजाते च विवर्ज्या
योगास्तेऽग्नौ धातुसमृद्धेः स हि मूलम् ॥

अम्लादिगुणैर्द्रव्यैर्येध्याक्रान्तास्तेषु जरत्ता जरासन्निहिता जरतोभावो जरत्ता । तैरम्लादिभिः क्रमेणाग्निः सन्धुक्ष्योऽर्थान्मिन्दीभूतः सन् । उपजातेचाग्नावाम्लादयो योगा वर्ज्याः । अतश्चाग्निः सन्धुक्ष्योयतोधातूनां समृद्धेः सम्यग्वृद्धेर्मूलं सः ॥

आयुर्योगाः साध्वपियुक्ता मृदुवह्नौ
नैरर्थक्यं यान्ति कृतघ्नेष्वुपकाराः ।
दीप्तेवह्नौ ते तु गुणौघैरपि तुच्छा
विस्तीर्यन्ते पात्रनिसृष्टा इव भोगाः ॥

मृद्वग्नौ तु पुरुषे नानाविधा योगाः साधु कृत्वापि युक्तास्तथा निरर्थकतां यान्ति यथा कृतघ्ने पुरुषे प्रयुक्ता उपकाराः । ते तु प्रयोगास्तुच्छाः । स्वल्पा अपि दीप्ते वह्नौ तथा विस्तीर्यन्ते यथा सत्पात्रे निसृष्टादत्ता भोगाः ॥

सत्यवादिनमक्रोधमध्यात्मप्रवणेन्द्रियम् ।
शान्तं सद्वृत्तनिरतं विद्यान्नित्यरसायनम् ॥
गुणैरेभिः समुदितः सेवते यो रसायनम् ।
सनिर्वृतात्मा दीर्घायु परत्रेह च मोदते ॥
शास्त्रानुसारिणीचर्या चित्तज्ञाः पार्श्ववर्तिनः ।
बुद्धिरस्खलितार्थेषु परिपूर्णं रसायनम् ॥

सत्यवादिनमित्यादि सुबोधम् । [अध्यात्मप्रवणानियोगप्रवणानीन्द्रियाणि यस्य तम् । एभिः सत्यवचनादिभिः समुदितः संयुक्तः परत्रान्यजन्मनि । अर्थेषु शब्दादिषु इति जज्झटः ॥ ]

गवा मृजुत्वेन कृतानुकारै
रनन्यवागाशयदेहचेष्टैः ।
स्थिरेन्द्रियायुर्ज्वलनैः सुशीलैः
सुवृद्धगोपैः समधिष्ठितेषु ॥
प्राज्याज्यदुग्धौषधिपादपेषु
हुम्भारवैर्वल्गितवत्सकेषु ।
मठप्रवेशेनविनापिसिद्धिं
व्रजन्ति गोष्ठेषु रसायनानि ॥

॥ इत्युत्तरे एकोनपञ्चाशोऽध्यायः ॥

गवामित्यादि । सुष्ठ्वतिशयेन वृद्धैर्गोपैः समधिष्ठितेषु गोष्ठेषु रसायनानि सिद्धिं व्रजन्ति । किम्भूतैर्गोपैरित्याह ऋजुत्वेन वा मस्वभावत्वेन गवां कृतानुकारैस्तथा अनन्यवागादिभिः येषामाशयेन चित्तेन समा वाग्देहचेष्टाचेत्यर्थः । तथा स्थिरेन्द्रियत्वादियुक्तैः सुशीलैः

साधुभिर्वृद्धगोपैः । किम्भूतेषु गोष्ठेष्वित्याह । प्राज्याज्यादिषु प्राज्यं प्रभूतमाज्यादि येषु तथा हुम्भारवैर्गोमुखाह्वानैर्वल्गितावत्सकायेष्विति । स्मिन्नध्याये श्लोकशतानि सप्तपञ्चादशदधिकानि ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायामुत्तरे एकोनपञ्चाशोध्यायः ॥

॥ इति सप्तमं रसानाख्यमङ्गं सम्पूर्णम् ॥

# पञ्चाशोऽध्यायः ॥

## वाजीकरणविधिः ।

उभयलोकहितत्वादेकान्तस्वस्थोपयोगित्वान्मङ्गलत्वाच्च तन्त्रे वाजीकरणाख्यस्याष्टमस्याङ्गस्यनिर्देशः । तत्प्रयोगदर्शनार्थमध्याय आरभ्यते ॥

**अथातो वाजीकरणविधिं नामाध्यायं व्याख्यास्यामः इति यः ॥**

वाजीकरणमित्यादिनास्य भङ्ग्या प्रयोजनमुच्यते ॥

**वाजीकरणमन्विच्छेत् सततं विषयी पुमान् ।**
**तुष्टिः पुष्टिरपत्यं च गुणवत्तत्र संश्रितम् ।**
**अपत्यसन्तानकरं यत्सद्यः सम्प्रहर्षणम् ॥**

यः पुमान् विषयीविषयेषु शब्दादिषु देहीचत्तोपयोगिषु हेतुषु सक्तः स वाजीकरणमुपायलक्षणमन्विच्छेत् । तत्र हि वाजीकरणे पुष्ट्यादिकं संश्रितम् । [ वाजीकरणमित्यादि । वाजीवाश्वसधर्मा येन क्रियते तं अन्विच्छेत् कुतोनुरसायनात् । तस्य हि समुपचितधातोः प्रधानधातुपरिक्षयो माभूदिति । पुरुषग्रहणं बालात्यन्तवृद्धानेंरासार्थं न पुनः स्त्रीषण्डव्युदासार्थं तेषां वाजीकरणा प्राप्तेः । सततग्रहणं सदा सेवनं ज्ञापयति । यथा रसायनं प्रयुक्तं सर्वधातूनां पुष्टि मा दधाति नैवं वाजीकरणं तद्धि सततमुपयुज्यमानमाहारवच्छुक्रधातुवृद्धि मा दधातीति । प्रवर्त्तकं च धर्मं स्वर्गप्राप्तिलक्षणमाश्रित्यैतदुच्यते । यन्निवृत्तिकृते हि स उपदेशः । कोशकारो यथांशूनुपादत्तेवधप्रदान् । तथाग्निकल्पानर्थान् ज्ञो ज्ञात्वा तेभ्यो निवर्त्तत इति । नैश्रेयसिकं धर्ममाश्रित्य ब्रह्मचर्योपदेशः अयं चाभ्युदयिकमिति न परस्परविरोधाशङ्केति । इति जर्ज्झटः ॥ ]

॥ वाजीकरणं किमुच्यत इत्याह ॥

**वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः ।**
**भवत्यतिप्रियः स्त्रीणां येनयेनोपचीयते ।**
**तद्वाजीकरणं तद्धि देहस्यौजस्करं परम् ॥**

येन हेतुभूतेन पुरुषो वाजीवाश्वइवा प्रतिहतोऽङ्गना याति । येन च स्त्रीणामतिप्रियो भवति येन च धातुरुपचयं प्राप्नोति । तद्वस्तु वाजीकरणमित्युच्यते तद्धि परं देहस्यौजस्करम् ॥

साराहीत्यादिना स्त्रियाः प्रियत्वं प्रयोजनवतित्युच्यते तस्मादप्रियं भर्त्तारंकुलजापि स्त्री कदाचिच्छीलं कलङ्कयति ॥

सारो हि जीवलोकस्य स्त्री स्त्रीगुणसमन्विता ।
स्त्रियः साद्ध्व्यःप्रसुवते नरान् गुणमयानिव ॥
गोत्रवृद्धिकराह्येता गृहिण्यो गृहदेवताः ।
गृहं हि हीनमेताभिर्न्नश्रीमदपि शोभते ॥

जीवलोकस्यैषसारो यत् स्त्री स्त्रीगुणसमन्विता भवतीति । साद्ध्व्यः स्त्रियोगुणैरिवकृतान् नरान् प्रसुवते । एता इति साद्ध्व्यः स्त्रियः । गृहिण्यो भार्याः ॥

न तु ता अपि शोभन्ते जरसानुगता इव ।
पुंयोगेन विना स्त्रीणां स हि संवननं परम् ॥

ता अपि स्त्रियः पुंयोगेन विना तु तथा न शोभन्ते यथा जरसाऽनुगताः । स हि पुंयोगः स्त्रीणां परं संवननं वशीकरणम् । (पुरुषरहिताः स्त्रियः स्वतन्त्रत्वान्न इत्यर्थः ॥ )

वाजीकरणनित्यस्य कामं कामं सिषेविषोः ।
न शरीरमवाप्नोति न वा रतिरतिः क्षयम् ॥

यः पुरुषो वाजीकरणनित्यस्तस्य काममिच्छया कामं स्त्रीसङ्गमं सिषेविषोरपि शरीरं क्षयं न प्राप्नोति । रतिरतिश्च क्षयं न नावाप्नोति ॥

अच्छायः पूतिकुसुमः फलेनरहितोद्रुमः ।
यथैकश्चैकशाखश्च निरपत्यस्तथा नरः ॥

द्रुमो यथा अच्छायत्वादियुक्तः परिहार्यो निरुपकारश्च भवति तथैव निरपत्यो नरः ॥

अदृष्टपुत्रपौत्रस्य कुलतन्त्वन्तवर्त्तिनः ।
संसारसुखबाह्यस्य कीदृशं नाम जीवितम् ॥

अथवा येन पुत्रपौत्रमदृष्टं सः कुलतन्तोरन्ते वर्तते अत एव च संसारसुखात् बहिर्भूतस्तस्ये दृशस्य कीदृशं नाम जीवितं तज्जीवितमेव न भवतीत्यर्थः ॥

असम्बन्धोह्यपुत्रस्य नित्यमेव परः परः ।
सीदत्यस्यावसाने च गृहं सुस्थेप्यनायकम् ।
अतो वाजीकरायोगा निषेव्याः शुक्रवर्द्धनाः ॥

अपुत्रस्य हि परोन्यो विशिष्टेन सम्बन्धेन रहितो नित्यमेवपरः न तद्वित्तस्याश्रयोऽसाधारणसम्बन्धाभावादित्यर्थः । अस्य चापुत्रस्यावसाने वयोन्ते सुस्थेपि । धनादिसद्भावेप्यनायकं गृहमवसीदति । यत एव मतः शुक्रस्यवर्द्धना वाजीकरा योगा निषेव्याः ॥

कल्यस्योदग्रवयसो वाजीकरणसेविनः ।
सर्वेष्वृतुष्वहरहर्व्यवायो न निवार्यते ॥

कल्यस्यनीरोगस्य प्रत्यग्रवयसो वाजीकरणसेविनश्च पुंसः सर्वेषु ऋतुषु षट्स्वपि अहरहर्दिनेदिने व्यवायो मैथुनं न निवार्यते न निषिध्यते ॥

चिन्ताजराभ्यांशुक्रं तु व्याधिभिःकर्मकर्शनात् ।
क्षयंगच्छत्यनशनात् स्त्रीणां चातिनिषेवणात् ॥
शुक्रक्षयात् भयाच्छोकादविस्रम्भादसेवनात् ।
अतिहर्षादातिस्थौल्यान्मलोपचयतः श्रमात् ॥
स्त्रीणामकौशलादोषदर्शनादभिचारतः ।

मेढ्रामयात् सुमहतः क्रोधतोऽश्रमेकीर्त्तनात् ।
तृप्तस्यापि स्त्रियो गन्तुं न शक्तिरुपजायते ॥

चिन्तादिभिः शुक्रं क्षयं याति सञ्चितमप्यपचीयते । कर्मकर्शनाद्भ्रमनादिकर्मकृतेन कर्शनेन । शुक्रक्षयाद्धातुस्रोतःस्थितस्य शुक्रस्य क्षयात् शुक्राशयस्थितं शुक्रमुपक्षीयते । असेवा स्त्रीणाम् । स्त्रीणामकौशलं रहस्यव्युत्पत्तिः । दोषप्रदर्शनं स्त्रीणामेव । अक्षीणेऽपि शुक्रे तृप्तस्यापि पुंसः स्त्रियो गन्तुं शक्तिर्नोपजायते ॥

नहि जातबलाः सर्वे नराश्चापत्यभागिनः ।
बृहच्छरीराबलिनः केचिन्नारीषु दुर्बलाः ॥
सन्तिचाल्पाश्रयाः स्त्रीषु बलवन्तो बहुप्रजाः ।
नराश्चटकवत्केचिद्व्रजन्ति बहुशः स्त्रियः ॥
गजवच्चप्रसिञ्चन्ति केचिन्न बहुगामिनः ।
केचित्प्रयत्नैर्वाह्यन्ते वृषाः केचित्स्वभावतः ॥

नहीत्यादिना स्त्रीगमनशक्तेरनियमं दर्शयति । सुबोधम् । प्रयत्नेन रतिवाजीकरणादिभिः । [सबलाएवापत्यभागिनो जातबला अपि नापत्यभागिनः अजातबला अप्यपत्यभागिन इति प्रतिपादयन् सर्वान् बलविशेषानाह । नहि जातबला इत्यादि । बृहच्छरीराये मेदस्विनस्तेऽप्यल्पव्यवायाः । अल्पाश्रया अपि ये शुक्रसारा बलवन्तो बहुप्रजाः । केचिन् प्रयत्नैर्वाह्यन्ते औपनिषदादिकोक्तैः । वृषाः केचित् स्वभावत प्रकृत्यैवेत्यर्थः । इति जर्ज्जटः ॥ ]

तस्मात्प्रयोगान् वक्ष्यामि दुर्बलानां बलप्रदान् ।
सुखोपभोगान् बलिनां भूयश्च बलवर्द्धनान् ॥

तस्माद्ये दुर्बलास्तेषां लबप्रदादिगुणान् प्रयोगान् वक्ष्यामि बलिनां च भूयो बलवर्द्धनान् सुखोपभोगांश्च । [इदमत्रचिन्त्यते श्लेष्मप्रकृतेर्गुरुस्निग्धमधुरशीतानि सामान्यात् कफवृद्धिमा दधति कथं तेषां सुखोपभोगतेति । अत्र विधास्यत्यत्रैव । स्रोतस्सुशुद्धेष्वित्यादि यावत् क्लिष्टे यथावाससिरागयोगा इति । एतदुक्तं भवति कृतसंशोधनस्यापहृतकफपित्तस्यैधिताग्नेर्न्न दोषाय वाजीकरणयोगा इति उक्तं च क्षीणदोषस्य चापथ्यं नावश्यं दोषकृत् भवेदिति । अतिमन्दाग्नेस्त्वनिर्वाहितदोषस्यापरिणतानि दोषकृन्तिनान्यथा । योऽपि तत्र सामान्यात् कफलवः सोऽपि व्यवायादपचयिते । यथोक्तादधिकं निस्सृतं व्याधये सम्पद्यतएव । इति जर्ज्जटः ॥ ]

अथ स्निग्धविशुद्धानां निरूहान् सानुवासनान् ।
घृततैलरसक्षीरशर्करा क्षौद्रसंयुतान् ॥
योगविद्योजयेत् पूर्वं क्षीरमांसरसाशिनाम् ।
ततो वाजीकरान्योगान् शुक्रापत्यबलप्रदान् ॥

अथेत्यादि । प्रयोगात् पूर्वमेव स्निग्धस्यानन्तरं वमनविरेचनाभ्यां शुद्धस्य निरूहाननुवासनयुक्तान् घृतादियुक्तांश्च क्षीरमांसरसाशिनां योजयेत् ततोनन्तरं शुक्रादिप्रदान् वाजीकरान् योगान् । [अथ स्निग्धविशुद्धानामित्यादिनै तदुक्तं भवति । शुद्धानामेधिताग्नीनां यथाबलं प्रयुक्तं वाजीकरणं यथावत् सिध्यत्यन्यथानर्थाय । वस्तयो घृतादिसहिताः क्षीरमांसरसाशिनां विधेयाः । इति जर्ज्जटः ॥ ]

शरेक्षुकुशकाशानां विदार्या वीरणस्य च ।
मूलानि कण्टकार्याश्च जीवकर्षभकौ बलाम् ॥
मेदे द्वे द्वे च काकोल्यौ सूर्पपर्ण्यौ शतावरीम् ।
अश्वगन्धामतिबला मात्मगुप्तां पुनर्नवाम् ॥
वीरां पयस्यां जीवन्तीं मृद्धिं रास्नां त्रिकण्टकम्
मधुकं शालिपर्णीं च भागां स्त्रिपलिकान् पृथक् ।
माषाणामाढकंचैतद्द्विद्रोणे साधयेदपाम् ।
रसेनाढकशेषेण पचेत्तेन घृताढकम् ॥
दत्त्वाविदारी धात्रीक्षुरसानामाढकाढकम् ।
घृताच्चतुर्गुणं क्षीरं पेष्याणीमानि चावपेत् ॥
वीरांस्वगुप्तांकाकोल्यौयष्टींफल्गुद्विपिप्पलीम् ।
द्राक्षां विदारीं खर्जूरं मधुकानि शतावरीम् ॥
तत्सिद्धपूतं चूर्णस्य पृथक्प्रस्थेन योजयेत् ।
शर्करायास्तुकायाश्च पिप्पल्याः कुडुवेन च ॥
मरिचस्यप्रकुञ्चेन पृथगर्द्धपलोन्मितैः ।
त्वगेला केसरैः श्लक्ष्णैः क्षौद्राद्विकुडुवेन च ।
पलमात्रं ततः खादेत् प्रत्यहं रसदुग्धभुक् ।
तेनारोहति वाजीवत्कुलिङ्गइव हृष्यति ॥

शरादीनां कण्टकार्यन्तानां मूलानि । व्याख्यासमम् । शरः काण्डेक्षुः, वीरणमुशीरम् । वीराक्षीरविदारी, पयस्या क्षीरिका, त्रिकण्टको गोक्षुरकः । फल्गु काकोदुम्बरिकाफलम्, क्षौद्रस्य द्विकुडुवः षोडशपलानि । कुलिङ्गश्चटकः ॥

माषात्मगुप्ताबीजानामाढकं प्रसृतोन्मितम् ।
मेदाश्वगन्धर्द्धिवरी वीरा यष्टी द्विजीवकम् ॥
शूर्पेऽपां विपचेत्तेन पादशेषेण पाचयेत् ।
विदारीक्षुरसप्रस्थद्वयेनसदृशेन च ॥
सर्वैः क्षीरेण हविषो नवात् प्रस्थं शृतेत्र च ।
सिता क्षौद्रसिताख्यानां पृथग्दद्याच्चतुष्पलम् ॥
पलं कणात् पुरोभक्तं लिहंस्तत्पलपूर्वकम् ।
तरुणीष्वतृप्तासुप्रसभं रासभायते ॥

माषात्मगुप्ता बीजानां मिश्रीकृतानामाढकम् । मेदादिकं प्रसृतोन्मितमिति । सर्वैरिति क्वाथ विदारीक्षुरसैः सदृशेन समेन क्षीरेण । सुबोधम् । अस्य योगस्य भक्तात् पूर्वं प्रयोगः । पलपूर्वकं लिहं स्तत्घृतं पुरुषो याः पुरुषे अतृप्तास्तरुण्यस्तासुरासभायते रासभ इवाचरति ॥

मेदादिभिश्चकर्षांशैः शृतं बाष्कयणं पयः ।
सशर्कराक्षौद्रघृतं शुक्रवृद्धिकरं परम् ॥

मेदादिभिः पूर्वक्वाथनिर्दिष्टैर्जीवकान्तैः कर्षांशैर्बाष्कयणं पयः शृतं शर्करादियुक्तं परं शुक्रवृद्धिकरम् ॥

पयसा पायसस्तेन माषकण्डूकरीफलैः ।
वृष्यो वेगकरःसिद्धः सघृतक्षौद्रशर्करः ॥

तेन च मेदादिसिद्धेन पयसा माषैः कपिकच्छूफलैश्च पायसः सिद्धो घृतादियुक्तो वृष्यो वेगकरश्च ॥

श्वदंष्ट्राया विदार्याश्चरसे क्षीरचतुर्गुणे ।
घृताढ्यः साधितो वृष्यो माषषाष्ठिकपायसः ॥

क्षीरचतुर्गुणे श्वदंष्ट्रादिरसे घृताढ्यः साधितो माषषाष्टिकपायसो वृष्यः शुक्रपुष्टिकरः ॥

मधूलिकामाषपर्णी सिता शृङ्गाटकं यवाः ।
स्वगुप्तामूलयष्ट्याह्व विदारीक्षुरकाः समाः ॥
सप्रियालाः कृतं चूर्णं पृथङ्मध्वाज्यषट्गुणम् ।
पादाभ्यामस्पृशन्भूमिं लिहन्काल्यमतःपिचुम्
लभते बलमुत्साहं स्त्रीश्च याति कुलिङ्गवत् ॥

मधूलिकादयः प्रियालान्ताः समास्तैश्चूर्णं पृथगिति मधुना षट्गुणेनाज्येनापि षट्गुणेन-युक्त मतःपरं पिचुं कर्षं काल्यं प्रभाते लिहन् पादाभ्यां भूमिमस्पृशन् पुरुषो बलमुत्साहं च लभते कुलिङ्गवच्च स्त्रीर्याति । मधूलिका यष्टि-मधुकम् । कुलिङ्गश्चटकः ॥

स्वगुप्ता क्षीरकाकोली विदारी जीवकद्वयम् ।
तिलाः सुलुञ्चिता भृष्टाः शर्कराज्यमधुप्लुतम् ।
तच्चूर्णप्रसृतंलीढ्वा गच्छतिप्रमदाशतम् ॥

स्वगुप्तादिकं सुलुञ्चितास्त्याजितत्वचो भृष्टास्तिलाश्चेत्यन्तमेतच्छर्कराद्याप्लुतं चूर्णं तस्य प्रसृतं पलद्वयं लीढ्वा प्रमदाशतं गच्छति ॥

प्रसृतं माषचूर्णस्य धात्रीस्वरसभावितम् ।
विदारी रजसोवापि लिहन् मधुघृतद्रुतम् ।
क्षीरानुपश्चटकवद्दशकृत्वो व्रजेत् स्त्रियः ॥

माषचूर्णस्य वा विदारीचूर्णस्य वा प्रसृतं धात्रीरसेन भावितं मधुघृताभ्यां लिहन् क्षीरा-नुपःसन् दशकृत्वो दशवारान् चटकवत् स्त्रियो व्रजेत् ॥

चूर्णंविदार्या बहुशः स्वरसेनैव भावितम् ।
क्षौद्रसर्पिर्युतं लीढ्वा प्रमदादशगच्छति ॥

विदारीचूर्णलेहः सुबोधः । बहुशोनेकशः । स्वरसेन विदारी स्वरसेन ॥

कृष्णा धात्रीफलरजः स्वरसेनैवभावितम् ।
शर्करामधुसर्पिर्भिर्लीढ्वायोऽनुपयः पिबेत् ।
स नरोऽशीतिवर्षोऽपि युवेव परिहृष्यति ॥

कृष्णाफलानां धात्रीफलानां च चूर्णं स्व-रसेन कृष्णा धात्रीफलरसेन सुभावितं सत् शर्करादिभिर्लीढ्वायः पयोऽनुपिबेत् सोऽशीति-वर्षोपियुवेव परं हर्षं पाप्नोति ॥

कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ।
पयोनुपानं यो लिह्यान्नित्यवेगः सनाभवेत् ॥

मधुयष्टी कर्षप्रयोगः सुबोधः । नापु-रुषः । नित्यवेगः सदा वेगवान् ॥

कुळीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत् ।
सिताघृतपयोन्नाशी स नारीषु वृषायते ॥

कर्कटशृङ्ग्याः कल्कस्य पयसा प्रयोगे य-सितादिभिरन्नमश्नाति स नारीषु वृष इवाचरति ॥

धान्यमाषरसः क्षीरं क्षौद्रमिक्षुरसो घृतम् ।
द्विमेदा जीवकयुगकाथश्चैकत्र योजितः ।
पीतः करोति पुरुषं प्रमदा शतगामिनम् ॥

धान्यमाषयोरेको रसः तत्समानि प्रत्येकं पञ्चक्षीरादीनि । एकत्र योजितो मिश्रीकृतः पीतः पुरुषं प्रमदाशतगामिनं करोति ॥

भल्लातकैश्चतुर्भिस्तु दुग्धस्यार्द्धाढकं पचेत् ।
पीतं करोति वृषतां सुजीर्णस्यापि देहिनः ॥

भल्लातकशृतक्षीरं सुबोधम् । दुग्धस्यार्द्धाढकं चतुःषष्टिपलानि । सुजीर्णस्य सुवृद्धस्यापि । (भल्लातकस्यारुष्करस्यमज्जा ॥)

स्वयङ्गुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा रासभायते ।
उच्चटाचूर्णमप्येवं शतावर्याश्च योजयेत् ॥

स्वयंगुप्तेक्षुरकयोरध्यण्डकोकिलाक्षकयोर्बीजस्यचूर्णं शर्करासहितं धारोष्णेन पयसा पीत्वा नरो रासभायते रासभइवाचरति । सुबोधम् । उच्चटा प्रसिद्धा । (महामुस्ता ॥)

सूप्यपर्णी द्विकाकोळी जीवकर्षभकैः शृतम् ।
लघुना पञ्चमूलेन द्विकाकोळीयुतेन वा ।
पयोतिवृष्यमभ्यस्य वृद्धोपि तरुणायते ॥

सूप्यपर्ण्यादिभिरृषभकान्तैः शृतं पय एकः प्रयोगः । ह्रस्वप ञ्चमूलेन काकोळीद्वययुतेन द्वितीयः ॥

क्षीरिणी च श्वदंष्ट्रा च फाणितं शर्करा मधु ।
गृष्टिक्षीरंनवंसर्पिरेतत् पुंसवनंपरम् ॥

क्षीरिण्यादिकं पुरुषेणोपयुक्तं परं पुंसवनम् । क्षीरिणी पयस्या ॥

अश्वत्थफलमूलत्वक्शृङ्गसिद्धं पयो नरः ।
पीत्वा सशर्करं शीतं कुलिङ्ग इव हृष्यति ॥

अश्वत्थस्यफलादिचतुष्टयेन सिद्धं पयः पीत्वा कुलिङ्गवद्धृष्यति ॥

पयः पयस्ययासिद्धं शुक्रकृत्साज्यमाक्षिकम् ॥

पयस्यया सिद्धं पयः प्रयोगो व्याख्यासमः ॥

शतावरीकल्करसे पयो दशगुणं घृतम् ।
शृतं सपिप्पलीक्षौद्रशर्करं वृष्यमुत्तमम् ॥

शतावरीरसप्रस्थं क्षीरप्रस्थचतुष्टयम् ।
प्रस्थं घृतस्यशुक्त्यंशं द्राक्षामांसी परूषकम् ॥
जीवकर्षभ यष्ट्याह्व बला मेदा कशेरुकम् ।
प्रियाळबीजंकाकोळीयुग्मंचैकत्र पाचयेत् ।
पक्वपूतेक्षिपेच्चास्मिन् कुडुबांशां सितोपलाम् ॥
गृष्टिक्षीरालुपः प्राश्य तन्नारीषु वृषायते ।
विजयेत च वातास्रं पित्तास्रोरःक्षतक्षयान् ॥

शतावरीघृते घृताद्दशगुणं पयः पिप्पल्यादिकं सिद्धेदेयम् । द्वितीये शतावरीरसप्रस्थाद्ये द्राक्षादिकं शुक्त्यंशमर्द्धपलंचैकस्मिन् भाजने कृत्वा पाचयेदेतच्च घृतं वातास्रादिकं च जयेत् ॥

जीवकक्षीरकाकोळी स्थिराहंसपदी घनैः ।
षडीक्षुगण्डिका यष्टी मृणाळैः कार्षिकैः पचेत् ।
घृतप्रस्थं दशगुणे क्षीरे तत् बलपुष्टिकृत् ।
वन्ध्यानां पुत्रजननं शुक्रवर्द्धनशोधनम् ॥

जीवकादिघृतं सुबोधम् । हंसपदी विसग्रन्थ्याख्सा, कार्षिकं कर्षप्रमाणम्, घृताद्दशगुणं क्षीरम्, वन्ध्यानामप्रजानाम् । शुक्रवर्द्धनं शुक्रशोधनं च ॥

जलाढके स्वयंगुप्ता मूलात् पञ्चपलं पचेत् ।
पादशेषे च संचूर्ण्य कुडुबांशाः पृथक्क्षिपेत् ॥
स्वगुप्तामूलगोधूममाषेक्षुरकपिप्पलीः ।

सप्रियाळफलक्षौद्राः प्रस्थार्द्धं नवसर्पिषः ॥
सितोपलातुलापादं कुर्यात्तान् मोदकांस्ततः ।
मोदकं भक्षयित्वैकं षष्टिं व्रजति योषिताम् ॥

आत्मगुप्ता मूलात् पञ्चपलं जलस्याढके अष्टाविंशत्यधिके पलशते पचेत् तस्मिन् पादशेषे स्वगुप्तादिकं कुडुबांशं पृथक्क्षिपेत् । स्वगुप्तादीनां कुडुबश्चत्वारिपलानि क्षौद्रस्यकुडुबोऽष्टौपलानि । नवसर्पिषः प्रस्थार्द्धं षोडशपलानि । सितोपलायास्तुलापादः पञ्चविंशतिपलानि । प्रत्यहमेकस्य मोदकस्य भक्षणम् ॥

पलांशान् बृहतीव्याघ्री पृश्निपर्णी त्रिकण्टकान्
द्व्याढकेनाम्भसा पक्त्वा पादशेषे रसे स्थिते ॥
पलानि क्षीरकाकोळ्याः पञ्चमागधिका पलम् ।
स्वगुप्ता फलमूलानां माषाणामिक्षुरस्यच ॥
विदार्या मधुनश्चात्र कुडुबं कुडुबं क्षिपेत् ।
पृथग्द्वौमुद्गातिलयोर्घृते शष्कुलिकास्ततः ।
पचेदेकां ततः प्राश्य शतं व्रजति योषिताम् ॥

पलांशानिति । बृहत्यादिभिस्तिलशष्कुलिका सुबोधा । क्षीरकाकोळ्याः पञ्चपलानि स्वगुप्तामूलादीनां प्रत्येकं कुडुबः । मधुनः कुडुबो विदार्याद्विगुणः । मुद्गस्य द्वौ कुडुबौ निलस्य द्वाविति पृथगर्थः ॥

स्वगुप्तामूलचूर्णेन द्रुतेन पयसा कृताः ।
घृते सशर्कराक्षौद्रा भक्ष्यावेगशतप्रदाः ॥

पयसा द्रुतेन स्वगुप्ता मूलचूर्णेन घृते संस्कृताः सशर्कराक्षौद्रा भक्ष्या वेगशतप्रदाः ॥

माषात्मगुप्ता गोधूमशालिषष्टिकपैष्टिकान् ।
शर्करायाः विदार्याश्च चूर्णानीक्षुरकस्य च ॥
संयोज्यक्षीरसर्पिर्भ्यां घृते पूपलिकाः पचेत् ।
पयोनुपानास्ताः शीघ्रं कुर्वन्ति वृषतां परम् ॥

माषात्मगुप्ता गोधूमादिपैष्टिकान् शर्करादिचूर्णानि च क्षीरघृताभ्यामालोड्य घृते वटकवत् पूपलिकाः पचेत् सुबोधम् ॥

चूर्णमाषात्तिलाच्छालेर्विदार्याश्चससैन्धवम् ।
रसेनपुण्ड्रकस्येक्षोः प्लुतं वाराहमेदसि ।
पक्त्वाशष्कुलिकाःखादन्नारोहेत् षष्टिमङ्गनाः ॥

माषादीनां चूर्णं लवणेनयुक्तं पुण्ड्रेक्षुरसेनालोड्य सूकरमेदसि शष्कुलिकाः कार्याः । सुबोधम् ॥

मुखप्रियाणां स्निग्धानां फलानां मधुरात्मनाम्
फलानामात्मगुप्तायाः शालेर्माषात्तिलात् घृतात्
मुद्गात् गोधूमतश्चापि कुडुबं कुडुबं पृथक् ॥
चूर्णितैर्न्निस्तुषैस्तैस्तु क्षीरेणालोड्य मर्दितैः ।
पक्वां पूपलिकांखादन् स्त्रीषु हृष्यति वाजिवत् ॥

मुखप्रियाळादिगुणानां द्राक्षादीनां फलानाम् आत्मगुप्ता फलानां शाल्यादीनां च प्रत्येकं कुडुबः । एभिर्न्निस्तुषैश्चूर्णीकृतैः क्षीरेणालोड्य मर्दितैः पूपलिकाः कार्याः ॥

शर्करामाषगोधूम तुकाक्षीरीपयो घृतैः ।
पक्वा मुत्कारिकां खादेत् कृकवाकुरसानुपः ॥
मायूरंतैत्तिरंहांसमेवमेव रसं पिबेत् ।
अनेनाश्व इवोदीर्णो बली लिङ्गं समर्पयेत् ॥

शर्करादिभिः पक्का सुरकारिकां कृकवाकुरसानुपः खादेत् । कृकवाकुरसः कुक्कुटरसः । मयूररसाद्यन्यतमं वा पिबेत् । लिङ्गं मेढ्रं ॥

पिष्ट्वा वराहमांसानि दत्त्वा मरिचसैन्धवे ।
कोलवद्गुलिकाः कृत्वा तप्ते सर्पिषि वर्त्तयेत् ॥
वर्त्तनस्तम्भितास्ताश्च प्रक्षेप्याः कौक्कुटे रसे ।
घृताढ्ये गन्धपिशुने दधिडाडिमसारिके ॥
यथानाभिन्द्याद्गुलिकास्तथा तं साधयेद्रसम् ।
तं पिबन्भक्षयंस्ताश्च बली बालेयवद्व्रजेत् ।
मांसानि बलयुक्तानि तथान्यान्यपि कल्पयेत् ॥

पिष्ट्वेत्यादि । सूकरमांसेन पिष्टेन मरिचसैन्धवयुक्तेन कृता गुळिकास्तप्ते घृते वर्तयेत् मनागग्निसन्तापं नयेत् । ततस्तेन वर्त्तनेनस्तम्भिता गृहीतकाठिन्याः कौक्कुटे रसे प्रक्षेप्याः । ततस्ता रक्षयन् साधयेत् । घृताढ्य इत्यादि रसविशेषणम् । बालेयो रासभः । कुक्कुटवच्चान्यान्यपि बलयुक्तानि मांसानि कल्पयेत् । [ तप्ते सर्प्पिषि भर्ज्जयेत् । भर्ज्जनस्तम्भितास्ताश्च इति चरकपाठः । व्याख्या । तप्ते सर्पिषि भर्ज्जयेत् । भर्ज्जनस्तम्भितास्ताश्च प्रक्षेप्याः कौक्कुटे रसे इत्यस्यायमभिप्रायः । सर्प्पिषा तप्तेन नवनीतावस्थामतिक्रान्तेन । नवनीतावस्थायां हि सावशेषकाळेयावयवत्वादम्लानुगतं प्रयोगे नेष्यते । ननु सर्प्पिषीत्युक्ते तदेव गम्यते कथं पुनर्न्नवनीताशङ्केति । उच्यते । आचार्या नवनीतं घृतं जातमित्यस्तिनवनीते घृतव्यपदेशः । तस्मात्तदपनयनार्थमिति व्याख्यान्ति । तेन च तप्तेन ताः संहति मासादयन्ति । तथा न भिद्यन्ते द्रवे क्षिप्ताः । दधिडाडिमसारिक इति सारिके सान्द्रीभूत इत्यर्थः । दधि डाडिमाम्लमिष्यते नान्यच्छुक्तादि तस्य शुक्रक्षयहेतुत्वेनाम्नानात् । अम्लोम्लं पच्यते अम्लश्वपाकः शुक्रनाशनः । इति जर्ज्जटः ॥ ]

माषानङ्कुरितान्शुद्धान् निस्तुषान्साजहाफलान् ।
घृताढ्ये माहिषरसे दधिडाडिमसारिके ॥
प्रक्षिप्यसाधयेद्युक्त्या धान्यजीरकनागरैः ।
पीतो शुक्तश्च स रसः कुरुते शुक्रमक्षयम् ॥

अङ्कुरितत्वादियुक्तान् माषानजहाफलसंयुक्तान् माहिषमांसरसे घृतभूयिष्ठे दधिडाडिमप्रधाने प्रक्षिप्य साधयेत् । ससिद्धोरसः पीतो भुक्तश्चाक्षयं शुक्रं कुरुते । अजहा आत्मगुप्ता । [ कुरुते शुक्रमक्षयमिति सन्तानप्रवृत्त्या अक्षयमित्युपचर्यते । इति जर्ज्जटः ॥ ]

हंसबर्हिणदक्षाण्डान् भृष्टांस्तप्तेन सर्पिषा ।
सुरानुपानान् यःखादेत्सतृप्तस्तर्प्पयेत्स्त्रियः ॥

हंसादीनां प्रत्येकस्याण्डान् तप्तेन सर्प्पिषा भृष्टान् सुरानुपानान् खादेत् ॥

आर्द्राणि मत्स्यमांसानि शफरीर्वा सुभार्जिताः ।
तप्ते सर्पिषियःखादेत् स गच्छेत् स्त्रीषुनक्षयम् ॥

आर्द्राणां मत्स्यमांसानां शफरीमांसानां च घृतभृष्टानां प्रयोगः सुबोधः । शफरी रोहितः । [मत्स्यशब्दस्य सामान्यवाचित्वेपि रोहितस्य ग्रहणं प्रधानकल्पनाश्रयणात् रोहितो मत्स्यानामिति । इति जर्ज्जटः ॥]

घृतभृष्टान्रसे छागे रोहितान् फलसारिके ।
अनुपीतरसान् सिद्धानपत्यार्थी प्रयोजयेत् ॥

रोहितान् डाडिमादिफलप्रधाने छागे रसे सिद्धान् घृतभृष्टान् रसानुपानयुक्तानपत्यार्थी प्रयोजयेत् ॥

घृतंमाषान् सबस्ताण्डान् फलाम्ले माहिषे रसे।
स्वादौ वा साधयेत् पूतं तद्रसं भर्जयेत् घृते ॥
ईषल्लवणितं युक्तं धान्यजीरकनागरैः ।
पीतः स वृष्यो बल्यश्च बृंहणश्च परं रसः ॥

घृतं माषान् बस्तानामण्डांश्च माहिषे डाडिमादिफलाम्ले वा रसे स्वादावेव वानत्वम्ले साधयेत् तं तथाविधं रसं पूतमीषल्लवणं धान्यादिभिर्युक्तं घृते भर्जयेत् । पीतः सरसः परं वृष्यादिगुणः ॥

चटकांस्तैत्तिरेतद्वत्तित्तिरीन्कौक्कुटे रसे ।
कल्पयेच्छिखिनो हांसे हंसान् वा शिखिजे रसे
तृप्तिं चटकमांसानां गत्वा योनुपयःपिबेत् ।
प्रभूतकालसंरुद्धाः सन्तर्पयति योषितः ॥

तैत्तिरे रसे चटकांस्तद्वदिति माहिषरसविधानेन कल्पयेत् । तद्वदेवेति तित्तिरीणां प्रयोगः कौक्कुटे रसे । व्याख्यासमम् । प्रभूतकालसंरुद्धाः बहुकालं पुरुषसंसर्गेण विनाभूताः ॥

घृताढ्यं कुक्कुटं शूल्यं शीतं खादेत् समाक्षिकम्।
पिबेच्चानन्तरं क्षीरं य इच्छेच्छुक्रमक्षयम् ॥

शूले कुक्कुटं बहुना घृतेन संस्कृत्य शीतीकृत्य क्षौद्रेण युक्तं खादेत् । अनन्तरं च क्षीरं पिबेत् । स एवं कुर्याद्यः शुक्रमक्षयमिच्छेत् ॥

पिप्पलीलवणैर्युक्तौ बस्ताण्डौ क्षीरसर्पिषा ।
साधितौ भक्षयेद्यस्तु स गच्छेत् प्रमदाशतम् ॥
बस्ताण्डसिद्धे गोदुग्धे भावितानसकृत्तिलान् ।
यः खादेत्ससितान् गच्छेत् सः स्त्रीशतमपूर्ववत्

पिप्पल्यादिना छगलाण्डविधानं सुबोधम् । तथैव छगलाण्डसिद्धगोक्षीरभावितानां तिलानां प्रयोगः ॥

भुक्त्वा यो माषसूपेन घृताढ्यं षष्ठिकौदनम् ।
पयः पिबति जागर्त्ति कृत्स्नां रात्रिं स वेगवान् ॥

भुक्त्वेत्यादि । यो घृताढ्यं घृतभूयिष्ठं षष्टिकान्नं माषसूपेन सह भुक्त्वा पयः पिबति स वेगवान् सकलां रात्रिं जागर्ति ॥

आत्मगुप्ताफलं माषान् खर्जूराणि शतावरीम्।
शृङ्गाटकानि मृद्वीकां पचेत्तत् प्रस्तोन्मितम् ॥
क्षीरप्रस्थं जलप्रस्थमेतत् क्षीरावशेषितम् ।
शुचिनावाससा पूतं योजयेत् प्रसृतैस्त्रिभिः ॥
शर्करायास्तुकाक्षीर्याः सर्पिषोभिनवस्य च ।
तत्पिबेत्क्षौद्रसंयुक्तं भुञ्जानः षष्टिकौदनम्
तथा जरापरीतोपि पुत्रैः स परिवार्यते ॥

आत्मगुप्ताफलादिभिः क्षीरविधानं सुबोधम् । शर्करादीनां प्रत्येकं त्रयः प्रसृताः ॥

द्राक्षाखर्जूरखर्जूरीमस्तकान्यजहाफलम् ॥
पयस्याभीरुमाषांश्च मधुकानि च साधयेत् ।
तोयाढके पलांशानि पादशेषेण तेन च ॥
क्षीरप्रस्थं पचेत् क्षीरशेषेणाद्यात् घृतान्वितम् ।
षष्टिकान्नं सिताज्येन योगोयं शुक्रकृत परम् ॥

द्राक्षादीनां क्वाथेन क्षीरप्रस्थं पचेत् । क्षीरशेषम् । सिताज्यसहितेन तेन क्षीरेण षष्टिकान्नमद्यात् । अजहा आत्मगुप्ता ॥

जीवकर्षभकौ मेदा जीवन्ती श्रावणीद्वयम् ।
खर्जूरं मधुकं द्राक्षां विदारीं विश्वभेषजम् ।
शृङ्गाटकानि चपला नवं सर्पिः पयो जलम् ॥
घृतावशेषितं सिद्धं शर्करामाक्षिकान्वितम् ।
षष्टिकौदनसंयुक्तमुपयोज्यं यथाबलम् ।
तद्वृष्यं बलकृद्वर्ण्यं कण्ठ्यं देहस्य बृंहणम् ॥

जीवकादिसिद्धं घृतं शर्करामाक्षिकसहितं यथाबलं षष्टिकान्नप्रयोज्यं वृष्यादिगुणम् ॥

गृष्टिर्बष्कयणीनीरुग्रूर्ध्वशृङ्गी चतुस्तनी ।
सान्द्रस्वादुबहुक्षीरा रूपशीलसमन्विता ॥
इक्षुभिर्माषपर्णेन या सुपुष्टार्जुनेन वा ।
तत्क्षीरंससिताक्षौद्रघृतं पुंस्त्वयं रतिप्रदम् ॥

गृष्टित्वादिगुणयुक्ताया इक्ष्वादिना सुपुष्टाया गोः क्षीरं सितादिसहितं पीतं पुंस्त्वीयं रतिप्रदं च । गृष्टिः प्रथमप्रसवा । बष्कयण्यनवप्रसूता । [गृष्टिरेकवारप्रसूता तस्या उपचितधातुत्वात् पयोपि कारणानुविधानात् तद्वदेव भवति । पुष्टहणं चैतत् ज्ञापयति । सात्म्येनोपचितायाः क्षीरमपि ज्यायस्तामावहति । चतुस्तन्यादिभिर्विशेषणैः त्रिस्तनत्वविशालत्वविशङ्कटत्वादयो गवां दोषा इति । एवंविधा मङ्गल्या चतुस्तन्यादियुक्तेति । एवंविधायाः पयः प्रभावाद्वृष्यतामासादयति । माषपर्णेनेत्यत्र पर्णग्रहणेनैतज्ज्ञापयति । शुष्काः स्तम्बवन्तो न फलानीति । तान्यसात्म्यानि प्रायशो गवां तृणपर्णोचितत्वात् । तस्मात् माषपर्णेनेत्युच्यते । अन्यतृणपर्णपुष्टाया अपि क्षीरं वृष्यमुच्यते । माषपर्णादिभिर्वृष्यैः पुष्टाया नितरां वृषत्वमापादयति । अन्ये त्वन्यथा क्षीरत्रयमिति वर्णयन्ति । इक्ष्वादाया माषपर्णादाया अर्जुनादायाश्चेति । इति जर्जटः ॥]

शुक्लैर्जीवनीयाख्यैर्बृंहणैर्बलवर्द्धनैः ।
वयसः स्थापनैश्चैतत् पयः सिद्धं पृथक्पृथक् ॥
युक्तं गोधूमचूर्णेन सघृतक्षौद्रशर्करम् ।
पर्यायेणोपयोक्तव्यमिच्छता शुक्रमक्षयम् ॥

गोर्गृष्ट्यादिगुणयुक्तायाश्चैतत् पयः शुक्लैः शुक्लवर्द्धनैर्महाकषायसंग्रहाध्यायपठितैर्मेदाकाकोळीद्वयादिभिः जीवनीयाख्यैर्जीवन्तीकाकोळ्यादिभिः । बृंहणैर्वाट्यबलादिभिः । वयसः स्थापनैरमृतापथ्यादिभिश्च पृथक्पृथक्सिद्धमनन्तरं च गोधूमचूर्णेन घृतादिभिश्च युक्तं पर्यायेणेति क्रमेणोपयोक्तव्यमक्षयं शुक्रमिच्छता पुंसा ॥

मेदां पयस्यां जीवन्तीं विदारीं कण्टकारिकाम् ।
माषान्श्वदंष्ट्रां क्षीरीकां गोधूमान् शालिषष्टिकान् ।
तत्क्षीरेऽर्द्धोदके सिद्धान् कार्षिकानाढकोन्मिते ।
विसर्जयेत्पयश्शेषं तत्पूतं क्षौद्रसर्पिषा ।
सितया च युतं पीत्वा वृद्धोपि तरुणायते ॥

तत्क्षीरे तस्या गृष्ट्यादिगुणयुक्ताया गोः क्षीरे आढकोन्मिते अर्द्धोदके उदकस्यार्द्धेन युक्ते मेदादीन् कर्षांशान् दत्वा सिद्धान् पयश्शेषं कृत्वा तान् विसर्जयेत् । ततः पूतं तत्क्षीरं

क्षौद्रादियुक्तं पीत्वा वृद्धोऽतीतसप्ततिवर्षोऽपि तरुणायते तरुण इवाचरति ॥

**मण्डलैर्जातरूपस्य सुतप्तैस्तत्पयःशृतम् ॥**
**सिद्धं पुंसवनं वृष्यं ससिताघृतमाक्षिकम् ।**
**रूप्यायस्ताम्रसीसानामयमेव पृथग्विधिः ॥**

तत्पयस्तस्या गृष्ट्यादिगुणयुक्ताया गोः पयः सुतप्तैः सुवर्णस्य पत्रैः शृतम् । सिद्धमित्यादि सुबोधम् । सुवर्णवद्रूप्यादीनामपि चतुर्णामन्यतमस्य विधिः । [जातरूपस्य सुवर्णस्य-शुद्धस्येत्यर्थः । मण्डलैः पत्रैः शृतस्य पयसो विशिष्टशक्त्युत्पादः । तत्पयस्तस्या एवेक्ष्वादिपुष्टायाः । इति जर्जटः ॥

**चूर्णिताः पिप्पली स्त्रिंशत् प्रकुञ्चे तैलसर्पिषोः ।**
**भृष्टाः सशर्कराक्षौद्राः क्षीरेणालोडिताः पिबेत्**
**अश्नंश्चषाष्टिकं क्षीरसर्पिर्भ्यां वाजिवद्भवेत् ॥**

तैलघृतयोः प्रकुञ्चे भृष्टस्य त्रिंशत्पिप्पलीचूर्णस्य शर्कराक्षौद्रसहितस्य क्षीरेण पानं षष्टिकान्नस्य च क्षीरसर्पिर्भ्यामशनं वाजीकरणम् ॥

**चन्द्रांशुशुभ्रं पयसा घृताढ्यं षष्टिकौदनम् ।**
**शर्करामधुसंयुक्तं भुञ्जानो ना वृषायते ॥**

चन्द्रांशुवच्छुभ्रं षष्टिकस्यौदनं घृतभूयिष्टं शर्करामधुयुक्तं क्षीरेण भुञ्जानो वृषायते । ना-पुरुषः । (चन्द्रांशुकल्पमिति चरकपाठः । षष्टिकौदनस्य चन्द्रांशुकल्पत्वं तस्याप्यपेतकणमलस्याखण्डितधौतस्य ज्ञापनार्थम् । अन्ये तु गौरषष्टिकस्य प्रवरत्वात्तद्विशेषणार्थं चन्द्रांशुकल्पमिति सादृश्यान्नकल्पनेनेति । इति जर्ज्जटः ॥ )

**दध्नःसरेणसघृतो भक्षितः षष्टिकौदनः ।**
**सैलातुकोषणक्षौद्रः शर्कराढ्येन शुक्रकृत् ॥**

शर्कराभूयिष्ठेन दध्नः सरणैलादियुतः षष्टिकौदनो भक्षितः शुक्रकृद्भवति । ऊषणं मरिचम् । [दध्नःसरं शरच्चन्द्रसन्निभं दोषवर्जितम । शर्कराक्षौद्रमरिचैस्तुकाक्षीर्या च बुद्धिमान् । युक्त्यायुक्तं सुसूक्ष्मैलं नवे कुम्भे शुचौ पटे । मार्जितं प्रक्षिपेच्छीते घृताढ्ये षष्टिकौदने । पिबेन्मात्रां रसाळायास्तंभुक्त्वा षष्टिकौदनम् । वर्णस्वरबलोपेतः पुमांस्तेन वृषायते ॥ इति चरके । दध्नः सरमित्यादि । षष्टिकौदनं भुक्त्वा रसाळाया मात्रां पिबेत् । रसाळा नाम दधिशर्करया सह पटमृदितं च-चतुर्जातककर्पूरमात्रयायुक्तं लोके रसाळेत्युच्यते । इति जर्ज्जटः ॥ ]

**अध्यण्डामार्षभींचैव स्वयङ्गुप्ताफलानि च ।**
**पादलेपं नरः कृत्वा निशि वेगैर्न्नहीयते ॥**

अध्यण्डादिभिः पादलेपो वाजीकरणः (नि) अध्यण्डेक्षुरकस्तैलकण्टकः कोकिलाक्षकः । आर्षभी ऋषभकाख्या । स्वयंगुप्ता आत्मगुप्ता । सैव कपिकच्छूः ॥

**वर्षाभूमूलमृद्वीका स्वयङ्गुप्ताफलानि च ।**
**सिद्धश्चरणलेपोयं भुवं पद्भ्यां तु न स्पृशेत् ॥**

वर्षाभ्वादिभिश्चरणलेपः सिद्धोऽप्रतिहतः । अस्मिन् कृते पद्भ्यां भुवं न स्पृशेत् ॥

**घृतक्षीराशनो नित्यं निर्व्याधिर्नित्यगो युवा ।**
**सङ्कल्पप्रवणो नित्यं नरः स्त्रीषु वृषायते ॥**

घृतक्षीराशन इति । नित्यं घृतक्षीराशनत्वादियुक्तो नरः स्त्रीषु नित्यं वृषायते । नित्यगो यः सदैव स्त्रियं याति । [सङ्कल्पप्रवणः कालानुध्यानाभिमुखः सङ्कल्पप्रवणस्तन्नित्यः । नरग्रहणं किं स्त्रीषु वृषायत इत्युक्ते गम्यत एव तथा स्त्रीग्रहणं च तत्रैव वृषायते नान्यत्रेति स्त्रीग्रहणमपि व्यर्थम् । उच्यते नरग्रहणं विना नपुंसकमित्येतत् ज्ञापयति । स्त्रीग्रहणं च सामान्येनैव स्त्रीति प्रवर्तते । इति जर्जटः ॥]

**आत्मगुप्ताफलं माषा गोधूमः शालिषष्टिकम् ।**
**इक्षुरिक्षुरकः क्षीरं क्षौद्रं द्राक्षा सितोपला ॥**
**उच्चटा शरमूलानि विदारी सशतावरी ।**
**जीवनीयानि खर्जूरं मोचचोचफलानि च ॥**
**एभिर्भक्ष्याणि पेयानि लेह्यानि च घृतानि च**
**नित्यमासेवमानस्य स्त्रीषु हर्षो विवर्द्धते ॥**

आत्मगुप्ताफलादिभिः कृतानि भक्ष्यादीनि सदा सेवमानस्य स्त्रीषु विषये हर्षो विवर्द्धते । इक्षुरकः कोकिलाक्षकः, उच्चटा प्रसिद्धा सहामुस्ता, श्वेतदुर्वारिका स्वल्पविटपः प्रायशो नदीतीरे दृश्यत इति सुश्रुतटीका । चूडाला चक्रलोच्चटा इत्यमरः ॥

**जीवनीयघृतक्षीरमधुतैलसितारसैः ॥**
**रसक्षीराशिनः क्षिप्रं वृषं कुर्वन्ति बस्तयः ॥**

जीवनीयादिभिः कृता बस्तयो रसक्षीराशिनं नरं क्षिप्रं वृषं कुर्वन्ति ॥

**सिद्धवस्तिविकल्पोक्तान् बलशुक्रसुतप्रदान् ।**
**युञ्जीतवस्तीन् पुत्रार्थी पुत्रकामोदितं च यत् ॥**

यस्तु पुत्रार्थी स सिद्धवस्तिकल्पाध्यायोक्तान् बलादिप्रदान् वस्तीन् युञ्जीत । तथा-यदपि किञ्चित् पुत्रकामीये शारीर उक्तं तदपि युञ्जीत ॥

इदानीमुक्तानुक्तवाजीकरणसंग्रहायाह ॥

**यत्किञ्चिन्मधुरं स्निग्धं बृंहणं बलवर्द्धनम् ।**
**मनसो हर्षणं यच्च तत्सर्वं वृष्यमुच्यते ॥**

यदित्यादि । यच्च किंचिन्माधुर्यादिगुणं वस्तु यच्च मनसो हर्षणं तत्सर्वं वृष्यमुच्यते । [ननु दध्यादन्यम्लत्वेपि शुक्रजननानि मध्वादीनि रूक्षाण्यपि । अतो यत् किंचिन्मधुरादेतद्विरोधीति । उच्यते । प्रभावात् । दधिमध्वादीन्यम्लरूक्षाण्यपि वाजीकरणानि । न केवलं गुणभावादेव द्रव्याणि कारणानि । किन्तु प्रभावादपि । द्रव्यप्रभावश्चाचिन्त्यः शास्त्रैकसमाधिगम्य एवेति न कश्चिद्विरोध इति जर्जटः ॥ ]

**द्रव्यैरेवंविधैस्तस्मात् भावितः प्रमदां व्रजेत् ।**
**आत्मवेगेनचोदीर्णः स्त्रीगुणैश्च प्रहर्षितः ॥**

तस्मादेवंविधैर्मधुरादिगुणैर्द्रव्यैर्भावित उत्पन्नसंस्कारः सन् आत्मवेगेन च पुरुषसद्भावकृतेनोदीर्ण उत्सिक्तः स्त्रीगुणैश्च रूपचेष्टादिभिः प्रहर्षितः प्रमदां व्रजेत् । [द्रव्यैरित्यादि । अत्र भावितग्रहणेनैतत् ज्ञापयति यावत् सर्वात्मनान्वितं देहे द्रव्यं स्यात्तावत् गन्तव्यं न प्रयोगानन्तरमेवेति । ननु चात्मवेगेन चोदीर्ण इति व्यर्थः । नहि परवेगेनोदीर्णता सम्भवति । उच्यते । अयमभिप्रायः यावदिच्छयोद्भूत-

वेगः परां हर्षकाष्ठामारूढस्तावत् प्रमदां व्रजेत्। उक्तं च नानुद्भूतवेग इति । स्त्रीगुणैश्च प्रहर्षितो हावभावसंवाहनादिरित्यर्थः । इति जर्ज्झटः ॥ ]

इष्टा इत्यादिना स्त्रिया वृष्यत्वमुच्यते ॥

**इष्टाह्येकैकशोप्यर्था हर्षप्रीतिकराः परम् ।**
**किं पुनः स्त्रीशरीरे ये सङ्घातेन प्रतिष्ठिताः ॥**

अर्थाः शब्दादयो विषया य इष्टास्ते नियतमेकैकशः पृथग्भावेनापि स्थिताः परं हर्षप्रीतिकरा भवन्ति । किं पुनर्ये स्त्रीशरीरे संघातेन युगवत्प्रतिष्ठिताः । [सर्ववाजीकरणेभ्योपि स्त्र्यैव । वाजीकरणमुत्कृष्टमानन्दहेतुत्वादित्याह। इष्टाह्येकैकश इत्यादि । एकैकशोप्यर्था विषयाः शब्दादय इष्टाः परं हर्षप्रीतिकरा भवन्ति । एवमर्थानां प्रत्येकं हर्षप्रीतिकरणे सामर्थ्यं किं पुनः स्त्रीशरीरे ये संघातेन प्रतिष्ठिताः । ननु स्त्रीग्रहणेन पर्याप्तत्वात् शरीरग्रहणं किं । उच्यते । एकदेशानामात्ममनसां च व्यावर्तनार्थम् । आत्मन्यपि केचिद्व्यवस्थिता मनस्यपि केचित् । तस्माच्छरीरे ये प्रतिष्ठिता इत्यर्थः । किंच । गुणगुणिनोरन्यत्वं चानेन प्रकाशितं भवति । इति जर्ज्झटः ॥ ]

**रुचिभेदेन लोकस्य दैवयोगाच्च योषिताम् ।**
**तं तं प्राप्य विवर्द्धन्ते नरं रूपादयो गुणाः ॥**

रुचिभेदेनेत्यादि । तथा रूपादयो योषितां ये गुणास्ते तं तं विशिष्टं नरं प्राप्य विवर्द्धन्ते । य एवैकस्य न किञ्चिदप्यनुरूपास्त एवापरस्यापरिमेया इति भवन्ति । अस्य च रागविरागस्य हेतुर्लोकानां रुचिभेदेन भिन्नरुचित्वम् । तच्च स्वभावात् । तथा दैवयोगतः यस्य तथाविधमदृष्टं भवत्येतदाहितमनोभिः सुतरां विचार्यम् । न किञ्चित् कल्पितं तदिति किञ्चिदपि प्रतिभाति ॥

**तस्माद्या यस्य हृदयं विशतीव वराङ्गना ।**
**तुल्यस्वभावायाहारिमृजारूपगुणान्विता ॥**
**पाशभूतैर्वहन्त्यङ्गैर्लावण्यमिव मूर्तिमत् ।**
**आलपन्त्यमृतेनेव या गात्राणि निषिञ्चति ॥**
**पिबन्तीव च पश्यन्ती स्पृशन्ती लिंपतीव या ।**
**नित्यमुत्सवभूता या या समानमनःशया ॥**
**नयत्युत्सुकतां चेतो नित्यं सन्निहितापि या ।**
**यया वियुक्तो निस्त्रीकमरतिर्मन्यते जगत् ॥**
**प्रगल्भारतिसङ्ग्रामे स्वस्था लज्जामयी च या ।**
**बहुशोपिचयांगत्वा तत्पूर्वमिव गच्छति ॥**
**चरितैर्निर्विकाराया विकारैरिव निर्मिता ।**
**कान्तानुवृत्तिपरमा सा स्त्री वृष्यतमा मता ॥**

यत एवं तस्माद्या वराङ्गना यस्य हृदयं स्वशरीरान्तः प्रियतया विशतीव सा वृष्यतमा मतेतिसम्बन्धः तुल्यस्वभावेत्यादेरेव एव सम्बन्धः । या तुल्यस्वभावा हारिमृजाद्यन्विता च हारिमृजा मनोहरा स्नानादिभिः । पाशभूतैस्सर्वाकर्षणयोग्यैरङ्गैर्युक्ता मूर्तिमदिव लावण्यं वहन्ती । या च लपन्तीगात्राण्यमृतेन निषिञ्चतीव । या च पश्यन्ती पिबन्तीव स्पृशन्ती लिम्पन्तीव । या च नित्यमुत्सवभूता सदा हृदयानन्दकरी । या समानमनःशया तुल्यकालोद्भवसुरतावसाना [ सदैवतुल्यकामा इति

जज्जटः ।] या नित्यं सन्निहिता समीपस्थितापि चेत उत्सुकतां नयति उत्सुकता सोत्कण्ठत्वम् । यया वियुक्तो विप्रयुक्तोऽरतिः सन् सर्वं जगन्निस्त्रीकमेव मन्यते । या रतिसंग्रामे प्रगल्भासमर्था । स्वस्था निवृत्तरतिसंग्रामा लज्जामयीव यां च बहुशोऽपि गत्वा पुरुषोऽतृप्तः सन् प्रथममिव गच्छति । या च चरितैर्व्यवहारचेष्टादिभिर्निर्विकारा । शृङ्गारचेष्टासु पुनर्विकारैरिव निर्मिता । कान्तस्य चित्तानुवृत्तिप्रधाना सैवंभूता वृष्यतमा मताभिप्रेता । (या यस्य हृदयमित्यादौ बहुशो यायेति किम् । उच्यते । पृथगपि वृष्या द्वित्रादिभिर्वृष्यतरा सर्वैर्वृष्यतमेत्यस्यार्थस्य प्रापणार्थं यायेति बहुत्वम् । सौरूप्यमेकमेव पर्याप्तो गुणः प्रथमं यौवनमत्र द्वितीयश्च परिगृह्यते । लक्षणैर्बाह्यैरान्तरैर्विद्याविनयादिभिश्च यान्विता सा मताभिप्रेता वृष्यतमेति । इति जज्जटः ॥)

अपरे अमी भावाः परं वृषत्वं कुर्वन्तीत्याह ॥

अभ्यञ्जनोद्वर्तनसेकगन्ध<br>स्रक्चित्रवस्त्राभरणप्रकाराः ।<br>सुगन्धिपुष्पोत्कररेणुकीर्णा<br>मृदुर्मनोज्ञा विपुला च शय्या ॥

प्राज्ञाः कलाज्ञा वशगा विनीताः<br>प्रियंवदाः प्रीतिकरा वयस्याः ।<br>विस्रम्भसत्त्वप्रकृतिक्रियैक्या-<br>च्छरीरमात्रेण पृथक्त्वभूताः ॥

कान्तावनान्ताः परपुष्टघुष्टा<br>रम्याः स्रवन्त्यः सततं स्रवन्त्यः ।<br>मद्यं मदामोदकरं विशेषा-<br>द्धृद्या प्रसन्ना सुरभिः प्रसन्ना ॥

शकाङ्गनागण्डतलाभिपाण्डु<br>ताम्बूलपत्रं परिवारशोभि ।<br>प्रसाधनं स्त्रीमुखपङ्कजानां<br>यदायुधं मूर्तमिवात्मजस्य ॥

अभ्यञ्जनेत्यादि । अभ्यञ्जनादयो नानाविधाः प्रकाराः । तथा मृद्वादिगुणा शय्या किम्भूता शोभनस्य पुष्पप्रकरस्य रेणुभिः कीर्णा । तथा वयस्याः । प्राज्ञत्वादिगुणाः । कलाश्चतुःषष्टिःकामतन्त्रप्रसिद्धाः तज्ज्ञाः विस्रम्भादीनामैक्याच्छरीरमात्रेण पृथग्भूताः । तथा वनान्ताः कान्ता मनोरमाः । तथा स्रवन्त्यो नद्यः सततमविच्छेदेन स्रवन्त्यो वहन्त्यः । तथा तन्मद्यं यन्मदं करोत्यामोदं च आमोदः सौरभम् । मद्येभ्यश्च विशेषात् प्रसन्ना सुरा किम्भूता हृद्या हृदयप्रीतिदायिनी सुरभिः सौरभ्ययुक्ता प्रसन्ना स्वच्छा च । तथा ताम्बूलपत्रम् । किम्भूतम् । शकाङ्गनानां यत् गण्डतलं गण्डप्रदेशं तद्वदभिपाण्डु तथा यत्ताम्बूलपत्रं परिवारेण पूगक्षारकर्पूरादिना शोभते । अन्यच्च किम्भूतं स्त्रीणां यानि मुखपङ्कजानि तेषां प्रसाधनं मण्डनं यत् परिवारशोभितमात्मजस्य कामस्य मूर्तिमदिवायुधं विजयहेतुत्वात् ॥

हिमाचलोद्धूनितदुग्धसिन्धु-<br>समुद्भवत्फेनचयावदातम् ।<br>सौधं सुधा शुभ्रतराः कराश्च<br>चन्द्रस्य कुर्वन्ति परं वृषत्वम् ॥

तथा सौधं हर्म्यपृष्ठमपि वृषत्वं करोति किम्भूतमाह । हिमाचले न तुषारगिरिणा उद्धूनितः क्षोभितो यो दुग्धसिन्धुस्तत उद्भूतो यः फेनानां च यो निचयस्तद्वद्वदातं शुक्लम् । तथा सुधातः सुभ्रतरा अत्यन्तशुक्ला ये चन्द्रस्य करास्ते च परं वृषत्वं कुर्वन्ति ॥

बन्धेनपूर्वोपहितेन पुंसः
खिन्नस्यवृत्तिः करणान्तरेण ।
संवाहनं स्पर्शसुखैः करैश्च
करोत्यपूर्वामिव मन्मथेच्छाम् ॥

तथा बन्धेन रतौ संवेशनप्रकारेणैकेन खिन्नस्य पुंसोऽन्येन करणेन वृत्तिर्या साऽपूर्वामिव मन्मथेच्छां करोति । तस्यैव बन्धखिन्नस्य स्पर्शसुखैः कान्ताकरैः संवाहनमपूर्वां मन्मथेच्छां करोति ॥

प्रायोगिकाधिकरणोदितचित्रचेष्टा
संशीलनोद्भवदनल्परसार्द्रचित्तः ।
वृष्योपयोगपरिबृंहितदेहधातु-
र्नारीमनांसि वशमानयति प्रसह्य ॥

तथा एवम्भूतः पुरुषो नारीमनांसि स्त्रीचित्तानि प्रसह्याक्रम्य वशमानयति । किम्भूत आह । प्रायोगिकाख्येधिकरणे कामशास्त्रे या विचित्राश्चेष्टास्तासां शीलनात् भवेद्योनल्पो रसः सुखाख्यस्तेनार्द्रं चित्तं यस्य स तथोक्तः । तथा वृष्याणामाहारादीनामुपयोगेन परिबृंहिता देहधातवो यस्येति ॥

तस्मान्नित्यं स्त्रीषु वाञ्छन् प्रियत्वं
वृष्यैर्योगैर्जातकामोपि कामी ।
सत्वं सात्म्यं देशकालौ च बुध्वा
चातुष्षष्ट्ये चेष्टिते व्याप्रियेत ॥

तस्माद्यत एवं ततः कामी वृष्यैर्योगैर्जातकामोपि स्त्रीषु प्रियत्वं वाञ्छन् सत्वादिकं बुध्वा वात्स्यायनोक्तायाः साम्प्रयोगिकायाः नखरदनादिभेदेन चातुष्षष्ट्ये चेष्टिते व्याप्रियेत ॥

वलयस्वनसंकुलमुष्टिरव-
द्विगुणीकृतमेखलिकानिनदः ।
चलनूपुरशब्दयुतोपि मुहुः
शममावहते न रतातिशयः ॥

वलयस्वनादियुक्तो रतातिशयो मुहुरपि सेव्यमानो न शममावहते ॥

सर्वार्थसिद्धिः प्रथमोनुरागः
शृङ्गारगान्धर्वकथाविशेषाः ।
सीत्कारगर्भं हसितं सहावं
छिन्नाक्षरं विभ्रमवच्च गीतम् ॥

सव्याजसन्दर्शितचारुगात्रं
वृत्तं प्रियाणामवलोकितं च ।
चूताङ्कुरं पुष्पफलं यथर्तु
विद्युत्प्रद्युोतितगर्जितानि ॥

विहङ्गभृङ्गस्वनितानुयातं
स्त्रीकूजितं भूषणशिञ्जितानि ।
काल यथास्वं वपुषश्च शुद्धिः
सङ्कल्पयोनेर्धुरमुद्वहन्ति ॥

सर्वार्थसिध्यादीनि सङ्कल्पयोनेः कामस्य धुरमुद्वहन्ति । सर्वेषामर्थानामिष्टानां सिद्धिः । सीत्कारगर्भं हसितमित्यादेः प्रियाणामिति स-

म्बध्यते । तथा सहावं हावेन युक्तं अनुरागभावसूचको हस्त्यादिविकारो हावः । तथा गीतं छिन्नाक्षरं ध्वनिप्रयोगबाहुल्यात् । तथा विभ्रमवत्‌विभ्रमोत्र विलास एव तस्य लक्षणम् । स्थानासनशयनानां हस्तभ्रूनेत्रकर्मणां चैव । उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यादिति । तथा तासामेव वृत्तम् । किम्भूतमाह । सव्याजं कृत्वा सन्दर्शितं चारुगात्रं यस्मिन् । तथा तासामेवावलोकितम् । यथर्तु चूतांकुरादिकम् । विद्युत्वान् बलाहकः तद्द्योतितानि गर्जितानि । स्त्रीणां रतिसमये कूजितं पारावतादिविहङ्गमस्वनितेन भ्रमरस्वनितेन चानुगतम् । यथास्वं काल इति श्रावण इत्यादिना सूत्रोक्तप्रकारेण । वपुषो वमनादिना शुद्धिश्च ॥

स्रोतस्सु शुद्धेष्वमले शरीरे
वृष्यं यदाद्यं मितमात्तिकाले ।
वृषायते तेन परं मनुष्य-
स्तद्बृंहणं देहबलप्रदं च ॥

स्रोतस्सु वमनादिकर्मणा शुद्धेषु सत्सु शरीरे च निर्मले काले चाहारयोग्ये मनुष्यो यदाद्यं भोज्यं वृष्यं मितं परिमितं चात्तिभुङ्क्ते तेनाद्येन स परं वृषायते । तदाद्यं बृंहणं देहबलप्रदं चेति निर्व्यूढस्तन्त्रकर्तुरभिमतोर्थः ॥

तस्मात् पुरा शोधनमेव कार्यं
बलानुरूपं न च वृष्ययोगाः ।
सिध्यन्ति देहे कलुषे प्रयुक्ताः
क्लिष्टे यथा वाससि रागयोगाः ॥

तस्मादित्यादि यस्मादेवं तस्मात् पुरा पूर्वं बलानुरूपं शोधनमेव कार्यम् । क्लिष्टे वाससि यथा रागयोगा न सिध्यन्ति तथा कलुषे देहे वृष्ययोगाः ॥

उपदिष्ट इत्यादिना तन्त्रार्थो निराकाराकाङ्क्षी क्रियते ॥

उपदिष्टे विचित्रेस्मिन् वक्तव्यार्थानुरोधतः ।
कर्तव्यमेव कर्तव्यं प्राग्यात्रापिनेतरत् ॥

अस्मिन् विचित्रे नानारूपे स्त्रीसंयोगवशीकरणयोगोपायादिके वक्तव्यार्थानुरोधादुपदिष्टे सति यत्रागमादिभिः कर्तव्यं करणीयमित्याभाति तदेव कर्तव्यं कार्यम् ॥

अकर्तव्यस्योपदेशे वक्तव्यार्थानुरोधो यो हेतुकः स एवैतत् स्वरूपमित्यादिना व्यवस्थाप्यते ॥

एतत् स्वरूपं शास्त्रस्य यद्व्यापित्वेन वर्ण्यते ।
स्पृशतिन्यूनतादोषो महानव्यापिनि ध्रुवम् ॥

शास्त्रस्य ह्येतत् स्वरूपं यच्छास्त्रं व्यापित्वेन वर्ण्यते अव्यापिनि तु शास्त्रे ध्रुवमवश्यं न्यूनतादोषो महान् स्पृशति ॥

वीर्यहीनैरसम्पूर्णैः प्रयोगैरपि भूषितम् ।
अर्थानतन्त्रयत्तन्त्रं तन्त्रतामाप्नुयात् कथम् ॥

वीर्यहीनैरसम्पूर्णैश्च प्रयोगैरर्थात्तन्त्रविभूषणे हेतुभूतैर्भूषितमपि तन्त्रमर्थानतन्त्रयत्तन्त्रतामाप्नुयात् । एषा हि तन्त्रस्य तन्त्रता यत् तन्त्रितानामर्थानामनन्यापेक्षिता ॥

हंसबर्हिणदक्षाण्डा यद्यप्यत्यर्थशुक्लळाः ।
मुनयः सदया ब्रूयुस्तान्योगेष्वन्यथा कथम् ॥

अन्यथेति यद्यपि कश्चिन्न्यूनतादोषः परिहार्यो न स्यात्ततः सदयाः सुदूरं त्यक्त प्राणिहिंसाः कथमिव हंसाद्यण्डान् प्रयोगेषु ब्रूयुः ॥

कथं वा सर्वएवैते योगा रागाग्निदीपनाः ।
क्लिष्टसङ्कल्पजननाः प्रोक्ताः संसारवर्द्धनाः ॥

यदि च न्यूनतादोषः परिहार्यो न स्यात्ततः कथं वै ते योगाः रागाग्नेर्दीपना उत्तेजनाननिर्वापणाः सर्वं एव कामस्योद्दीपनाः प्रयोजिताः क्लिष्टस्य च सङ्कल्पस्य जननाः यत्नजे यस्य च संसारस्य वर्द्धनाः प्रोक्ताः ॥

त्रिकालदर्शिभिर्दिव्यैः सत्वदोषविवर्जितैः ।
पूर्वाचार्यैः कृतं वर्त्म कोलङ्घयितुमर्हति ॥

एतच्च वर्त्म त्रिकालदर्शिभिः पूर्वाचार्यैः कृतं कोस्मदादिर्लङ्घयितुमतिक्रामितुमर्हति । दर्शनं दर्शः त्रिकाले भूतभविष्यद्वर्तमानाख्ये काले दर्शो येषां तैः । दिविभवत्वादिव्यास्तैः । तथा सत्वदोषा रागद्वेषादयः तद्वर्जितैराचार्यैः ॥

प्रक्रान्ते सर्वथा सर्वमुक्तं भवति सूदितम् ।
नहि लेशाभिधानेन लभ्यः सर्वार्थसङ्ग्रहः ॥
तथा च गर्दभीक्षीरं मांसमश्वश्च हस्तिनाम् ।
महासागरतोयं च प्रोक्तं निरुपयोग्यपि ॥

सर्वथा प्रक्रान्ते सर्वप्रकारं वक्तुमारब्धे सति सर्वमेवोक्तं सूदितं भवति । न तु लेशोक्तम् । एतदेवोच्यते नहीत्यादिना । लेशाभिधानेन स्तोकोक्त्या सर्वेषामर्थानां संग्रहो न लभ्यो भवति । तथा च गर्दभीक्षीरादिकं निरुपयोग्यपि प्रवक्तव्यमेव ॥

तस्मात् न्यूनतादोषं परिहृत्यास्यतन्त्रस्य व्यापित्वमुच्यते ॥

अग्र्यत्वेपि विशेषेण भूरितन्त्रार्थसङ्ग्रहात् ।
सङ्ग्रहाद्यन्नबुध्येत तज्ज्ञानमतिदुर्लभम् ॥

अग्र्यत्वे साम्प्रतिकत्वेपि संग्रहादस्मात्तन्त्राद्यन्नबुध्येत तज्ज्ञानमतिदुर्लभम् । एवंविधस्यान्यस्योपायस्याभावात् । किम्भूतात् संग्रहादित्याह । भूरितन्त्रार्थसंग्रहात् प्रभूतानां तन्त्राणां सम्बन्धिनोर्थस्य संग्रहादेकत्रावस्थापनात् ॥

यथा प्रतिज्ञातमितिक्रमेण
वेदोयमष्टाङ्गनिधेर्निबद्धः ।
अभ्यस्यतोमार्गमिवार्य सत्यं
सञ्जायते स्वार्थपरार्थसिद्धिः ॥

यथेति । पूर्वं यथा प्रतिज्ञातं तथा क्रमेणाष्टाङ्गनिधेर्वेदोयमिति निबद्धः । यं निबन्धमभ्यस्यतः पुंसस्तथा स्वार्थपरार्थयोः सिद्धिः सञ्जायते यथामार्गाख्यमार्यसत्यमभ्यस्यतश्चत्वार्यपत्यानि दुःखं समुदायो निरोधोमार्गश्चेति सौगतप्रसिद्धलक्षणानि । एवं च पूर्वं प्रतिज्ञातम् । सर्वतन्त्राण्यतः प्रायः संहृत्याष्टाङ्गसंग्रहः । अस्थानविस्ताराक्षेप पुनरुक्तादिवर्जितः । हेतुलिङ्गौषधस्कन्धत्रयमात्रनिबन्धनः । विनिगूढार्थतत्वानां प्रदेशाना प्रकाशकः । स्वान्यतन्त्र-

विरोधानां भूयिष्ठं विनिवर्तकः । युगानुरूप सन्दर्भो विभागेन करिष्यत इति ॥

पितामहमुखोद्गीर्णमिमायुर्वेदवाङ्मयम् ।
जीवितारोग्यधर्मार्थसुखगौरवकीर्तिकृत् ॥
अलंकृतं युक्तिपदैः सद्रत्नैरिव काञ्चनम् ।
षट्त्रिंशतार्थदुर्गेषु भिषजां संक्रमैरिव ॥

पितामह इत्यादि । इत्यनेनप्रकारेणायुर्वेदवाङ्मयं पितामहस्य ब्रह्मणोमुखादुद्गीर्णं जीवितादिकृत्स्वरूपं षट्त्रिंशता युक्तिपदैर्युक्तिस्थानैरलंकृतं तथा यथासद्रत्नैः काञ्चनं सुवर्णमलंक्रियते । षट्त्रिंशता युक्तिपदैरिति संख्यासंख्येययोरव्यतिरेकापेक्षया निर्देशः । किम्भूतैर्युक्तिपदैरित्याह । भिषजामर्थदुर्गेषु संक्रमैरिव स्थितैः । यथा हि दुर्गा गजादिगुप्ताः परैरधिगन्तुमशक्याः संक्रमैः सेतुभिः शक्या भवन्ति तद्वद्येर्था भिषजामगम्यास्ते युक्तिपदैर्ज्ञातैर्गम्या भवन्ति ॥

तत्राधिकरणं योगो हेत्वर्थोर्थः पदस्य च ।
प्रदेशोद्देशनिर्देश वाक्यशेषाः प्रयोजनम् ॥
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः ।
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः ॥
पूर्वपक्षविधानानुमतव्याख्यानसंशयाः ।
अतीतानागतापेक्षा स्वसंज्ञोह्य समुच्चयाः ॥
निदर्शनं निर्वचनं नियोगोथ विकल्पनम् ।
प्रत्युत्सारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः ॥

तत्रेत्यादिनायुक्तयः उच्यन्ते । वाक्यार्थानां योजनं युक्तिः याभिर्योजनाभिर्विना तन्त्रमसंबद्धं भवति । का युक्तयः । तत्र नेत्राधिकरणंनाम अधिकरणं प्रस्तावः सामान्येनोक्तमप्यर्थजातं यद्बलाद्विशेषेवस्थाप्यते तदधिकरणम् । यथा सप्ताहादौ वधं केचिदाहुरन्ये दशाहत इति वाक्यार्थः सामान्येन प्रवृत्तोधिकरणवशाज्ज्वराख्ये विशेषेऽवस्थाप्यते ॥ १ ॥ योगो नामयोगः सम्बन्धः स च पदार्थयोर्वाक्यार्थयोर्वा । तत्र पदार्थयोः साध्यसाधनभावेन । यथा रागादिरोगा इत्यादौ समूला इत्यस्यापास्ता इत्यनेन । वाक्यार्थयोर्यथा जीर्णाजीर्णविशङ्कायां पुनरुष्णोदकं पिबेदित्यस्य तेनोद्गारविशुद्धिःस्यात्ततश्च लघुता रुचिरित्यनेन ॥२॥ हेत्वर्थोनामयदेकत्रोच्यमानमन्यत्रापि तथैवोपयुज्यते । यथा तत्रैकैकत्र शाखायामित्याद्य वेध्योक्त्याशेषा वेध्या इति गम्यते ॥ ३ ॥ पदार्थोनामपदेनार्थोऽवगम्यते । यथा गुर्वादयो गुणशब्दादवगम्यन्ते ॥ ४ ॥ प्रदेशोनाम यत्रैकदेशस्योच्यमानस्यार्थस्य प्रसादादनुच्यमानोपि तच्छेष आपद्यते सः प्रदेशः । यथा कुकूलादिपाकक्रमेण लाघवातिशयोऽपूपानामुच्यमानानां प्रसादादनुच्यमानान्यपि कृतान्नानि तथावगम्यन्ते ॥ ५ ॥ उद्देशोनाम यत्रार्थानां शब्दमात्रेणैव कीर्तनमुद्देशः । ह्रस्वदीर्घा इत्यादयोऽष्टौ नेत्रदोषा इति शब्दमात्रेणाष्टौ कीर्तिताः ॥ ६ ॥ निर्देशोनाम यच्छब्दमात्रेण निर्दिष्टानां स्वरूपविशेषप्रदर्शनाय पुनः कीर्तनं निर्देशः यथा वस्तिव्यापदिद्रुतोत्क्षिप्त इत्यादिकमुद्दिश्य तेषु दोषं प्रदर्शयितुमनुच्छ्वास्यतु बद्ध इत्युच्यते ॥ ७ ॥ वाक्यशेषोनाम यस्मिन् वाक्ये एकदेशः शिष्यते व्याख्या कालेत्वनुच्यमानोप्या-

पतति स वाक्यशेषः । यथा रोगस्तु दोषवैषम्यं दोषसाम्यमरोगता इत्यत्र उच्यत इति वाक्यशेषः ॥ ८ ॥ प्रयोजननाम यत् सम्पादयितुं क्रियाह्यारभ्यते तत्प्रयोजनम् । यथा सदोषेषु दोषशेषपाचनमग्निसन्धुक्षणं च सम्पादयितुमौषधपानमारभ्यते ॥ ९ ॥ उपदेशोनाम शुद्धस्याप्तवचनस्यकीर्तनमुपदेशः । यथा गर्भस्तुमातुः पृष्ठाभिमुखो ललाटे कृताञ्जलिः संकुचिताङ्ग इत्येवमादिः ॥ १० ॥ अपदेशो नाम प्रतिज्ञातस्य साधनहेतुरपदेशः । यथा अहितायोत्तरोत्तरं दुष्टा वातादय इत्यस्यां प्रतिज्ञायां दुष्परिहरत्वादिति हेतुः ॥ ११ ॥ अतिदेशो नाम अन्यसम्बन्धिनां धर्माणामन्यत्रावस्थापनमतिदेशः । यथा पालक्यासम्बन्धिनां धर्माणां चुचावव्रस्थापनम् ॥ १२ ॥ अर्थापत्तिर्नामयदेकस्मिन्नर्थे उच्यमाने अनुक्तस्याप्यर्थस्य बलादागमनं सार्थापत्तिः । यथा पक्वं जले जीर्णेष्वामं न पेयमित्युच्यमाने आभोजनादित्यनुच्यमानस्यापि सामर्थ्यादागमनम् ॥ १३ ॥ निर्णयो नाम उद्दिष्टानामर्थानामनुद्दिष्टेन निराकाङ्क्षत्वापादनं निर्णयः । यथा वर्त्मरोगविज्ञानीयोक्तानां रोगाणां वर्त्मरोगप्रतिषेधनिराकाङ्क्षत्वापादनम् ॥ १४ ॥ प्रसङ्गो नाम यदप्राकरणिकस्यापि वस्तुनः किञ्चित् सम्बन्धेन यत् कीर्तनं स हि प्रसङ्गः । यथा वमनप्रस्तावे धूमान्तैः प्रायः सर्वैरित्यादेरप्राकरणिकस्य कीर्तनम् ॥ १५ ॥ एकान्तो नाम यत् पक्षान्तरव्यावर्तकं तदेकान्तः । यथा दोषहेतुजत्वोक्तेर्निजत्वं न कदाचिदपि बाह्यहेतुजं व्याप्नोति ॥ १६ ॥ नैकान्तो नाम यदुच्यमानमप्यवश्यम्भावित्वेना नियतं स नैकान्तः । यथा ज्वरस्तु जातः षड्रात्रादश्विनीषु निवर्तत इत्येतदुक्तमप्यवश्यम्भावित्वेना नियतम् ॥ १७ ॥ अपवर्गो नाम सामान्योक्त्यनुप्रविष्टस्य विशेषेणाकर्षणं सोपवर्गः । यथा मधुरं श्लेष्मलमित्युक्तावनुप्रविष्टेषु जीर्णशाल्यादिषु शब्देनाकर्षणम् । ॥ १८ ॥ विपर्ययो नाम उक्तस्यान्यथाभावो विपर्ययः । यथा निदाने क्तानामनुपशयो भवति तद्विपरीतानां चोपशयः ॥ १९ ॥ पूर्वपक्षो नाम परप्रतिज्ञातानुपपत्तिप्रदर्शनपरो वाक्यसमुदायः पूर्वपक्षः यथा षड्रसवादिनं प्रत्यनेकरसप्रतिपादकानि वाक्यानि ॥ २० ॥ विधानं नाम तन्त्रस्यकर्त्रा विशिष्टाया पदादिरचना कृता तद्विधानम् । यथा सर्वविरोधपरिज्ञानाव्यवहारोच्छित्तिर्माभूदित्यभिप्रायेणोक्तं न च तद्विज्ञानमेकान्तभद्रकामिति ॥ २१ ॥ अनुमतं नाम परपक्षस्य भिन्नस्याप्यङ्गीकरणमनुमतम् । यथा वस्तिविधाने कल्पनाया मतेषु दोषौषधादिबलतः सर्वमेतत् प्रमाणयेदित्यङ्गीकरणम् ॥ २२ ॥ व्याख्यानं नाम सङ्क्षेपेणोक्तस्यार्थस्य विस्तरेणाख्यानं व्याख्यानम् । यथा सर्वरोगनिदाने तस्योपलब्धिर्निदानादिभिरिति सङ्क्षेपेणोक्तस्य त ेत्यादिना विस्तरेणाख्यानम् । अथवा स्फुटैः शब्दैरनभिहितं गुरुपारम्पर्यक्रमागतम् ॥ २३ ॥ संशयो नाम विरुद्धानां पक्षाणामनिश्चयः संशयः । यथा विषवेगसंम्भवपक्षेषु ॥ २४ ॥ अतीतापेक्षानामयत्रातीतं पदमपेक्ष्यसम्बन्धार्थता भवति सातीतापेक्षा । यथा स्वेद्यादयः स्नेह्या इत्युक्तेनत्वतिमन्दाग्निरित्यादेः स्नेह्या इत्यपेक्षते । यथा

च ज्वरे लङ्घनं कुर्वीतेति सूत्रोक्तं लङ्घनमपेक्षते ॥ २५ ॥ अनागतापेक्षा नाम यत्रानागतेनार्थेन सम्बन्धिता भवति सानागतापेक्षा । यथा ततो नावनगण्डूषेत्यादिना दिनचर्यायां नस्यादिविधयोपेक्ष्यन्ते ॥ २६ ॥ स्वसंज्ञानाम या स्वतन्त्रे एवमन्यस्मिञ्छास्त्रे न श्रूयते सा स्वसंज्ञा । यथा आपानोजेन्ताक इत्येवमादि । ॥ २७ ॥ ऊह्यं नाम यत् भिषजा स्वप्रज्ञया शब्देनानुक्तमपि व्यवस्थाप्यते तदूह्यम् । यथा द्रव्यं जह्यादयौगिकमिति यन्न यौगिकं तच्छब्देनोक्तमपि प्रज्ञया व्यवस्थाप्यते ॥ २८ ॥ समुच्चयो नाम एकस्मिन् विहिते तदविरोधेन तत्रैव द्वितीयस्य विधानं समुच्चयः । यथा वातस्योपक्रमः स्नेहः स्वेद इत्यादि ॥ २९ ॥ निदर्शनं नाम साध्यस्यैकदेशो दृष्टान्तो निदर्शनम् । यथा आमदोषेषु त्रिविधेषु लङ्घनपाचनशोधनानि दृष्टान्तः । (एवमन्यानपि व्याधीन् स्वनिदानविपर्ययात् चिकित्सेदित्यादेः) ॥ ३० ॥ निर्वचनं नाम संज्ञयोक्तस्य तदर्थेन योजनं निर्वचनम् । यथा सूचीभिरिव गात्राणि भिद्यतीति विषूचिका ॥ ३१ ॥ नियोगो नाम क्रियाणां व्यापाराणां नियोगः । यथा भवता ऽ दमूर्च्छापरीतेनापि नैषा पिण्डिका विमोक्तव्येति ॥ ३२ ॥ विकल्पो नाम क्रमेण यौगपद्येन वा सम्भविनां पक्षाणां कीर्तनम् । यथा कुर्वीत लङ्घनं प्राग्रूपेषु ज्वरादौ वा ॥ ३३ ॥ प्रत्युत्सारो नाम यत्रोपपादि दर्शयन्तः परस्परमतानि निवारयन्ति । यथा गर्भिणी अष्टमे मासि क्षीरयवागूं सर्पिष्मतीं पिबेत् नेति खण्डकाप्यः गर्भस्य पैङ्गल्या बाधभयात् । अस्तु पैङ्गल्या बाधस्तथाप्येवं कुर्वती नीरुजं बलवर्णोपेतमपत्यं जनयतीति भगवानात्रेयः ॥ ३४ ॥ उद्धारो नाम यच्छास्त्रे चोद्यस्य समाधानम् । यथा चित्रकर्मगुणकृत् गुरुणो को बस्तिरित्यादि यावत् सर्वतः कथमपोहति दोषानिति चोद्यस्य स्तिमितमारुतवश्यमेतादित्यादि समाधानम् । ॥ ३५ ॥ सम्भवो नाम किमप्यन्यत्वादर्शनाद्येन नियमेन स्थाप्यते स सम्भवः । यथा सर्वरोगेषु हेतुलिङ्गौषधादीनां सामान्येनोक्तौ वातादिविशेषेणावस्थापनं सम्भवप्रसादाल्लभ्यम् । ॥ ३६ ॥ एवं तन्त्रयुक्तयः । यद्यपि भट्टारकप्रस्थानेन च परिप्रश्नव्याकरणव्युत्क्रान्ताभिधानहेत्वाख्याश्चतस्रोवशिष्यन्ते तथापि ता आचार्येण तन्त्रेणानिबद्धा इत्यत्र नोच्यन्ते । अथवा उक्तास्वेवान्तर्भाव्याः । अथवा तन्त्रयुक्तित्वमेव तासां नाङ्गीक्रियते । तत्र चाग्न्यतियोगोक्तौ वातादिविशेषेणावस्थापनं सम्भवप्रसादाल्लभ्यमेवमाद्युक्तम् ॥

**सरसः सुप्तपद्मस्य रविदीधितयो यथा ।**
**यथा गृहस्य दीपाभास्तथा तन्त्रस्ययुक्तयः ॥**
**अधीयानोपि तन्त्राणि तन्त्रयुक्त्यविचक्षणः ।**
**नाधिगच्छतितन्त्रार्थमर्थं भाग्यक्षये यथा ॥**

सरस इत्यादि सुबोधम् । तन्त्रयुक्त्यविचक्षणः एतासु षट्त्रिंशत्तन्त्रयुक्तिष्वसमर्थः तन्त्रार्थं नाधिगच्छति न प्राप्नोति यथा भाग्यक्षये धनम् ॥

**वाक्यार्थयोजनादेता युक्तयस्त्विष्टसिद्धिदाः ।**
**असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधकाः ॥**

लीनव्यत्यासलेशोक्तिगदितानां प्रकाशकाः ।
वाक्यन्यायोदधेःसारं गृहीत्वैवं व्यवस्थिताः ॥

एता युक्तयो वाक्यार्थस्ययोजनाद्धेतोः स्वेष्टसिद्धिं ददति । यानि चासद्वादिनामर्थासम्बन्धप्रदर्शनपराणि वाक्यानि तेषां प्रतिषेधकाः । लीनगदितानां व्यत्यासगदितानां लेशगदितानामुक्तिगदितानां च प्रकाशकाः । लीनं तद्यत् स्फुटं वक्तुं न पार्यते । व्यत्यासः परस्परविवर्तनम् । लेशोंऽशेन स्पर्शः । उक्तिर्वचनभङ्गिः । एताश्च युक्तयो वाक्यन्यायोदधेरसंख्यप्रकारसम्भविनो गेयस्येव ज्ञातयः सारं गृहीत्वा एवं व्यवस्थिताः । पदार्थयोजनास्तु व्युत्पन्नानां प्रसिद्धा एवेत्यत आचार्येण नोक्ताः । तासु च तत्रभवतो हरेः श्लोकौ ॥ संसर्गो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सान्निधिः ॥ सामर्थ्यमौचीति देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव इति । अनयोरर्थः येषां पक्षे अनेको गोशब्दो वागादिविषयस्तेषां विशेषावच्छेदे संसर्गादीनि हेतवः । येषामप्येक एव गोशब्दो वागाद्यनेकविषयाभिधानोऽनेकशक्तियुक्तस्तेषामपि शक्त्यनवच्छेदे संसर्गादीनि विशेषस्मृतिहेतवः । तत्र संसर्गो यथा । धेनुरानीयतामित्यत्र सर्वत्र प्रत्यग्रप्रसवाभिधायित्वाद्धात्वर्थसन्देहे स वत्सतरेत्यादिनोक्तः किशोरतराद्यन्यतमसंसर्गः । सन्देहविच्छेदे हेतुः । कचिद्विप्रयोगः । यथा करभरहिता धेनुरानीयतामित्युक्ते यैव निर्जातकरसम्बन्धा धेनुः सैव करभरहिताऽनीयते अन्यस्यास्तु करभरहितत्वाव्यभिचाराद्विशेषणं नोपपद्यते । कचित् साहचर्यं यथा शिला आनीयतां गन्धद्रव्याणि चेत्यत्र पेषणशिलैवानीयते । यथा रामलक्ष्मणावित्यत्र रामो दाशरथिरेवोच्यते । कचिद्विरोधः । यथा रामार्जुनावित्यत्रार्जुनः कार्तवीर्य एव । कचिदर्थः । यथा गोपालकमानयाध्यापयेत्यत्रार्थाद्यस्याध्यापनं सम्भवति स नाम्ना गोपालक आनीयते न गवां पाता । कचित् प्रकरणम् । यथा भोज्याङ्गेष्वम्लादिशब्दकेषूपसंह्रियमाणेष्वेतावदुच्यते सैन्धवमानयेति उक्ते च प्रदीयते लवणं न चाश्वादिकम् । कचिल्लिङ्गम् । यथा अक्ताः शर्करा उपनयेत्यस्मिन् वाक्ये कस्याप्यञ्जनद्रव्यस्य सम्भवे तेजो वै घृतमित्यस्मिन् वाक्यान्तरे दृष्टात् लिङ्गात् घृतसाधितत्वं शर्कराघुटिकाया अजिक्रियया निर्द्धार्यते । कचिच्छब्दान्तरसन्निधिः । यथार्जुनः कार्तवीर्यः रामो जामदग्न्य इति । कचित् सामर्थ्यम् । यथा अनुदरा कन्येत्युदरविशेषप्रतिषेधो गम्यते । अभिरूपाय कन्या दीयतामित्यत्रचाभिरूपतमायेति गम्यते । कचिदौचिती । तथा च केषाञ्चित् प्रयोक्तॄणामौचित्याच्छब्दस्य निन्दाप्रशंसाद्यभिधायित्वं गम्यते । यथा भद्रमुखेति दस्युराजसादौ । यथा वणिजो वाराणसीजित्वरा इति च वदन्ति । कचिद्देशः । यस्यैवशब्दस्य कचिद्देशे निन्दितवाचित्वं तस्यैवान्यत्र प्रशंसावाचित्वं प्रसिद्धमेवं रूपम् । कचित् कालः । यथा पूर्वाह्णे पच्यतामित्युक्ते विशिष्टसाधनैश्च विक्लित्तिर्गम्यते सा च विशिष्टसाधनादिशाचमगृहीत्वा पचनविशेषावगतिः । रात्रौ तु निद्राक्षयो गम्यते । क-

चिद्व्यक्तिः । यथा पुल्लिङ्गो धर्मशब्द आत्मगुणं वक्ति नपुंसकस्तु यज्ञम् । कचित् स्वरादयः । यथा अस्थण्डिलेष्वित्यत्र पूर्वपदप्रकृतिसाधारणतत्पुरुषावगतिरस्थण्डिलेष्वित्यत्रचान्तोदात्तेन बहुव्रीहिः । आदिग्रहणात् कचिद्विभक्तिः । यथा अर्द्धमर्द्धः अर्द्धमिति द्वितीयया कर्मप्रतीयते अर्द्ध इति प्रातिपदिकार्थमात्रम् । कचित्तद्धितः । यथा दात्तः कूपइत्यत्र तद्धिते न विपाशात उत्तरकूलभवत्वम् । दक्षिणकूलभवत्वं न कूपस्येति स्पष्टम् । कचिद्व्यञ्जनम् । यथा सुसिक्तमित्यत्र षत्वस्य भावाभावाभ्यां सुशब्दस्योपसर्गत्वं कर्मप्रवचनीयत्वं च गम्यते । एवमनेकमप्यूह्यमिति श्लोकार्थः ॥

**एतदागमसिद्धत्वात् प्रत्यक्षफलदर्शनात् ।**
**प्रयोज्यं मन्त्रवत्तन्त्रं तन्त्रज्ञानविशारदैः ॥**

एतदिति । एतच्च तन्त्रं तन्त्रज्ञानविशारदैर्मन्त्रवत् सम्प्रयोक्तव्यं नात्र फलाभावशङ्का कार्येत्यर्थः । कुत इत्याह । आगमसिद्धत्वात् आगम एवास्मिन् प्रमाणम् । प्रत्यक्षफलदर्शनमधिकं प्रमाणम् ॥

**पितामहेन लोकस्य स्मृत्वा तदिदमव्ययम् ।**
**अकालमृत्युरक्षार्थमलौहं वर्म निर्मितम् ॥**

पितामहेनेत्यादि । व्याख्यासमम् । पितामहेन ब्रह्मणा अलौहं वर्म निर्मितं शस्त्रेण विना कारितम् ॥

**सुज्ञातमेतदमृतं स्वस्थास्वस्थसुखास्पदम् ।**
**यथेप्सितफलाशेषपुरुषार्थप्रसाधनम् ॥**

सुज्ञातं साकल्येन ज्ञातमेतत्तन्त्रममृतं स्वस्थानामस्वस्थानां च सुखस्यास्पदं स्थानम् । ईप्सितफलावाप्तिक्रमेणाशेषस्य पुरुषार्थस्य प्रसाधनम् ॥

**इदं शास्त्रमदृष्टीनामेवमालोककार्यपि ।**
**मण्डलं भास्करस्येव न प्रकाशाय जायते ॥**

इदं च शास्त्रमेवमालोककार्यपि अदृष्टीनामबुद्धिमतां प्रकाशाय न जायते । यथा अदृष्टीनामचक्षुषांभास्करस्यादित्यस्यमण्डलम् ॥

**ध्रुवं वैद्येषु कल्याणमायुर्वेदानुसारिषु ।**
**इतरेष्वितरच्छस्त्रविषज्वलनकर्मसु ॥**

आयुर्वेदानुसारिषु वैद्येषु ध्रुवमवश्यं कल्याणमुभयलोकश्रेयः । इतरेष्वित्यायुर्वेदाननुसारिषु इतरदित्यवश्यमकल्याणम् । किम्भूतेष्वित्याह । शस्त्रविषज्वलनकर्मसु शस्त्रविषाग्निरूपं मारणात्मकत्वात् कर्म येषामिति ॥

अज्ञकर्मणः शस्त्रादिसाम्यं दर्शयित्वा शस्त्रादित आधिक्यमपि प्रदर्शयितुमाह ॥

**कुर्यात् प्रयुक्तं शस्त्रादि सशेषमपि रोगिणम् ।**
**न त्वेवं भेषजं मोहादनालोचितयोजितम् ॥**

कुर्यादित्यादि । शस्त्रादि शत्रुणा प्रयुक्तं सशेषमपि रोगिणं कुर्यात् । यत् पुनर्भेषजमनालोचितयोजितमनालोचितमेव मोहाद्योजितं तन्न त्वेव सशेषं कुर्यात् ॥

**सदा दोषौषधादीनि वीक्ष्य द्वादशतत्वतः ।**
**कुर्याच्चिकित्सितं प्राज्ञो न योगैरेव केवलैः ॥**

तस्मात् द्वादशदोषौषधादीनि दोषदूष्य-बलकालानलप्रकृतिवयःसत्वसात्म्याहारावस्थौष-धानि तत्वतः परीक्ष्य प्राज्ञश्चिकित्सितं कुर्यात् । न तु केवलैरेव योगैः ॥

**मात्रादिसम्यगज्ञात्वा यदृच्छाप्रतिपादितः ।**
**हिनस्ति व्याधितं योगो घृतमाक्षिकयोरिव ॥**

मात्रेत्यादि । योगश्च मात्रा कालसंयोग संस्कारादिकं सम्यगज्ञात्वा यदृच्छयैव प्रतिपादितो व्याधितं हिनस्ति । यथा घृतमाक्षिकयोः समयोगः ॥

**दृष्ट्वा विषेप्यमृततां घृतादौ मारणात्मताम् ।**
**शास्त्रतत्वं न विज्ञाय स दुरात्मा चिकित्सति ॥**

यश्च दुरात्मा भवति सोवश्यं शास्त्रतत्वं विज्ञाय न चिकित्सति । विषे मारणात्मकेपि संयोगादिवशादमृततां दृष्ट्वा घृतादौ च रसायने मारणात्मकतां दृष्ट्वा ॥

**सुगीतश्चैषकस्यापि महाश्लोको महात्मनः ।**
**वैद्याश्चाश्रुतशास्त्रार्था मूर्खाश्च प्रभविष्णवः ।**
**अकालमृत्यवोह्येते विचरन्ति महीतले ॥**

सुगीतइत्यादि । व्याख्यासमम् ॥

**लोभयन्त्यातुरं मूढा ये चित्रैः कर्मकौशलैः ।**
**तेभ्यो रक्षेत्सदात्मानमात्मा यस्मात् सुदुर्लभः ।**

ये मूढा नानाविधैः कर्मकौशलैरातुरं लोभयन्ति तेभ्य आत्मानं सदा रक्षेत् यस्मादात्मा सुदुर्लभः ॥

**ते घुणाक्षरवत्कश्चिदुत्तार्य नियतायुषम् ।**
**घ्नन्ति वैद्याभिमानेन शतान्यनियतायुषाम् ॥**

ते मूढाः कश्चिन्नियतायुषं घुणाक्षरवत् काकतालीयवदुत्तार्य भिषजमात्मानं मन्यमाना अनियतायुषां शतानि घ्नन्ति हिंसन्ति । घुणैः कृमिभिर्भक्षिते काष्ठे यान्यक्षराणि दृश्यन्ते तानि तैर्बुद्धिपूर्वं न क्रियन्ते ॥

**रोगार्तस्य विषण्णस्य यत्नलभ्यसुखायुषः ।**
**अवैद्यो निर्घृणःक्रूरो यः करोति भिषाग्जितम् ॥**
**पापस्य मृत्युदूतस्य दुर्मतेस्त्यक्तधर्मणः ।**
**नरो नरकपाती स्यात्तस्यसम्भाषणादपि ॥**

विषण्णत्वादियुक्तस्य रोगार्तस्य अवैद्य एव यो निर्घृणः क्रूरत्वान् भेषजं करोति तस्य पापादिरूपस्य सम्भाषणादपि नरो नरकपाती स्यात् ॥

**अतन्त्रीकृततन्त्रार्थाः शास्त्रमात्रोपजीविनः ।**
**राज्ञांप्रमादाद्राष्ट्राणि चरन्तिव्याधवृत्तयः ॥**
**तान् कालपाशसदृशान् वर्जयेच्छास्त्रदूषकान् ।**
**सेवेत शमविज्ञानज्ञानपूर्णान् भिषक्तमान् ॥**

यैस्तन्त्रार्थो न तन्त्रीकृतः सम्यक् तन्त्रयित्वा बुद्धौ न निवेशितः ते व्याधवृत्तयो मृगमारका राज्ञां प्रमादाद्राष्ट्राणि चरन्ति । यदि पुनाराजानः प्रमत्ता न भवन्ति ततः कथमिव चरितुं लभन्ते । तान् कालपाशसदृशत्वादियुक्तान् वर्जयेत् प्राज्ञः । शमादिपूर्णांश्च भिषक्तमान् सेवेत ॥

**अन्नपानानिपथ्यानि व्याधिनिर्घातमौषधम् ।**
**रसायनानि वृष्याणि प्राप्यन्ते वैद्यसंश्रयात् ॥**

अराजका यथादेशा भर्तृहीना यथा गृहाः ।
आतुराद्यास्तथापादाः शोच्या वैद्यानधिष्ठिताः
प्राणाचार्यं बुधस्तस्माद्दयालुं विजितेन्द्रियम् ।
अश्विनाविव देवेन्द्रः पूजयेदादृतः सदा ॥

पथ्यान्यन्नपानादीनि साधु वैद्यसंश्रयात् प्राप्यन्ते । अराजका इत्यादि व्याख्यासमम् । यत एवं तस्मात् बुधः प्राज्ञो दयालुत्वादियुक्तं प्राणाचार्यमादृतः सन् सदा पूजयेद्यथा देवेन्द्र अश्विनौ पूजयतीति ॥

यज्ञस्य हि शिरश्छिन्नमश्विभ्यां सन्धितं पुनः ।
पातितादशनाः पूष्णो भगस्य च विलोचने ॥
राजयक्ष्मार्दितश्चन्द्रस्ताभ्यामेव चिकित्सितः ।
सोमान्निपतितो वज्री भुजस्तम्भे च दारुणे ॥
भार्गवश्चयवनः कामी वृद्धःसन् विकृतिं गतः ।
वीर्यवर्णबलोपेतः कृतस्ताभ्यां पुनर्युवा ॥
एभिश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ ।
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम् ॥
अश्विभ्यांसहितःसोमं प्रातः पिबति वासवः ।
सौत्रामण्यां च भगवानश्विभ्यांसह मोदते ॥
अश्विनोः कल्प्यते भागो यज्ञेषु ब्राह्मणैरपि ।
अश्विनावग्निरिन्द्रश्च वेदेषु सुतरां स्तुताः ॥
वैद्याविल्यश्विनौ तस्मात् पूज्येते विबुधैरपि ।
अजरैरमरैर्नित्यं सुखितैरेवमादृतैः ॥
व्याधिमृत्युजराग्रस्तैर्दुःखप्रायैः सुखार्थिभिः ।
किं पुनर्भिषजोमर्त्यैः पूज्याःस्युर्नातिशक्तितः ॥

यज्ञस्येत्यादिनेतिहासेनाश्विनोः प्रभावकीर्तनम् । व्याख्यासमम् । भिषगुत्तमावश्विनौ महात्मनामिन्द्रादीनां भृशं पूज्यौ बभूवतुः । तस्माद्विबुधैर्देवैरप्यश्विनौ वैद्याविति पूज्येते । किम्भूतैर्विबुधैरित्याह अजरैरित्यादि एवंगुणैरपि । किं पुनर्मर्त्यैर्मानुषैस्तत्रापि व्याध्यादिग्रस्तैर्भिषजो यथाशक्तितो न पूज्याःस्युः । [यज्ञस्येत्यादि । यज्ञो ब्रह्मा । इन्द्रः सोमान्निपतितः सोममतीव पीत्वगतिविरेचित इत्यर्थः । एतैरन्यैश्चकर्मभिर्भिषगुत्तमावश्विनौ महात्मनामिन्द्रादीनां भृशं पूज्यौ बभूवतुः । प्रातः प्रातस्सवने शक्र अश्विभ्यां सहितः सोमं पिबति । सौत्रामण्यां च सहाश्विभ्यां शक्रो मोदते । देवैरप्यश्विनौ पूज्येते भिषगुत्तमाविति । किं पुनर्मर्त्यैर्व्याध्यादिग्रस्तैर्भिषजो नातिशक्तितः पूज्याः स्युर्यथाशक्ति पूज्याः । इति जर्जटः ॥ ]

शीलवान् मतिमान् युक्तो द्विजातिर्वेदपारगः ।
प्राणिभिःपितृवत्पूज्यःप्राणाचार्यःसहिस्मृतः ॥

शीलवत्वादिमान् वैद्यः प्राणिभिः पितृवत् पूज्यः स हि प्राणाचार्यः स्मृतो नान्यः । [स च भिषक् शीलवत्वादियुक्तो वेदपारंगतो गुरुवत् प्राणिभिः पूज्यः प्राणाचार्यो यतोऽत्राविति । इति जर्जटः ॥ ]

विद्यासमाप्तौ भिषजां द्वितीया जातिरुच्यते ।
न वैद्यो वैद्यशब्दं हि लभते पूर्वजन्मना ॥

**विद्यासमाप्तावार्षं वा ब्राह्मं वा भिषजं ध्रुवम् ।**
**सत्वमाविशति ज्ञानात्तेन वैद्यो द्विजः स्मृतः ॥**

विद्यासमाप्तावित्यादि । व्याख्यासमम् । आर्षं वा ब्राह्मं वा सत्वं कर्तृ विद्यासमाप्तौ भिषजं कर्मभूतमाविशति । [इदं चापरमपचितिकारणम् । विद्यासमाप्तावित्यादि । एतदुक्तं भवति । वैद्यो न द्विजः अपि तु विद्यासमाप्तौ वैद्यशब्दाभिनिष्पत्तिः । तस्यां च सत्यां ज्ञानोदयः । ततो ब्राह्मं सत्वमार्षं वा ध्रुवमवश्यं ज्ञानादाविशति । तस्माद्वैद्यो द्वितीय इव जातो भवति वैद्यशब्दलाभात् । उक्तं च । यस्यां यस्यामवस्थायां वर्तते तस्यां तस्यां जात इत्युपचर्यते तेन द्विजातीया वैद्यजातिर्भवतीति । ननु च विद्यासमाप्तावित्यनेनैव च पर्याप्तत्वात् ज्ञानग्रहणं किम् । उच्यते । य एव विद्यासमाप्तौ ज्ञानवान् न पुस्तकस्थानीयः तं ब्रह्मसत्वमार्षं वा विशति । ननु च ब्राह्मं वार्षं वेति कस्माद्विकल्पः एकस्यैवकस्मान्न नियमः कृतः । उच्यते । ब्राह्मणस्य वेदार्थपरिज्ञानादायुर्वेदार्थपरिज्ञानात् ब्रह्मसत्वानुप्रवेशसांसिद्धिकत्वाच्च ब्रह्मसत्वमाविशति वैश्यमार्षमिति यथासंख्येन प्रत्येतव्यमिति । मनुनाप्युक्तम । वैद्यस्तु वैश्यो वा ब्राह्मणोपि वा उच्यतेस्याप्यन्यसत्वप्रापणार्थमथापि वा इति । इति जर्जटः ॥ ]

**नावध्यायेन्नचाक्रोशेदहितं न समाचरेत् ।**
**प्राणाचार्यं बुधः कश्चिदिच्छेन्नायुरनश्वरम् ॥**

तं च बुधः आयुरनश्वरमिच्छन् नावध्यायेत् अवध्यानमहितकल्पनम् । न चाक्रोशेत् प्राणाचार्यम् । [अभिध्यानमहितचिन्तनमिति जर्जटः ॥ ]

**भिषगप्यातुरान् सर्वान् स्वसुतानिव यत्नवान् ।**
**आबाधेभ्योभिसंरक्षेत् ज्ञानं धर्ममनुस्मरन् ॥**

भिषजापि सर्व आतुराः स्वसुता इव पाल्याः ॥

**कुर्वते ये तु वृत्त्यर्थं चिकित्सापण्यविक्रयम् ।**
**ते हित्वा काञ्चनं राशिं पांसुराशिमुपासते ॥**

ये मनुष्या वृत्त्यर्थं चिकित्सापण्यस्य विक्रयं कुर्वते ते स्वर्णराशिं त्यक्त्वा पांसुराशिमुपासते सेवन्ते ॥

**रोगाख्यान्दारुणान्पाशानन्तकान्तिककर्षिणः ।**
**यश्छित्वा यच्छति प्राणान्दाता नास्त्येव तत्समः ॥**

किञ्च । वैद्येन समो दाता नास्ति । यो रोगाख्यान् दारुणान् पाशान् छित्वा प्राणान् यच्छति ददाति । किम्भूतान् पाशान् अन्तकस्य मृत्योरन्तिकं निकटं ये कर्षन्ति तान् ॥

**न जीवितप्रदानाद्धि दानमन्यद्विशिष्यते ।**
**तस्मादुपाचरेत् स्वेन स्वेनानि स्वतपस्विनः ॥**

न जीवितप्रदानादित्यादि व्याख्यासमम् । जीवितप्रदानादन्यद्दानं न विशिष्टम् । यस्मा-

देवं तस्मान्निखिलान् तपस्विनश्च स्वेन स्वकीयेन स्वेन धनेन वैद्य उपाचरेत् । [परो भूतदया धर्म इति मत्वा चिकित्सिते । वर्तते यः स सिद्धार्थः सुखमत्यन्तमश्नुते । इति चरकः । भूतदया च परो धर्म एवं ज्ञात्वा चिकित्सिते यो वर्तते सिद्धार्थः सोऽत्यन्तं सुखमश्नुते । इति जर्ज्जटः ॥]

सत्त्वार्थमीहमानस्य वैद्यस्यैवं महामतेः ।
वर्तन्ते सन्निधानेन नियतं सिद्धिदेवताः ॥

एवं सत्त्वार्थं नत्त्वात्मार्थमीहमानस्य चेष्टमानस्य महामतेर्वैद्यस्य सिध्याख्या देवता: नियतं सन्निधानेन वर्तन्ते ॥

कचिद्धर्मः कचिन्मित्रं कचिदर्थः कचिद्यशः ।
कर्माभ्यासःकचिच्चेतिचिकित्सानास्तिनिष्फला
नित्यमादरवान् वैद्यस्तस्मादार्तानुपाचरेत् ।
प्राणान्सहात्मनःकीर्त्यानिहन्त्येषामनादरात् ।

कचिद्धर्म इत्यादि व्याख्यासमम् । एषा मार्तानां प्राणान् निहन्तीति सम्बन्धः ॥

सर्वत्र मैत्री करुणातुरेषु
निरामदेहेषु नृषु प्रमोदः ।
मनस्युपेक्षापकृतिं व्रजत्सु
वैद्यस्य सद्वृत्तमलं तनोति ॥

सर्वत्र मैत्र्यादिकं वैद्यस्य साधुवृत्तं पर्याप्तं विस्तारयति । आतुरविषये करुणा । निरामदेहेषु स्वस्थेषु प्रमोदः ॥

सामिषेणापि चित्तेन जीवितोच्छेदकारिणः ।
योनिहन्त्यामयान्वैद्यःसोपिकेनोपमीयताम् ॥

यो वैद्यः सामिषेण सलोभेनापि चित्तेन जीवितस्योच्छेदकारिण आमयान् निहन्ति सोपि केनोपमीयताम् ॥

किमुतनिरामिषेणमनसा करुणा मृदुना
कृपणविशिष्टयोः सदृशमादरमुद्वहता ।
अतिगुरुबोधिसत्वचरितंसततंविदध-
च्छमयति रोगजालमपियोतिविरोधिमिथः ॥

यो वैद्यः करुणामृदुत्वादिगुणेन मनसा मिथः परस्परमतिविरोधि रोगजालं शमयति सः किमुत । आमिषं भोग्यवस्तु, कृपणः क्षुद्रः, विशिष्टः कृपणादन्यः । तयोरुभयोरपि सममादरमुद्वहता । किम्भूतो वैद्यः यः सदैवातिगुरुबोधि सत्वानां चरितं विदधत् ॥

अतिविरोधि रोगजालमित्येतदेवदाहः शूलमित्यादिना प्रदर्श्यते ॥

दाहःशूलं तृडाध्मानं क्षुत्क्षामत्वमरोचकम् ।
कःप्राकृतो जयेद्रोगान् नित्यमन्योन्यरोधिनः ॥

दाहेतिशीता क्रिया शूले सा स्वल्पापि महाविकारकरी । एवं तृडादिष्वपि यथायथं विरोधो वाच्यः ॥

मारुतामग्रहोन्मादमदान् सुसदृशाकृतीन् ।
कोजानीयाच्चिकित्सेद्वादूरभिन्नक्रियाक्रमान् ॥

मारुतादींश्च सुसदृशलक्षणान् सुदूरविभिन्नक्रियाक्रमांश्च को बालिशो यथावस्तु जानीयात् । ज्ञात्वा वा कश्चिकित्सितुं शक्नुयात् ॥

प्राणाचार्यं वेदपारं प्रयातं
बुध्यायुक्तं पूजयेन्नित्यमस्मात् ।
यस्मिन्यस्य प्राणयात्रानि बद्धा
तस्मै यच्छन् को धनानां धनायेत् ॥

प्रणाचार्यमिति । अस्मात् कारणादायुर्वेदपारंगतं बुध्या युक्तं च प्राणाचार्यं नित्यमेव धनदानादिना पूजयेत् । यस्य धनिनो यस्मिन् प्राणाचार्ये सर्वा प्राणयात्रा निबद्धा स्थिता तस्मिन्यच्छन् धनानि को मूढो धनानां धनायेद्व नाशं कुर्यात् । धनायेदित्यशनायादिसूत्रे निपात्यते ॥

आयुर्वेदं श्लोकलक्षेण पूर्वं
ब्रह्माम्नासीदग्निवेशादयस्तु ।
कृत्स्नज्ञेयप्राप्तसाराः स्वतन्त्रा-
स्तस्यैकैकं नैकधाङ्गं वितेनुः ॥

पूर्वं ब्रह्मा श्लोकानां लक्षेणायुर्वेदमाम्नासीत् । तस्मादग्निवेशादयः कृत्स्नज्ञेयप्राप्तसाराः स्वतन्त्राश्च सन्तस्तस्यायुर्वेदस्यकाय बालाद्यङ्गमेकैकमनेकधा वितेनुरिति स्थितम् ॥

भिषग्वरो वाग्भट इत्यभून्मे
पितामहोनामधरोस्मि यस्य ।
सुतोभवत्तस्य च सिंहगुप्त-
स्तस्याप्यहं सिन्धुषु लब्धजन्मा ॥

भिषग्वर इति । मे तन्त्रकर्तुर्वाग्भटनामा पितामहो भिषजां ज्येष्ठोभूत् । यस्याहमस्मि नामधरः । तस्य वाग्भटस्य सिंहगुप्त नामा सुतोभवत् । तस्यापि सिंहगुप्तस्याहं सुतः सिन्धुदेशे लब्धजन्मा ॥

समधिगम्य गुरोरवलोकितात्
गुरुतराच्च पितुः प्रतिभां मया ।
सुबहुभेषजशास्त्रविलोचनात्
सुविहिताङ्गविभागविनिर्णयः ॥

समधिगम्य इति । मया च अग्निवेशादिकृतायुर्वेदाङ्गविभागविनिश्चयो रचितः । कथमित्यबाह । अवलोकिताख्यादाद्गिुरोः प्रतिभां बुद्धिविकासं समधिगम्य । न केवलं तस्मादेव गुरोर्यावत् गुरुतराच्च पितुः । किम्भूतात् पितुराह । सुबहु भेषजं यच्छास्त्रं तदेवाशेषार्थपरिज्ञानहेतुत्वाद्विलोचनं यस्य ॥

पूर्वोक्तमेव वदता किमिवोदितं स्या-
च्छ्रद्धालुतुष्टिजननं न भवत्यपूर्वम् ।
सङ्क्षिप्तसंशयितविस्तृतविप्रकीर्णः
कृत्स्नोर्थराशिरिति साधु स एव दृष्टः ॥

मया च स एवाग्निवेशादिप्रणीतोर्थराशिः कृत्स्नः सर्वः साधु कृत्वा च दृष्टो निबद्धः । यतः पूर्वोदितमविशिष्टमेव वदता न किञ्चिदुदितं भवति । अत्यन्तापूर्वं चोच्यमानं श्रद्धालूनां तुष्टिजननं न भवत्यतः स एव साधुदृष्टः । यतस्तेषामग्निवेशादीनामर्थराशिः सङ्क्षिप्तसंशयितत्वादिदोषयुक्तः अतथाभूतोपि प्रतिभात्यतः स एव मया साधु दृष्टः ॥

**आयुर्वेदोदधेः पारमपारस्य प्रयाति कः ।**
**विश्वव्याध्यौषधिज्ञानसारस्त्वेषसमुचितः ॥**

एष चास्मत्तन्त्रो विश्वस्य जगतो व्याधीनामौषधानां च सार उत्कृष्टो भागः समुचितः। कृत्स्नस्य त्वायुर्वेदसागरस्यापारस्यानन्तस्य कः पारं प्रयाति ॥

स्मृत्वेत्यादिना आत्मतन्त्रस्योपादेयतामाचष्टे ॥

**स्मृत्वेदमुदितं पूर्वं श्रुत्वेदानीं द्वयोः पुनः ।**
**स्मर्तुः श्रोतुश्च सुतरां श्रद्धातुं कस्य युज्यते ॥**

इदं चार्थजातमेकेन ब्रह्मादिना स्मृत्वोदितं पूर्वकाले चोदितम् । अन्येन त्वस्मदादिना श्रुत्वोदितमुक्तं सम्प्रति चोक्तम् । एतयोरुभयोः कस्य श्रद्धातुं युज्यते । असाक्षात्कारत्वे समे एकस्योपरि कः पक्षपातः । अथवा उभयोः श्रद्धातुं कस्य युज्यत इति काका येन श्रुत्वेदानीं चोक्तं तस्यैव श्रद्धातुं युक्तं न त्वितरस्य । यस्माद्यथानुभवावस्थास्मृतिर्दुरुपपादा । कस्यापि कालातिक्रमात् संस्कारभ्रंश इति । कण्ठोक्त्या तु सममेवानौद्धत्येन श्रुतं भविष्यतीत्यूर्ध्वमेतीत्यादिना प्रदर्श्यते ॥

**अथवा श्रुतमप्येतत् स्मर्तुरेव क्रमागतम् ।**
**अभिधातृविशेषेण किं तथापि प्रयोजनम् ॥**

अथैवं कश्चिदाह यदद्यतनस्य श्रुतं तत् स्मर्तुरेव सम्बन्धिनः क्रमादायातम् । तत् स्मर्तुर्दोषाभावसूचनान्मया कृतेपि भ्रमादिविनाशख्यापनमेव । एवमात्मन एव परमसाधुत्वं वर्णितं भवतीति । एवमपि भवता कृतेस्मिन्नश्लीलादिदोषाशङ्का स्यादित्यत आह अभिधात्रिति । अभिधातृविशेषेण किं प्रयोजनं भवति । प्रामाणिकेन ह्यर्थक्रियाभिनिवेष्टव्या ॥

**ऊर्ध्वमेति मदनं त्रिवृताधो**
**वस्तुमात्रक इति प्रतिपाद्ये ।**
**मद्विधो यदि वदेदथवात्रिः**
**कथ्यतां क इव कर्मणि भेदः ॥**

अत्र चोर्ध्वमेति मदनमित्यादौ वस्तुमात्रे प्रतिपाद्ये यदि मद्विधो वदेदथवात्रिर्वदेत् कथ्यतां कर्मणि को विशेषः ॥

**साध्वसाध्विवधि विवेकवियुक्तो**
**लोकपङ्क्तिकृतभक्तिविशेषः ।**

बालिशो भवति नो खलु विद्वान्
सूक्त एव रमते मतिरस्य ॥

साध्वसाध्विति विवेकरहितो लोकपङ्क्त्यैवैकत्र कृतभक्तिविशेषो बालिश एवैवं भवति न तु विद्वान् । अस्य तु विदुषः पक्षपातेन विना सूक्त एव मती रमते ॥

इति मुनिवचनानां जीवितोपाश्रयाणा-
मभिलषितसमृद्धौ कल्पवृक्षोपमानाम् ।

यदुदितमिह पुण्यं कुर्वतो मेनुवादं
भवतु विगतरोगो निर्वृतस्तेन लोकः ॥

इत्येतेन निरशेषतन्त्रोक्तप्रकारेण मुनिवचनानामनुवचनं कुर्वतो मम यत् पुण्यमुदितं सञ्जातं तेन पुण्येन लोको विगतरोगो निर्वृतश्च भवतु । किम्भूतानां मुनिवचनानामाह । जीवितस्यावष्टम्भकानां तथा कल्पवृक्षसदृशाना-मभिलषितसमृद्धाविति ॥

इतीन्दुविरचितायामष्टाङ्गसंग्रहव्याख्यायां शशिलेखाख्यायामुत्तरे पञ्चाशोऽध्यायः ॥

॥ इत्यष्टमं वाजीकरणमङ्गं सम्पूर्णम् ॥

॥ इति श्रीसिंहगुप्तसूनुश्रीमद्वाग्भटाचार्यविरचितेऽष्टाङ्गसङ्ग्रहे षष्ठमुत्तरस्थानं सम्पूर्णम् ॥

॥ समाप्तश्चायं ग्रन्थः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

## सूत्रस्थानम् ।

# शुद्धपत्रिका ॥

| | | पृष्ठः | पंक्तिः | खण्डः |
|---|---|---|---|---|
| मूलं. | कुर्याद्विलेखनच्छेदभेदास्फोटनमर्दनमित्यनन्तरं "नाकार्येपि च कार्येपि मुखाङ्गनखवादनं" इत्यपि योजनीयम् ॥ | २१ | ७ | पूर्वः |
| मूलं. | आमोरुस्तम्भजठरकुच्छ्रालसकदण्डकान्— इत्यनन्तरं "तृष्णा प्रमीलकालस्थग्रहण्यर्शोभगन्दरान् । प्लीहविद्रधिविद्रधिसर्पमदात्यया-सपीनसान्" । इति योजनीयम् ॥ | ३० | १३ | उत्तरः |
| व्या- | येनाभिवृष्टमित्यतः पूर्वं— 'ननु गङ्गाम्बु न ज्ञायते । कतमत्तदित्यत उच्यते । येनाभिवृष्टमिति' । इति योजनीयम् ॥ | ३२ | ३ | उत्तरः |
| व्या- | शारिका प्रतुदेष्वित्यनन्तरं— 'श्वाविद्गोधे बिलेशयेषु । गृध्रमृगाधिपौ प्रसहेषु' । इति योज्यम् ॥ | ५० | ३१ | पूर्वः |
| व्या- | येनैव मद्येनेत्यतः पूर्वं — 'वर्षासु वातकोपकाले शतलं मधुशस्यते । इति कालस्वभावद्रव्यशक्तिविशेषः' इति योजनीयम् ॥ | ६१ | २ | उत्तरः |
| व्या- | भीतः सभय इत्यतः पूर्वं— 'तीव्रः शीघ्रोत्पत्तिविनाशो भयवेगत्रासः' इति योज्यम् ॥ | ६४ | १२ | उत्तरः |
| व्या- | इति हस्माहुरात्रेयादयोमहर्षयः इत्यनन्तरं— 'एककार्यकराणामौषधानां योऽर्थं कार्यकरः सोऽग्र्यः' इति योज्यम् ॥ | १०९ | १५ | पूर्वः |
| मूलं. | वायोरशीतिर्विकाराः इत्यनन्तरं— "चत्वारिंशत् पित्तस्य । विंशतिः श्लेष्मणः । तत्र वातविकाराः" इति योज्यम् ॥ | १४९ | १२ | उत्तरः |
| मूलं. | हिताहितयोस्तुल्यदर्शी स्यादित्यनन्तरं— "त्रिविधाश्च पुनर्व्याधयो मृदुमध्याधिकमात्रभेदेन । तत्राल्पलक्षणा मृदवः । मध्यलक्षणा मध्याः । सम्पूर्णलक्षणास्त्वधिकमात्राः । ते पुनः सुखसाध्यादिविशेषेण चतुर्द्धा प्रागुपदिष्टाः । सुबहुशोपि च भिद्यमाना व्याधयोनिजागन्तुतां न व्यभिचरन्ति" । इति योजनीयम् ॥ | १६३ | २ | उत्तरः |
| व्या- | प्रधानादुत्तरकालमुपक्रमेत इत्यनन्तरं— अथवा बलवन्तमुपद्रवं प्रधानमविरोधयन् प्रथममेवोपक्रमेत' । इति योजनीयम् ॥ | १६७ | २६ | पूर्वः |

| | | पृष्ठः | पङ्क्तिः | खण्डः |
|---|---|---|---|---|
| मूलं. | ग्रीष्मवर्षाकालयोस्तु इत्यस्यस्थाने— "शरद्ग्रीष्मयोस्त्वन्तरे । इति योज्यम् ।। | १७२ | ३ | पूर्वः |
| व्या— | उत्कृष्टस्थौल्यादिकान् सत इत्यनन्तरं— 'संशोधनैरौषधैर्लङ्घयेत् तथामदोषाद्यार्तान् मध्यस्थौल्यादिकान् सतः' इति योज्यम् ।। | १७८ | २१ | उत्तरः |
| व्या— | पुनरुष्णोदकं पिबेदित्यनन्तरं— 'उष्णोदके पीतेऽपि पुनः पिबेदित्यर्थः । तेन' इति योजनीयम् ।। | १८८ | ६ | पूर्वः |
| व्या— | य एवेत्यादिमूलतः प्राक्— 'अनन्तरमनुवासनस्य विषयप्रतिषेधावुच्येते । य एवेत्यादिना' । इति योजनीयम् ।। | २१४ | १९ | पूर्वः |
| मूलं. | न रात्रौ प्रणयेद्बस्तिं स्नेहोत्क्लेशो हि रात्रिजः— इत्यनन्तरं— 'स्नेहवीर्ययुतः कुर्यादाध्मानं गौरवं ज्वरम्" । इति योज्यम् ।। | २१६ | २५ | उत्तरः |
| मूलं. | गार्भिण्या इत्यतः पूर्वं— "दत्तवस्तीनां विवृतस्रोतस्तया अतिव्याप्त्या श्वासकासादीन्" । इति योजनीयम् ।। | २२६ | २० | पूर्वः |
| मूलं. | तस्य स्वास्थ्येन योगम् । जाड्यरसाज्ञानारुचि इत्यनन्तरं— प्रसेकोपलेपैरयोगम् । मुखशोषपाकक्लमारुचि" । इति योज्यम् ।। | २३४ | ८ | पूर्वः |
| मूलं. | पक्ष्मपरिहारेणाक्षिकोशालेपनं इत्यनन्तरं— "आश्च्योतनद्रव्यै"रिति योज्यम् ।। | २३६ | १ | पूर्वः |
| मूलं. | पायावित्यतः पूर्वं— "तद्वदेव कर्णेऽष्टांगुलनवांगुले द्वे" । इति योज्यम् ।। | २४४ | २२ | पूर्वः |
| व्या— | बन्धप्रतिषेधः इत्यनन्तरं— 'तथा क्षारदग्धादयश्च' । इति योज्यम् ।। | २६७ | १८ | उत्तरः |

## शारीरस्थानम् ।।

| | | | | |
|---|---|---|---|---|
| व्या— | यच्च शुक्लमित्यनन्तरं— 'व्यापकमपि मज्जप्रभृतिषु विशेषतः स्थितं'— इति योजनीयम् ।। | २७६ | १८ | पूर्वः |
| व्या— | कुटजादिकाथं इत्यनन्तरं— 'पिबेत । क्षीरिवृक्षप्रवालानां काथं समाक्षिकम्' । इति योजनीयम् ।। | २८० | २ | पूर्वः |
| मूलं. | सक्थिश्चशतमित्यनन्तरं— "तथा बाह्वोः इति योज्यम्" ।। | ३२८ | १७ | पूर्वः |
| मूलं. | __ यो इत्यनन्तरं— 'रक्षोभिस्सह नृत्यन्नप्सु मज्जति स उन्मादेन । यो नृत्यन् प्रेतेन ह्रियते' इति योज्यम् ।। | ३६७ | ५ | उत्तरः |

# अस्य पुस्तकस्य मुद्रापणार्थं कृतद्रव्यदानानामुदारचरितानां नामसंख्याशंसिनी

# पट्टिका ॥

| | | | | |
|---|---|---|---|---|
| १ | १०९० वृश्चिके २० दिने विहितराज्याधिकारत्यागः सर्. श्री रामवर्म जि. सि. एस्स्. ऐ. जि. सि. ऐ. इ. कोच्चिमहाराजः .... | क | २०० | ०० |
| २ | परीक्षित्त् कुञ्ञुण्णित्तम्पुरान् । ... .... .... | क | १५० | ०० |
| ३ | कोच्चुण्णित्तम्पुरान् । ... .... ... ... | क | १५० | ०० |
| ४ | करप्पुरंतेय्काट्ट नारायणन्नम्पूतिरि। .... .... ... | क | ३०० | ०० |
| ५ | गोपालदेशिकाचारि सर्वाधिकारि । ... ... .... | क | ७५ | ०० |
| ६ | मुण्टोळि नीलकण्ठन्नम्प्यार । .... ... .... | क | १५० | ०० |
| ७ | पालियत्तु वलियच्चन् । .... ... ... | क | १५० | ०० |
| ८ | चेरानेल्लूर कर्त्ताव् । ... ... ... | क | १५० | ०० |
| ९ | इक्कण्टत्तु कुञ्ञनवारियर । ... .... .... | क | १५० | ०० |
| १० | एळेटत्तुतय्काट्ट नारायणन्मूस्स् । .... .... .... | क | १०० | ०० |
| ११ | टि अनुजन दिवाकरन्मूस्स् । ... ... ... | क | १०० | ०० |
| १२ | पटतोट्ट अनुजनम्पूतिरिप्पाट्ट । .... .... ... | क | ७५ | ०० |
| १३ | चुनङ्ङनाट्टु काञ्ञूरु नम्पूतिरिप्पाट्टु ... .... .... | क | ७५ | ०० |
| १४ | देशमङ्गलत्तु काञ्ञूरुमनय्क्कत्तनिन्न् । .... ... ... | क | ७५ | ०० |
| १५ | एटप्पिळ्ळि राजाव् । ... ... .... .... | क | ७५ | ०० |
| १६ | माङ्कायित् पणिय्कर । ... .... .... | क | ७५ | ०० |
| १७ | अय्यनाट्टपारायि तरकन् ... ... ... | क | ७५ | ०० |
| १८ | वरिय्काश्शेरि नम्पूतिरिप्पाट्टु । .... .... ... | क | ५० | ०० |
| १९ | किळिळमङ्गलत्तु नट्टुवत्तुमनय्क्कत्तनिन्न् .... .... | क | ५० | ०० |
| २० | अकिरियात्तु नम्पूतिरि । ... .... .... .... | क | ५० | ०० |
| २१ | उमयूरु कृष्णवारियर । .... .... .... | क | १५० | ०० |
| २२ | तृक्कोवित् वारियत्तु उळ्ळवारियर । ... ... ... | क | १५० | ०० |
| | आके .... | क | २६७५ | ०० |